~~Henry Marsh~~
J. Edward Hall.

# MENU SANHITA:

THE

# INSTITUTES OF MENU,

WITH

The Commentary

OF

KULLÚKA BHATTA.

VOL. II.

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE OF PUBLIC INSTRUCTION.

Calcutta:

PRINTED AT THE EDUCATION PRESS, CIRCULAR ROAD.

1830.

# मनुसंहिता

तट्टीका च

मन्वर्थमुक्तावलीनाम्नी श्रीकुल्लूकभट्टेन कृता।

द्वितीयोभागः।

श्रीयुत कमिटि साहेबानुज्ञया कलिकाताराजधान्यां

एडुकेशन् मुद्रा यन्त्रालये मुद्रिता।

संवत् १८८६ शकाब्दाः १७५१।

ई सन १८३०।

## ॥ ८ अष्टमोऽध्यायः ॥

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभां॥१॥

व्यवहारानिति। एवंविधविषयसमीहितः प्रजानां रक्ष-
णाद्यार्थमुत्पादितानामेवैतरेतरविवादजपीडापरिहारार्थम्।
ऋणादानाद्यष्टादशविषयो विरुद्धार्थाभिप्रत्यर्थिवाक्यजनित-
सन्देहहारी विचारएव व्यवहारः। यदाह कात्यायनः।
विनानार्थेऽव सन्देहे हरणं हारउच्यते। नानासन्देहहरणा-
द्व्यवहारइति स्मृतः। तान् व्यवहारान् द्रष्टुमिच्छन् पृथिवी-
पतिर्ब्राह्मणैर्व्यवहारविद्भिर्मन्त्रज्ञैरमात्यैश्च मन्त्रणायोग्यैः
सहाप्रमत्तैः सह विनीतो वाक्पाणिपादचापलविरहयुक्तः
अविनीते हि नृपे वादिप्रतिवादिनां प्रतिभाभ्रंशात्सम्यगभिधाने
तत्त्वनिर्णयो न स्यात् तादृशोधर्मासनाख्यां सभां प्रविशेत्। व्यव-
हारदर्शनञ्चेदं प्रजानामितरेतरपीडायां तत्त्वनिर्णयेन
रक्षार्थं यज्ञमादृष्टादृष्टार्थंकरणफलेनेव फलवत्॥१॥

तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम्।
विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यिणां ॥ २ ॥

तत्रेत्यादि। तस्याञ्च सभायां कार्य्यगौरवापेक्षयामुपविष्टोऽथवापि कार्य्ये उत्थितोपि वा पाणिमंशोपरि दक्षिणबाहुमुद्यम्य अनुद्धतवेषालङ्कारः पूर्व्वश्लोके दर्शितान्यौद्धत्यमुक्तं तादृशः कार्य्याणि विचारयेत्॥ २॥

प्रत्यहन्देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः। अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक्॥ ३॥

प्रत्यहमित्यादि। तानि च ऋणादानादीनि कार्य्याणि अष्टादशसु व्यवहारमार्गेषु विषयेषु पठितानि देशजातिकुलव्यवहारावगतैः शास्त्रावगतैः साक्षिदिव्यादिभिर्हेतुभिः पृथक् पृथक् प्रत्यहं विचारयेत्। तान्येवाष्टादश गणयति॥ ३॥

तेषामाद्यमृणादानन्निक्षेपोऽस्वामिविक्रयः।
सम्भूय च समुत्थानन्दत्तस्यानपकर्म्म च॥ ४॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥ ५॥
सीमाविवादधर्म्मश्च पारुष्ये दण्डवाचिके।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च॥ ६॥

**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च। पदा न्यष्टादशैतानि व्यवहारस्थिताविह॥ ७॥**

तेषामिति। वेतनस्यैवचेति। सीमेति। स्त्रीपुंधेति। तेषा मष्टादशानां मध्ये आद्यमिदं ऋणादानं विचार्यते। तत्र ऋणमुत्तमर्णादेर्देयं। अथ देयमदेयञ्च येन यत्र यथा च यत्। दानग्रहणधर्माश्च तदृणादानमुच्यते। ततश्च धनस्वाम्य स्मिन् अर्पणरूपो निःक्षेपः। अस्वामिना च कृतो विक्रयः। संभूय वणिगादीनां क्रियानुष्ठानं। दत्तस्य धनस्यापाकरणं क्रोधा दिना वा पश्चात्। कर्मकरस्य भृतेरदानं। कृतव्यवस्थातिक्रमः क्रयविक्रये च कृते पश्चात्तापादिप्रतिपत्तिः। स्वामिपशुपाल योर्विवादः। ग्रामादिसीमाविप्रतिपत्तिः। वाक्पारुष्यमाक्रो शादि दण्डपारुष्यं ताडनादि। स्तेयं निह्नवेन धनग्रहणं। साहसञ्च प्रसह्य धनहरणादि। स्त्रियाश्च परपुरुषसम्पर्कः। स्त्रीसहितस्य पुंसो धर्मः व्यवस्था। पैतृकादिधनस्य च विभागः। अक्षादिक्रीडा पणव्यवस्थापनपूर्वकं पक्षिमेषादिप्राणिबोधनं। एतान्येव अष्टादश एतानि व्यवहारप्रवृत्तेः स्थानानि। समाह्वयस्य प्राणिद्यूतरूपत्वेन द्यूतावान्तरविशेषत्वात् अष्टादशपदोप पत्तिः॥ ४॥ ५॥ ६॥ ७॥

**एषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम्। धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम्॥ ८॥**

एष्विति। एषु ऋणादानादिषु व्यवहारस्थानेषु

बाहुल्येन विवादं कुर्व्वतां मनुष्याणां अनादिपारम्पर्य्यागत त्वेन नित्यं धर्म्ममवलम्ब्य कार्य्यनिर्णयं कुर्य्यात्। भूयिष्ठग्रहणा न्यान्यपि विवादपदानि सन्तीति सूचयति। तानि च प्रकीर्णक शब्देन नारदायुक्तानि। अतएव नारदः। न दृष्टं यच्च पूर्व्वेषु सर्व्वं तत्स्यात्प्रकीर्णकमिति ॥ ८ ॥

यदा स्वयन्न कुर्य्यात्तु नृपतिः कार्य्यदर्शनम्।
तदा नियुञ्ज्याद्विद्वांसम्ब्राह्मणं कार्य्यदर्शने ॥ ९ ॥

यदेत्यादि। यदा कार्य्यान्तराकुलतया रोगादिना वा राजा स्वयं कार्य्यदर्शनं न कुर्य्यात्तदा तद्दर्शनार्थं कार्य्य दर्शनाभिज्ञं ब्राह्मणं नियुञ्जीत ॥ ९ ॥

सोऽस्य कार्य्याणि सम्पश्येत्सभ्यैरेव त्रिभिर्वृतः।
सभामेव प्रविश्याग्र्यामासीनः स्थितएव वा ॥ १० ॥

सोऽस्येति। स ब्राह्मणोऽस्य राज्ञोऽर्थिप्रत्यर्थिनां कार्य्याणि त्रिभिर्ब्राह्मणैः सभायां साधुभिर्धार्म्मिकैः कार्य्यदर्शनाभिज्ञैर्वृतः तामेव सभाम्प्रविश्योपविश्य स्थितोवा नतु चंक्रम्यमाणः तत्र त्रिचत्वार्य्येवसभावाक्सङ्घ्यवादानादीनि कार्य्याणि पश्येत् ॥ १० ॥

यस्मिन्देशे निषीदन्ति विप्रावेदविदस्त्रयः। राज्ञ
श्चाधिकृतोविद्वान् ब्रह्मणस्तां सभां विदुः ॥ ११ ॥

यस्मिन्निति। यस्मिन् स्थाने ऋग्यजुःसामवेदिनस्त्रयोपि
ब्राह्मणा अवतिष्ठन्ते राज्ञाधिकृतश्च विद्वान् ब्राह्मणएव प्रकृत
ादवतिष्ठते तां सभां चतुर्मुखसभामिव मन्यन्ते ॥ ११ ॥

धर्मोविद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते। शल्यं
चास्य न कृन्तन्ति विद्धास्तत्र सभासदः ॥ १२ ॥

धर्मइति। भाः प्रकाशः तथा सह वर्त्ततइति विद्वांसइति
देवाच सभाशब्देनाभिमता यत्र ईदृशे सभां विद्वांसइतिरूपा
धर्मः सत्याभिधानसत्योऽनृताभिधानरूपेणाधर्मेण पीडित
आगच्छति अर्थिप्रत्यर्थिनोर्मध्ये एकस्य सत्याभिधानाद
परस्य मृषावादात् तेच सभासदोऽस्य धर्मस्य पीडाकरत्वात्
शल्यमिवाधर्मं नोद्धरन्ति तदा ते एव तेनाधर्मशल्येन विद्धा
भवन्ति ॥ १२ ॥

सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम्।
अब्रुवन्विब्रुवन् वापि नरोभवति किल्बिषी ॥ १३ ॥

यतएवमतः सभामिति। सभामयनस्य व्यवहारदर्शनार्थं
तत्प्रवेशेन कर्त्तव्यः प्रविष्टेनवा सत्यमेव वक्तव्यम्। अब्रुवा

तूष्णीमवतिष्ठमानोऽनृताभाषी वदन् उभयथापि सभ्यः पापी भवति। मेधातिथिना तु। सभा वा न प्रवेष्टव्यावदन्ति चस्मैव पठितम्॥१३॥

यत्र धर्मोह्यधर्मेण सत्यं यत्रानृतेन च। हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः॥१४॥

यत्रेत्यादि। यस्यां सभायां अर्थिप्रत्यर्थिभ्यां अधर्मेण धर्मोऽन हन्यते यत्र च साक्षिभिः सत्यमनृतेन नाश्यते सभा सदां प्रेक्षमाणानामज्ञानवाद्व्य ते प्रतीकारक्षमान भवन्ती त्यर्थः। षष्ठीचानादरेऽत्यनेन षष्ठी। तत्र तएव सभासद स्तेन पापेन हताभवन्ति॥१४॥

धर्मएव हतोहन्ति धर्मोरक्षति रक्षितः। तस्मा द्धर्मोन हन्तव्योमा नोधर्मोहतोवधीत्॥१५॥

धर्मइत्यादि। यस्माद्धर्मएवातिक्रान्तदृष्टानिष्टाभ्यां यद् नाशयति चार्थिप्रत्यर्थ्यादिः। सएवानतिक्रान्तः ताभ्यां यद् रक्षति तस्माद्धर्मोनातिक्रमणीयः माऽस्मान् मद्धविताम् अति क्रान्तोधर्मोवधीदिति सभ्यानामुत्पन्नप्रहत्ते प्राड्विवाकस्यो क्तमिदम् अथवा नो नियेधेऽयम् नोहतोधर्मोमावधीत् नच स्योत्पभिप्रायः॥१५॥

वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम्।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत्॥ १६॥

वृष इत्यादि। कामान् वर्षतीति वृषः वृषशब्देन धर्म एवाभिधीयत इति। अलंशब्दो वारणार्थः। यस्माद्धर्मस्य यो वारणं करोति तद्देवास्तं वृषलं जानन्ति न जातिवृषलम् अतो हिंसादिलोपः। तस्माद्वृषं नोच्छिन्द्यादिति धर्मव्यतिक्रमभयार्थं वृषलशब्दार्थनिर्वचनम्॥ १६॥

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः। शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥ १७॥

एक इत्यादि। धर्म एवैको मित्रं लोकान्तरेऽपि अभीष्टफलदानार्थमनुगच्छति। यस्मादन्यत्सर्वं भार्यापुत्रादि शरीरेणैव सहादर्शनं गच्छति। तस्मात् पुत्रादिलोभेनापि धर्मो न त्याज्यः॥ १७॥

पादोऽधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति।
पादः सभासदः सर्वान् पादो राजानमृच्छति॥ १८॥

पाद इत्यादि। दुर्व्यवहारदर्शनादधर्मजन्यश्चतुर्थांशोऽर्थिनमधर्मकर्त्तारं प्रत्यर्थिनं वा गच्छति। एवञ्चतुर्थांशः

साक्षिणमसत्यवादिनं। अन्यपादः सभासदस्सर्वान् व्याप्नोति। पादश्च राजानं व्रजति। सर्व्वेषामपापमन्योभवतीत्यच विव चितम् ॥ १८ ॥

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः। एनो गच्छति कर्त्तारन्निन्दार्होयच निन्द्यते ॥ १९ ॥

राजेत्यादि। यस्मात्पुनः सभायामसत्यवादित्वात् निन्दार्हो ऽर्थीप्रत्यर्थी वा सम्यङ्न्यायदर्शनेन निन्द्यते। तच राजा निष्पापोभवति। सभासदश्च पापेन न संबध्यन्ते। अर्थ्यादिक मेव कर्त्तारम्पापमुपैति ॥ १९ ॥

जातिमाचोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः। धर्म्मप्रवक्ता नृपतेर्नतु शूद्रः कथञ्चन ॥ २० ॥

जातिमाचेति। ब्राह्मणजातिमाचं यस्य विद्यते नतु ब्राह्मण कर्मानुष्ठानं वणिगादिवत्ताच्छादिदारेण स्फुटन्यायान्याय निरूपणसमोब्राह्मणजातिरपि वा यं सन्दिग्धात्मा ब्राह्मणं ब्रवीति स वरं उभयोरप्यब्राह्मणाभावे कश्चित्कार्य्यदर्शने नृपते र्भवेन्नतु धार्म्मिकोपि व्यवहारज्ञोपि शूद्रः। ब्राह्मणोधर्म्मप्रव क्तेति विधानादेव शूद्रनिवृत्तिः सिद्धा पुनर्नतु शूद्रइति

शूद्रनिषेधोयोग्यब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थः। अतएव कात्यायनः। यत्र विप्रो न विद्वान् स्यात्क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥ २०॥

यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम्। तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः॥ २१॥

यस्येत्यादि। यस्य राज्ञो धर्मविवेचनं शूद्रः कुरुते तस्य पश्यतएव पङ्के गौरिव तद्राष्ट्रमवसन्नं भवति॥ २१॥

यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजं। विनश्यत्याशु तत्कृत्स्नं दुर्भिक्षव्याधिपीडितम्॥ २२॥

यदित्यादि। यद्राष्ट्रं शूद्रबहुलं परलोकाभाववादिनाक्रान्तं द्विजशून्यं तत्समग्रं दुर्भिक्षरोगपीडितं सत् शीघ्रं विनश्यति। यस्मात् शास्त्राहुतिः सम्यगित्यस्याभावेन वृष्टिविरहात् उपजातदुर्भिक्षरोगाद्युपसर्गशान्त्यर्थकर्माभावाच्च॥ २२॥

धर्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्॥ २३॥

धर्मासनमिति। धर्मदर्शनार्थमासनमुपविश्य वाससाच्छादितदेहोऽनन्यमना लोकपालेभ्यः प्रणामं कृत्वा कार्यदर्शनमनुतिष्ठेत्॥ २३॥

अर्थानर्थावुभौ बुद्ध्वा धर्म्माधर्म्मौ च केवलौ।
वर्णक्रमेण सर्व्वाणि पश्येत्कार्य्याणि कार्य्यिणां ॥२४॥

अर्थानिति। प्रजारक्षणे चेदनावात्मकावैहिकावर्थानर्थौ बुद्ध्वा परलोकार्थञ्च धर्म्माधर्म्मौ केवलावनुरुध्य यथाविरोधेन भवति तथा कार्य्यार्थिनां कार्य्याणि पश्येत्। बहुवर्णमेलकेतु ब्राह्मणादिक्रमेण पश्येत् ॥२४॥

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥२५॥

बाह्यैरिति। बाह्यैः स्वरादिभिर्लिङ्गैरित्यभिधानादवधारिताव्यभिचारैः अर्थिप्रत्यर्थिनामन्तर्गतमभिप्रायं निरूपयेत्। स्वरो गद्गदादिः। वर्णः स्वाभाविकवर्णादन्यादृशो मुखकालिमादिः। इङ्गितमधोनिरीक्षणादिः। आकारो देहभवस्वेदरोमाञ्चादिः। चेष्टा हस्तास्फालनादिः ॥२५॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतम्मनः ॥२६॥

यस्मात् आकारैरिति। आकारादिभिः पूर्वोक्तैः गत्या स्खलत्पादादिकया अन्तर्गतं मनोबुद्धिरूपेण परिणतमवधार्य्यते ॥२६॥

बालदायादिकं रिक्थं तावद्राजानुपालयेत्।
यावत्स स्यात्समावृत्तो यावच्चातीतशैशवः॥ २७॥

बालदायेति। अनाथबालस्वामिकधनमपितृव्यादिभिरन्यायेन ह्रियमाणं तावद्राजा रक्षेत् यावदसौ षट्त्रिंशदाब्दिकं ब्रह्मचर्य्यमित्याद्युक्तेन प्रकारेण गुरुकुलात् समावृत्तो न भवति। नाद्यस्याव्यवहारकालाविगमात्। यत्र ब्रह्मचर्य्याद्विना बाल एव समावर्त्तते सोपि यावदतीतबाल्योभवति तावत्तस्य धनं रक्षेत्। बाल्यञ्च षोडशवर्षपर्य्यन्तम्। बाल आषोडशाद्वर्षा दिति नारदवचनात्॥ २७॥

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च॥ २८॥

वशेत्यादि। वशासु वन्ध्यासु कृतदारान्तरपरिग्रहः स्वामी निर्वासार्थोपकल्पितधनोपायासु निरपेक्षः। अपुत्रासु च स्त्रीषु प्रोषितभर्तृकासु। निष्कुलासु सपिण्डरहितासु साध्वीषु च स्त्रीषु विधवासु रोगिणीषु च रक्षणं तथापि बालधनवदेव राज्ञा रक्षणं कर्त्तव्यम्। अथ चानेकमन्त्रोपादाने गोवलीवर्दन्यायेन पुनरुक्तिपरीहारः॥ २८॥

जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः। तां
ञ्छिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः॥ २९ ॥

जीवन्तीनामिति। वयमचामन्तराधिकारिणोऽस्माम
इदन्धनमित्यादिव्याजेन ये बान्धवास्तासाञ्जीवन्तीनान्तद्धनं
गृह्णन्ति तान् वक्ष्यमाणचौरदण्डेन धार्मिकोराजा दण्डयेत्
॥ २९ ॥

प्रनष्टस्वामिकं रिक्थं राजात्र्यब्दन्निधापयेत्।
अर्व्वाक्त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत्॥ ३० ॥

प्रनष्टेति। अज्ञातस्वामिकधनं राजा कस्य किमनष्ट
मित्येवम्पटहादिना उद्घोष्य राजद्वारादौ रक्षितं वर्षत्रयं
स्थापयेत्। वर्षत्रयमध्ये यदि धनस्वाम्यागच्छति तदा स एव
गृह्णीयात्। तदूर्द्धन्तु नृपतिर्विनियुञ्जीत॥ ३० ॥

ममेदमिति योब्रूयात्सोऽनुयोज्योयथाविधि।
संवाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति॥ ३१ ॥

ममेदमित्यादि। मदीयन्धनमिति योवदति स किं रूपं
किं संख्याकं कुत्र प्रनष्टं तद्धनमित्यादिविधानेन प्रष्टव्यः। ततो

यदि रूपसंख्यादीन् सत्यान् वदति तदा स तस्य धनस्वामी तद्धनं ग्रहीतुमर्हति ॥ ३१ ॥

अवेदयानो नष्टस्य देशं कालञ्च तत्त्वतः। वर्णं रूपम्प्रमाणञ्च तत्समन्दण्डमर्हति ॥ ३२ ॥

अवेदयान इत्यादि। नष्टद्रव्यस्य देशकालौ यस्मिन् देशे यस्मिन् काले नष्टमिति। तथा वर्णं शुक्लाद्याकारं कटकमुकुटादिं परिमाणञ्च यथावदजानन्नष्टद्रव्यसमं दण्डमर्हति ।
॥ ३२ ॥

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतान्धर्ममनुस्मरन् ॥ ३३ ॥

देशकालादिसंवादे पुनराददीतेति। यदेतद्राज्ञा प्रनष्टद्रव्यं प्राप्तं तस्मात् षड्भागन्दशमं द्वादशं वा रक्षादिनिमित्तं पूर्वेषां साधूनामयन्धर्म इति जानन् राजा गृह्णीयात्। अत्र स्वामिनो निर्गुणत्वगुणवत्त्वापेक्षयायं षड्भागादिग्रहणविकल्पः। अवशिष्टं स्वामिने समर्पयेत् ॥ ३३ ॥

प्रनष्टाधिगतन्द्रव्यन्तिष्ठेद्युक्तैरधिष्ठितम्। यां
स्तत्र चौरान् गृह्णीयात्तान्राजेभेन घातयेत्॥ ३४॥

प्रनष्टेति। यद्द्रव्यन्तस्यापि प्रनष्टं सत् राजपुरुषैः प्राप्तं रक्षा युक्तैः रक्षितं कृत्वा राज्ञा स्थाप्यं तस्मिंश्च द्रव्ये यांश्चौरान् गृह्णीया त्तान्हस्तिना घातयेत्। गोविन्दराजस्तु। शतादभ्यधिके वध इतिदर्शनात् अत्रापि शतसुवर्णमूल्याधिकद्रव्यहरणे वध माह। तन्न। तत्र सन्धिं कृत्वा तु ये चौर्य्यमितिवत्स्वल्पेपि प्रनष्टराजरक्षितद्रव्यहरणेनैव विशेषेण वधविधानात् शता दभ्यधिके वधइत्यस्य विशेषोपदिष्टवधेतरविषयत्वात्॥ ३४॥

ममायमिति योब्रूयान्निधिं सत्येन मानवः।
तस्याददीत षड्भागं राजा द्वादशमेव वा॥ ३५॥

ममायमितीति। योमानुषः स्वनिधिं स्वस्मा अन्येन वा निधौ प्राप्ते ममायन्निधिरिति वदति सत्येन प्रमाणेन च स्वत्वमस्य बोधयति तस्य पुरुषस्य निर्गुणत्वसगुणत्वापेक्षया ततोनिधानात् षष्ठभागं द्वादशभागं वा राजा गृह्णीयात्। अवशिष्टं तस्यार्पयेत्॥ ३५॥

अनृतं तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमं।
तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम् ॥३६॥

अनृतमिति। मदीयं मीयमिति ब्रुवन् स्वधनस्याष्टमभाग
न्दण्ड्यः। यद्वा तस्यैव निधेरल्पमल्पभागं गणयित्वा येनाव
सादं न गच्छति न विरोधं लभते तद्दण्ड्यः। अल्पीयसी
मित्यीयस्त्वमनिर्देशात्पूर्वस्मादन्योऽयं दण्डः। विकल्पश्च नि
र्गुण सगुणापेक्षः ॥ ३६ ॥

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्व्वोपनिहितन्निधिम्।
अशेषतोऽप्याददीत सर्व्वस्याधिपतिर्हि सः ॥ ३७ ॥

विद्वांस्त्विति। विद्वान्पुनर्ब्राह्मणः पूर्व्वैरुपनिहितं निधिं
दृष्ट्वा सर्व्वं गृह्णीयात्। न षड्भागमप्यदद्यात्। यस्मात्सर्व्वस्य
जगतोऽयं प्रभुः। अत एवोक्तं। सर्व्वं स्वं ब्राह्मणस्येदमिति।
तस्मात्परनिहितविषयमेतद्वचनम्। तथा च नारदः। परेण
निहितं लब्ध्वा राजा ह्युपहरेन्निधिं। राजगामी निधिः
सर्व्वः सर्व्वेषां ब्राह्मणादृते। याज्ञवल्क्योऽप्याह। राजा लब्ध्वा
निधिं दद्याद् द्विजेभ्योऽर्द्धं द्विजः पुनः। विद्वानशेषमादद्यात्स
सर्व्वस्य प्रभुर्यतः। अतो मेधातिथिगोविन्दराजाभ्यां समाप

मिति योऽभूयादित्युक्तं राजदेयांशनिरासार्थं पित्रादिनिहितविषयत्वमेवास्य वचनस्य व्याख्यातम्। तदनार्षं नारदादिमुनिव्याख्याविपरीतं सकल्पितम्। न मेधातिथिगोविन्दराजव्याख्यानमाद्रियते ॥ ३७ ॥

यस्तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ।
तस्मात् द्विजेभ्योदत्त्वार्द्धमर्द्धं कोषे प्रवेशयेत् ॥ ३८ ॥

यस्त्विति। यं पुनरस्वामिकं पुरातनभूम्यन्तर्गतं निधिं राजा लभते तस्माद्ब्राह्मणेभ्योऽर्द्धं दत्त्वाऽर्द्धमात्मीयधनागारे प्रवेशयेत् ॥ ३८ ॥

निधीनान्तु पुराणानां धातूनामेव च क्षितौ।
अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥ ३९ ॥

निधीनामिति। निधीनां पुरातनानां अस्वकीयानां विद्वद्ब्राह्मणेतरलब्धानां सुवर्णाद्युत्पत्तिस्थानानां धातूनामर्द्धहरो राजा यस्माद्यो रक्षति भूमेश्च प्रभुः ॥ ३९ ॥

दातव्यं सर्व्ववर्णेभ्योराज्ञा चौरैर्हृतन्धनम्।
राजातदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम्॥४०॥

दातव्यमिति। यद्धनञ्चौरैर्लोकानामपहृतं तद्राज्ञा चौरेभ्य आहृत्य धनस्वामिभ्योदेयम्। तद्धनं राजा स्वयमुपयुञ्जान चौरस्य पापं प्राप्नोति॥४०॥

जातिजानपदान् धर्म्मान् श्रेणीधर्म्मांश्च धर्म्मवित्।
समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं प्रतिपादयेत्॥४१॥

जातिजानेति। जातिधर्म्मान् ब्राह्मणादिजातिनियतान् याजनादीन् जानपदांश्च नियतदेशव्यवस्थितान् शास्त्राविरुद्धान्। देशजातिकुलधर्म्माश्च आम्नायैरप्रतिषिद्धाः प्रमाणमिति गौतमस्मरणात्। श्रेणीधर्म्मांश्च वणिगादिधर्म्मान् प्रतिनियतकुलव्यवस्थितान् शास्त्राविरुद्धान् राजा व्यवहारेषु तत्तद्धर्म्मान् व्यवस्थापयेत्॥४१॥

स्वानि कर्म्माणि कुर्व्वाणादूरे सन्तोपि मानवाः।
प्रियाभवन्ति लोकस्य स्वे स्वे कर्म्मण्यवस्थिताः॥४२॥

स्वान्स्वानीत्यादि। जातिदेशकुलधर्म्मादीन्यात्मीयकर्म्माणि अनुतिष्ठन्तः स्वे स्वे च नित्यनैमित्तिकादौ कर्म्मणि वर्त्तमानाः दूरेपि सन्तः वाणिज्यनिबन्धनलोकाभावेपि लोकस्य प्रिया भवन्ति॥४२॥

नोत्पादयेत् स्वयं कार्य्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥ ४३ ॥

प्रासङ्गिकमिदमभिधाय पुनःप्रकृतमाह नोत्पादयेदिति । राजा राजनियुक्तोवा पुरुषोधनलोभादिना कार्य्यमृणादिविवादं नोत्पादयेत् । तदाह कात्यायनः । न राजा तु वशित्वेन धनलोभेन वा पुनः । स्वयंकर्म्माणि कुर्व्वीत नराणामविवादिनाम् । नचार्थिना प्रत्यर्थिना वा आवेदितं विवादन्धनादि लोभेनोपेक्षेत ॥ ४३ ॥

यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ।
नयेत्तथानुमानेन धर्म्मस्य नृपतिः पदम् ॥ ४४ ॥

यथेत्यादि । यथा मृगस्य प्रहतस्य रुधिरपातैः व्याधः पदं स्थानं प्राप्नोति तथानुमानेन दृष्टप्रमाणेन वा राजा धर्म्मस्य तत्त्वं निश्चिनुयात् ॥ ४४ ॥

सत्यमर्थञ्च सम्पश्येदात्मानमथसाक्षिणः ।
देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥ ४५ ॥

सत्यमित्यादि । व्यवहारदर्शनप्रवृत्तोराजा छलमपहाय सत्यम्पश्येत् तथार्थञ्च । धर्म्मादिनामलघीयोऽल्पः । सर्व्ववक्तं

गोहिरण्यादिधनविषयकं व्यवहारमवेक्षेत् न तदुभयेनापि निक्षेपकेनोपदर्शितरूपादिरूपापराधं। आत्मानञ्च तत्फलि संबन्धस्वर्गादिफलभागिनं साक्षिणः सत्यवादिनः देशं कालञ्च देशकालोचितं स्वरूपं व्यवहारस्वरूपं गुरुलघुतादिकमवेक्षेत् ॥४५॥

सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः। तद्देशकुलजातीनामविरुद्धम्प्रकल्पयेत् ॥ ४६ ॥

सद्भिरित्यादि। विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यद्धर्म्यमाचारानुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। एतच्च सकलव्यवहारसाधारणं परिभाषात्मकमुक्तं ॥४६॥

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः। दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

इदानीं ऋणादानमधिकृत्याह अधमर्णेति। अधमर्णार्थसिद्ध्यर्थमुत्तमर्णधनसिद्ध्यर्थं धनस्वामिना राजा चोदितोऽधमर्णाद् लेख्यादिप्रमाणप्रतिपादितधनमुत्तमर्णस्याधमर्णं प्रदापयेत्। अधमर्णादुत्तमर्णाय दापयेदित्यर्थः ॥४७॥

नोत्पादयेत् स्वयं कार्य्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥ ४३ ॥

प्रायश्चित्तमिदमभिधाय पुनःप्रकृतमाह नोत्पादयेदिति । राजा राजनियुक्तो वा पुरुषो धनलोभादिना कार्य्यमृणादिविवादं नोत्पादयेत् । तदाह कात्यायनः । न राजा तु वशित्वेन धनलोभेन वा पुनः । स्वयं कर्म्माणि कुर्व्वीत नराणामविवादिनाम् । न चार्थिना प्रत्यर्थिना वा चावेदितं विवादञ्च धनादि लोभेनोपेक्षेत ॥ ४३ ॥

यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ।
नयेत्तथानुमानेन धर्म्मस्य नृपतिः पदम् ॥ ४४ ॥

यथेत्यादि । यथा मृगस्य प्रहतस्य रुधिरपातैः व्याधः पदं स्थानं प्राप्नोति तथानुमानेन दृष्टप्रमाणेन वा राजा धर्म्मस्य तत्त्वं निश्चिनुयात् ॥ ४४ ॥

सत्यमर्थञ्च सम्पश्येदात्मानमथ साक्षिणः ।
देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥ ४५ ॥

सत्यमित्यादि । व्यवहारदर्शनप्रवृत्तो राजा छलमपहाय सत्यम्पश्येत् तथार्थञ्च । धर्म्मादीनामन्यतमो योऽर्थः । अर्थवत्त्वं

गोहिरण्यादिधनविषयं व्यवहारमब्रवीत् न तदसमर्थेनापि निक्षेपणेनोपदर्शितरथ्यादिकस्यापराधं। आत्मानञ्च तन्निर्णयेन स्वर्गादिफलभागिनं साक्षिणः सत्यवादिनः देशं कालञ्च देशकालोचितं स्वरूपं व्यवहारस्वरूपं गुरुलघुतादिकमवेक्षेत ॥ ४५ ॥

सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः। तद्देश कुलजातीनामविरुद्धं प्रकल्पयेत् ॥ ४६ ॥

सद्भिरित्यादि। विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यद्भूयसा आचरणमनुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। एतच्चोक्तव्यवहाराधारत्वं परिभाषात्मकमुक्तं ॥ ४६ ॥

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः। दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

ऋणेति ऋणादानमधिकृत्याह अधमर्णेति। अधमर्णार्थसिद्ध्यर्थमुत्तमर्णधनसिद्ध्यर्थं धनस्वामिना राजा बोधितोऽधमर्णात् लेख्यादिप्रमाणप्रतिपादितमृणमुत्तमर्णस्य धनार्थं प्रदापयेत्। अधमर्णादुत्तमर्णाय दापयेदित्यर्थः ॥ ४७ ॥

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः। तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम्॥ ४८॥

कथन्दापयेदित्याह यैर्यैरिति। यैर्वक्ष्यमाणैरुपायैः संप्रयुक्तमर्थमुत्तमर्णो लभते तैस्तैरुपायैर्वशीकृत्य तमर्थं दापयेत्॥ ४८॥

धर्म्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च॥ ४९॥

तानुपायानाह धर्म्मेणेत्यादि। धर्म्मादिना प्रयुक्तमर्थं साधयेत्तत्र धर्म्मानाह बृहस्पतिः। सुहृत्सम्बन्धिसंदिष्टैःसाम्ना चानुगमेन च। प्रायेण वा ऋणी दाप्योधर्मएषउदाहृतः। देये धनेऽधमर्णस्य विप्रतिपत्तौ व्यवहारेण। तथाच वक्ष्यति। अर्थेऽपव्ययमानन्त्विति। मेधातिथिस्तु। निक्षेपः सव्यवहारेण दापयितव्यः अन्यत्कर्मोपकरणमर्थं दत्वा कृषिवाणिज्यादिना व्यवहारयितव्यः तदुत्पन्नं धनं तस्मात् गृह्णीयादित्याह। छलादीनि चोक्ताह बृहस्पतिः। छद्मना याचितञ्चार्थमानीय ऋणिकाद्धनी। अन्याहृतादि वा हृत्य दाप्यते तत्र सोपधिः। दारपुत्रपशून् हत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते। बद्धा स्वगृहमानीय ताडनाद्यैरुपक्रमैः। ऋणिकोदाप्यते यत्र बलात्कारः सकीर्त्तितः॥ ४९॥

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात्। न स राज्ञाभियोक्तव्यः स्वकं संसाधयन्धनम्॥५०॥

य इत्यादि। य उत्तमर्णः स्वप्रतिपन्नमर्थमधमर्णात्स्वयमुपायादिना साधयति स स्वीयधनं सम्यक्साधयन् मत्समास निवेद्य किमिति बलादिदं कृतवानसीति न राज्ञा नियोक्तव्यः ॥५०॥

अर्थेऽपव्ययमानन्तु करणेन विभावितम्। दापयेद्धनिकस्यार्थन्दण्डलेशञ्च शक्तितः॥५१॥

अर्थ इति। नाहमस्मै धारयामीति धनविषये अपह्नुवानं अधमर्णं करणेन लेख्यसाक्षिदिव्यादिना प्रतिपादितमर्थमुत्तमर्णाय राज्ञा प्रदापयेत्। दण्डलेशञ्च अपह्नवे तु द्विगुणमिति वक्ष्यमाणदण्डमानरूपादूनमपि दण्डं पुरुषशक्त्या दापयेत्॥५१॥

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि। अभियोक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत्॥५२॥

अपेति। उत्तमर्णेन धनं देहीति सभायामाह्वायकेन उक्तेनाधमर्णेन नास्मै धारयामीति अपलापे कृते अभि

लोकार्थी देशजनप्रयोगदेशवर्त्तिसाक्षिभिर्निर्द्दिशेत् । प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणजनविषयात् प्राक् साक्ष्युपन्यासः अन्यदा करणमपादि कथयेत् ॥ ५२ ॥

अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः । यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यते ॥ ५३ ॥

अपदिश्यापदेश्यञ्च पुनर्यस्त्वपधावति । सम्यक् प्रणिहितञ्चार्थम्पृष्टः सन्नाभिनन्दति ॥ ५४ ॥

असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः । निरुच्यमानं प्रश्नञ्च नेच्छेद्यश्चापि निष्पतेत् ॥ ५५ ॥

ब्रूहीत्युक्तश्च न ब्रूयात् उक्तञ्च न विभावयेत् । न च पूर्व्वापरं विद्यात्तस्मादर्थात्स हीयते ॥ ५६ ॥

अदेश्यमिति । अपदिश्येति । असम्भाष्य इति । ब्रूहीत्यादि । अदेश्यं यत्र देशे अधमर्णस्य ऋणग्रहणकाले सर्व्वदावस्थानन सम्भवतीति । निर्दिश्य वा देशादिकं नैतन्मया निर्दिष्टमिति अपह्नवति । यश्च पूर्व्वोत्तरान् लोकानर्थान् विरुद्धान्नाव गच्छति । यश्च मम हस्तात्सुवर्णमनेन गृहीतमिति निर्दिश्य मत्पुत्रहस्ताद्गृहीतमित्येवमादिना पुनरपसरति । यश्च सम्यक्प्रतिज्ञातमर्थं कस्मात्त्वया रागावसाक्षिक

द्यन्नभिव्येक्ष्यादि प्राड्विवाकेन पृष्टः सन् न समाधत्ते। यश्च पूर्वा
परार्थनिर्णयादि दिष्टैः साक्षिभिः यथान्यायं न समाधत्ते। यश्च
भाषार्थस्थिरीकरणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्नमे
च्छेत्। यश्च निष्पतेन्न पुनः स्थातुमत्र यत्ते इमेऽन्यथा व्यवहार
इत्याख्याय यथाह्वानात् स्थानान्तरं गच्छेत्। यश्च ब्रूहीत्युक्तो न
किञ्चिद्ब्रवीति उक्तं सार्थं न प्रमाणेन प्रतिपादयति। पूर्वं साधनं
अपरं साध्यं न जानाति असाधनमेव साधनत्वेन निर्दिशति
असाध्यमेवमप्रमाणेन शशशृङ्गतन्धनुर्दैर्घ्यमित्यादि साध्यत्वेन
निर्दिशति स तस्मात्साध्यादर्थाद्धीयते॥ ५३॥ ५४॥ ५५॥ ५६॥

साक्षिणः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत्॥ ५७॥

साक्षिणःसन्तीति। साक्षिणो मम विद्यन्त इत्युक्त्वा तान्
दिशेत्युक्तो यो न निर्दिशति तं पूर्वोक्तैरेभिः कारणैर्धर्मस्थः प्राड्वि
वाकः पराजितं कथयेत्। ज्ञातारः सन्ति मेत्युक्त्वा इति वा
पाठः। अथ हान्यधिकारस्तु परस्परं॥ ५७॥

अभियोक्ता न चेद्ब्रूयाद्बध्यो दण्ड्यश्च धर्मतः। न
चेत्त्रिपक्षात्प्रब्रूयाद्धर्मं प्रति पराजितः॥ ५८॥

अभियोक्तेति। योऽर्थी सन् राजस्थाने निवेद्य भाषायां न
ब्रूयात्तदा विषमनोरथापेक्षया बध्योऽपि विषये दण्ड्यश्च

धर्म्मतः स्यात्प्रत्यर्थी पुनर्यदि पत्रपथमध्ये न ब्रूयात्तदा धर्म्मत एव पराजितः स्यात् न तु छलेन ॥ ५८ ॥

योयावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत्।
तौ नृपेण ह्यधर्म्मज्ञौ दाप्यौ तद्द्विगुणन्दमम् ॥ ५९ ॥

यइति। यः प्रत्यर्थी यत्परिमाणधनमपनयति अर्थी वा यत्परिमाणधने मिथ्यावदति तावधार्मिकौ अपह्नुतमिथ्योक्त धनाद्द्विगुणन्दण्डरूपन्दापनीयौ। अधर्मज्ञाविति वचनात् ज्ञानपूर्व्वापह्नवमिथ्योक्तिविषयमिदम्। प्रमादादिना आलाप मिथ्याभियोगे अपह्नवे तद्द्विगुणमिति मते दण्डमभार्म वक्ष्यति ॥ ५९ ॥

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा। त्र्यवरैः
साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ॥ ६० ॥

पृष्टइति। धनार्थिनोत्तमर्णेन राजपुरुषापकर्षं कृताह्वानः प्राड्विवाकेन पृष्टः सन् यदा न धारयामीत्यपह्नुवानो भवति तदा नृपत्यधिकृतब्राह्मणसमक्षं त्र्यवरैः साक्षिभिः त्रयोऽवरा न्यूना येषान्तैरर्थिना विभावनीयः ॥ ६० ॥

यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः।
तादृशान्सम्प्रवक्ष्यामि यथावाच्यमृतञ्च तैः ॥ ६१ ॥

यादृशा इति। धनिभिरुत्तमर्णादिभिः ऋणादानादि व्यवहारेषु यथाविधाः साक्षिणः कर्त्तव्याः तथा विधान् वदिष्यामि। यथा च तैः सत्यं वक्तव्यं तमपि प्रकारं वक्ष्यामि ॥ ६१ ॥

गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥ ६२ ॥

गृहिण इति। कृतदारपरिग्रहाः पुत्रवन्तः तद्देशजाः क्षत्रियवैश्यशूद्रजातीयाः अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्या भवन्ति। ते हि दारपुत्रविनाशभयात्तद्देशवासिना विरोधाच्च नान्यथा वदन्ति। न तु ये केचित् ऋणादानादिव्यवहारेषु साक्षिणः स्युः आपदि तु वाग्दण्डपारुष्यस्त्रीसंग्रहणादिषूक्तव्यतिरिक्ता अपि साक्षिणो भवन्ति ॥ ६२ ॥

आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ ६३ ॥

आप्ता इत्यादि। क्षत्रविट्शूद्रयोनय इति क्षत्रियादितो ब्राह्मणपरिग्रहार्थं सर्वेषु वर्णेषु इत्यभिधानं सर्ववर्णेषु

च

मध्ये ये यथार्थावगतवादिनः सर्वधर्मज्ञा लोभरहिता ते साक्षिणः कर्त्तव्याः। उक्तविपरीतांश्च वर्ज्जयेत् ॥ ६३ ॥

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः। न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिता ॥ ६४ ॥

नार्थसम्बन्धीत्यादि। ऋणाद्यर्थसम्बन्धिनोऽधमर्णाद्याः आप्ता मित्राणि सहायास्तत्परिचारकाः शत्रवः स्थानान्तरावगतकौटसाक्ष्याः रोगपीडिता महापातकादिदूषिताश्च साक्षिणो न कर्त्तव्याः। लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनां सम्भवात् ॥ ६४ ॥

न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ। न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥ ६५ ॥

न साक्षीति। प्रभुत्वात्साक्षिधर्म्मेण प्रष्टुमयोग्यत्वात् न राजा साक्षी कार्य्यः कारुः सूपकारादिः कुशीलवो नटादिः तयोः स्वकर्म्मव्यग्रत्वात् प्रायेण धनलोभवत्त्वाच्चासाक्षित्वम्। श्रोत्रियोऽध्ययनाग्निहोत्रादिकर्म्मव्यग्रतया न साक्षी। लिङ्गस्थो ब्रह्मचारी। सङ्गविनिर्गतः परिव्राजकः। तयोरपि स्वकर्म्मव्यग्रत्वात्

मध्यभिहवाचाचावित्तम्। योनिवयदवादध्ययनाग्निहोत्रा
दिवर्णनरमाङ्गवचानिवेध: ॥ ६५ ॥

नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः॥६६॥

नाध्यधीनइति। अध्यधीनोऽत्यन्तपरतन्त्रो गर्भदासोऽन
वक्तव्यो विहितकर्मत्यागात् लोकविगर्हित: दस्युः क्रूरकर्मा न
वृद्धो नापि तस्करइति वक्ष्यमाणत्वात्। विकर्मकृत् निषिद्ध
कर्मकारी। एतेषां रागद्वेषादिसम्भवात्। न वृद्धः प्रायेण
बुद्धिभ्रंशसम्भवात्। न बालोऽप्राप्तव्यवहारत्वात्। नैकोविनाश
प्रवादसद्भावा तथा त्र्यवरैरिति विधानात् नार्थप्रतिषेधविरुद्धो
वचाविश्चवज्ञानां दयोरनुज्ञानार्थं निषेधवचनम्। अन्त्य
चाण्डालादि: धर्मानभिज्ञत्वात् विकलेन्द्रियश्चपलत्वाभि वे
कत्वात् न साक्षी कार्य्यः ॥ ६६ ॥

नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः।
न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः॥६७॥

नार्त्तइति। आर्त्तोबन्धुविनाशादिना। मत्तोमद्यादिना।
उन्मत्तोग्रहावेशादिना। क्षुधापिपासादिना पीडितः।

असमार्त्तः परस्त्रीगमनादिना क्लिष्टः कामक्रान्तः उत्पन्नक्रोधः चौरश्च न साक्षी कार्य्य इति सर्व्वत्र संबध्यते। तत्रार्त्तादिर्बुद्धिवैकल्यात् चौरस्त्वधार्म्मिकत्वात् ॥ ६७ ॥

स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशा द्विजाः।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥६८॥

76 a

स्त्रीणामित्यादि। स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिणो भवन्ति। द्विजानां ब्राह्मणक्षत्रियविशां सदृशाः सजातीयाः साक्षिणः स्युः। एवं शूद्राः साधवः शूद्राणां। चाण्डालादीनाञ्चाण्डालादयः साक्षिणो भवेयुः। एतच्च सजातीयसाक्ष्यभिधानमुक्तलक्षणसजातीयसाक्षिसम्भवे। असम्भवे विजातीया अपि साक्षिणो भवन्ति। अतएव याज्ञवल्क्यः। यथाजाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः ॥ ६८ ॥

अनुभावी तु यः कश्चित्कुर्य्यात्साक्ष्यं विवादिनां।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ॥ ६९ ॥

अनुभावीति। गृहाभ्यन्तरेऽरण्यादौ वा चौरादिकृतोपद्रवे देहोपघाते वाततायादिकृते यः कश्चित् उपलभते तथा

द्विधोऽपि साक्षी भवति नतु यथाहारादिवदुक्तलक्षणो पेतः।॥ ६९॥

स्त्रियाप्यसम्भवे कार्यं बालेन स्थविरेण वा।
शिष्येण बन्धुना वापि दासेन भृतकेन वा॥ ७०॥

तदेवोदाहरणात्स्पष्टयति स्त्रियापीति। अन्तर्वेश्मादावुक्त साक्ष्यभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्मकरा अपि साक्षिणः स्युः॥ ७०॥

बालवृद्धातुराणाञ्च साक्ष्येषु वदतां मृषा।
जानीयादस्थिरां वाचमुत्सिक्तमनसान्तथा॥ ७१॥

अस्थिरबुद्धित्वादेषां स्त्रीबालादीनां कथमपि साक्षित्वमित्यत आह बालवृद्धेति। बालवृद्धव्याधितानां उपप्लुतमनसाञ्च मत्तोन्मत्तादीनां साक्ष्ये अनृतं वदतां अस्थिरा वाग्भवति अतस्तामनुमानेन जानीयात्। यथोक्तम्। बाह्यैर्विभावयेल्लिङ्गैरिति॥ ७१॥

साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च। वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः॥ ७२॥

साहसेष्विति। परदारादिषु साहसेषु चौर्यस्तेयसंग्रहणे वाग्दण्डपारुष्ये च दृष्टिवदनुभवाविपरीता न कार्या स्त्रियाप्यसम्भवे कार्यमित्युक्तैवायमुदाहरणप्रपञ्चः॥ ७२॥

वक्तव्यमरिगृह्णीयात्साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ ७३ ॥

वक्तव्यमित्यादि। साक्षिणामपरस्परविरुद्धाभिधाने बहूनामियं तुल्यन्तरेव निर्णयार्थत्वेन राजा गृह्णीयात्। समेषु तु विरुद्धाभिधायिषु गुणवतः प्रमाणीकुर्य्यात्। गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् द्विजेषु ये उत्तमाः क्रियावन्तइत्यर्थः। अतएव वृहस्पतिः। गुणिद्वैधे क्रियायुक्ता इति। गोविन्दराजस्तु। गुणवतां विप्रतिपत्तौ द्विजोत्तमान् ब्राह्मणान् प्रमाणीकुर्य्यादित्याह ॥ ७३ ॥

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति। तत्र सत्यं ब्रुवन्साक्षी धर्म्मार्थाभ्यान्न हीयते ॥ ७४ ॥

समक्षेति। चक्षुर्ग्राह्ये साक्षाद्दर्शनात् श्रोत्रग्राह्ये च श्रवणात् साक्ष्यं सिध्यति तत्र साक्षी सत्यं वदन् धर्म्मार्थाभ्यां न मुच्यते सत्यवचनेन धर्म्मोपपत्तेर्द्दण्डाभावे चार्थहान्यभावात् ॥ ७४ ॥

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि। अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥ ७५ ॥

साक्षीत्यादि। साक्षी दृष्टश्रुतादन्यादृशं साधुसभायां वदन् अधोमुखोनरकं गच्छति। परलोके च कर्म्मान्तरजन्यस्वर्गरूप फलादानेन पापेन हीयते ॥ ७५ ॥

यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन । पृष्टस्तत्रापि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥ ७६ ॥

यत्रेत्यादि । तस्मिन् विषये साक्षी भव इत्येवमकृतोपि यत्किञ्चित् व्यवहारादि पश्यति वाक्पारुष्यादिकं वा शृणोति तथापि साक्षी स पृष्टस्सन् यथोपलब्धं कथयेत् । अयमकृत साक्षी सामान्येन मनुनोक्तः अस्य ग्रामस्य प्राड्विवाकस्य राजा पेत्यादिना नारदादिभिः षाड्विध्यमुक्तम् ॥ ७६ ॥

एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योपि न स्त्रियः । स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येपि ये वृताः ॥ ७७ ॥

एक इत्यादि । एकोऽलुब्ध इत्याकारप्रश्लेषो द्रष्टव्यः । एकोपि साक्षी लोभादिरहितः स्यात् । अतएव व्यासः । शुचिक्रियश्च धर्मज्ञः साक्षी यथानुभूतवाक् । प्रमाणमेकोपि भवेत् साहसेषु विशेषतः । मेधातिथिगोविन्दराजाभ्यामेको लुब्धस्त्वसाक्षी स्यादिति पठितम् । व्याख्यातञ्च । लोभवान् एकः साक्षी न भवति एवञ्चालुब्धोगुणवान् कदाचिदयथा सामेकोपि भवतीति । स्त्रियः पुनरात्मशौचादिगुणवत्योपि स्थिरबुद्धित्वात् व्यवहारादौ धर्मोचितव्यवहारे साक्षि

स्तेन भवन्ति। अपर्य्यालोचितेतु स्तेयवाग्दण्डपारुष्यादौ स्त्रियाप्यसम्भवे कार्य्यमिति साक्षित्वमुक्तम्। अन्येपि ये लोकहि दोषैर्व्याप्तास्तेपि पर्य्यालोचितव्यवहारे साक्षिणो न स्युः॥ ७७॥

स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्। अतो यदन्यद्विब्रूयुर्द्धर्म्मार्थं तदपार्थकम्॥ ७८॥

स्वभावेनेति। यत्साक्षिणोभयादिव्यतिरेकेण स्वभावाद्ब्रूयुः तद्व्यवहारनिर्णयार्थं ग्राह्यं यत्पुनः स्वाभाविकादन्यत् कुतोपि कारणाद्वदन्ति तद्धर्म्मविषये निष्प्रयोजनं तन्न ग्राह्यम्॥ ७८॥

सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ। प्राड्विवाकोनुयुञ्जीत विधिनानेन सान्त्वयन्॥ ७९॥

सभान्तरित्यादि। सभामध्यं साक्षिणः संप्राप्तान् अर्थिप्रत्यर्थिसमक्षं राजाधिकृतोब्राह्मणः प्रियोक्तिं रचयन् वक्ष्यमाणप्रकारेण पृच्छेत्॥ ७९॥

यद्द्वयोरनयोर्वेत्थ कार्य्येऽस्मिन् चेष्टितं मिथः। तद्ब्रूत सर्व्वं सत्येन युष्माकं ह्यत्र साक्षिता॥ ८०॥

यद्द्वयोरिति। यद्द्वयोरर्थिप्रत्यर्थिनोरनयोः परस्परमस्मिन् कार्य्ये चेष्टितं जानीथ तत्सर्व्वं सत्येन कथय यतोयुष्माकमत्र साक्षित्वम्॥ ८०॥

सत्यं साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥ ८१ ॥

सत्यमिति । साक्षी साक्ष्ये कर्मणि सत्यं वदन् उत्कृष्टान् ब्रह्मलोकादीन् प्राप्नोति इह च लोकेषु चात्युत्कृष्टां ख्यातिं लभते यस्मादेषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता ॥ ८१ ॥

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् । विवशः शतमाजातीस्तस्मात्साक्ष्यं वदेदृतम् ॥ ८२ ॥

साक्ष्य इत्यादि । यस्मात्साक्षी व्यवहारे अनृतम् वदन् वरुणसम्बन्धिभिः पाशैः सर्परज्जुभिः जलोदरेण परतन्त्रीकृतः शतजन्मानि यावत् अत्यर्थं पीड्यते । तस्मात्साक्ष्ये सत्यं ब्रूयात् ॥ ८२ ॥

सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते । तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ ८३ ॥

सत्येनेत्यादि । यस्मात्सत्येन पूर्वार्जितादपि पापात्साक्षी शुध्यते धर्मश्चास्य सत्याभिधानेन वृद्धिमेति । तस्मात्सर्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम् ॥ ८३ ॥

आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम्॥८४॥

आत्मैवेति। यस्मात् शुभाशुभकर्मप्रतिष्ठ आत्मैवात्मनः शरणं तस्मादेवं स्वमात्मानं नराणां मध्यादुत्तमं साक्षिणं मृषाभिधानेनावज्ञासीः॥ ८४॥

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः। तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः॥ ८५॥

मन्यन्त इति। पापकारिण एवं मन्यन्ते अस्मानधर्मसक्तान् न कश्चित्पश्यतीति तान् पुनर्वक्ष्यमाणा देवाः पश्यन्ति स्वस्यान्तरात्मापुरुषश्च पश्यति॥ ८५॥

द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः। रात्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम्॥ ८६॥

द्यौरित्यादि। द्युलोकपृथिवीजलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसन्ध्याद्वयधर्माः सर्वशरीरिणां शुभाऽशुभकर्मज्ञाः दिवादीनामधिष्ठातृदेवताश्चात्र शरीरि

शरीरस्थेनैकत्वस्थितेव तस्मादेवं जानातीति पापमप्रामाण्या देहाच्च दर्शनं तदुपजीव्येदमुक्तम् ॥ ८६ ॥

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्। उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन्॥८७॥

देवब्राह्मणेति। प्रतिमादिदेवताब्राह्मणसन्निधाने शुचीन् द्विजातिप्रभृतीन् प्राङ्मुखानुदङ्मुखान् वा स्वयमपि शुचिः पूर्वाह्णे काले यथातथ्यं साक्ष्यं पृच्छेत् ॥ ८७ ॥

ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम्। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ८८ ॥

ब्रूहीत्यादि। ब्रूहीत्येवं शब्दमुच्चार्य ब्राह्मणं पृच्छेत्। सत्यं ब्रूहीति पार्थिवं क्षत्रियं पृच्छेत्। गोबीजसुवर्णापहारे यत्पापं तत्तवऽनृताभिधाने स्यादित्येवं वैश्यम्। शूद्रं पुनः सर्वैर्ब्रह्मवधपापैः संबध्यसे यदि मृषावदसीति पृच्छेत् ॥ ८८ ॥

ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः। मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥ ८९ ॥

ब्रह्मघ्न इति। ब्राह्मणहन्तुः स्त्रीघातिनो बालघातिनश्च ये

नरकादिलोकास्तैरपि स्मृताः। ये च मित्रद्रोहकारिणः ये चोपकर्त्तुरपकारिणस्ते तव मिथ्यावदतोभवेयुः ॥ ८९ ॥

जन्मप्रभृति यत्किञ्चित्पुण्यम्भद्र त्वया कृतम्। तत्ते
सर्व्वं शुनोगच्छेद्यदि ब्रूयास्त्वमन्यथा ॥ ९० ॥

जन्मप्रभृतीत्यादि। हे भद्र आचार यत्त्वया जन्मतआरभ्य किञ्चित्सुकृतं कृतं तत्सर्व्वं त्वदीयं कुक्कुरादिकं संक्रामति यदि त्वमसत्यं ब्रवीषि ॥ ९० ॥

एकोऽहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥ ९१ ॥

एकोऽहमित्यादि। हे भद्र एकएवाहमस्मि जीवात्मकइति यदात्मानं मन्यसे नैवं मन्तव्यः। यस्मादेष पापानां पुण्यानाञ्च द्रष्टा मननान्मुनिस्सर्वज्ञः तव हृदये परमात्मा नित्यमवस्थितः। तथाच श्रुतिः। द्वा सुपर्णा सयुजा सखाया समानं वृक्षम्परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीति ॥ ९१ ॥

यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥ ९२ ॥

यम इति। सर्वसंयमनाद्यमः परमात्मा वैवस्वत इति दण्डधारित्वात् देवनाद्देवः स एवैष हृदि तिष्ठति तेन सह यथार्थकथनेन यदि तवाविवादः यदा त्वन्मनोगतमयावन्न जानाति त्वत्तोऽन्यथा कथयसि तदान्तर्यामिना सह तव विप्रतिपत्तिः स्यात् एवञ्च सत्याभिधानेनैव निष्पापः सन् ततोऽपि पापनिर्हरणार्थं मा गङ्गायां च कुरुक्षेत्रं यासीः। गङ्गामेवाप गङ्गाकुरुक्षेत्रयोः पापघ्नं मत्स्यपुराणे व्यासेन स्तुतीकृतम्। कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहितेति। मेधातिथिगोविन्दराजौ तु। विवस्वतः पुत्रो यमो दक्षिणदिक्पतिर्लोकतः कर्मणोपरीक्षकत्वात् तव हृदये परिस्फुरति तेन सह यदि तथार्थकारित्वाभावाद्विवादो नास्ति तदा मा गङ्गां मा कुरुक्षेत्रं यासीरिति व्याचक्षाते ॥ ९२ ॥

नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः। अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ९३ ॥

नग्न इति। यः साक्ष्यं असत्यं वदेत् स नग्नः कृतमुण्डनः परिभ्रष्टोऽन्धः कर्परेणोपलक्षितः भिक्षार्थी शत्रुकुलं गच्छेत् ॥ ९३ ॥

अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत्।
यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्म्मनिश्चये॥ ९४ ॥

अवागिति। योधर्म्मनिश्चयनिमित्तं पृष्टः सन् असत्यं ब्रूयात् स पापवान् अधोमुखोमहान्धकारे घोनरकं गच्छति ॥ ९४ ॥

अन्धोमत्स्यानिवाश्नाति स नरः कण्टकैः सह।
योभाषतेर्थवैकल्यमप्रत्यक्षं सभाङ्गतः॥ ९५ ॥

अन्धइति। यः सभाम्प्राप्तः तत्कार्यन्तथया भावं अनुपलभ्य अयुक्तोवादि सुखलेशेन कथयति स नरोऽन्धइव सकण्टकान् मत्स्यान् भक्षयति सुखबुद्ध्या प्रवृत्तोदुःखमेव महल्लभते ॥ ९५ ॥

यस्य विद्वान्हि वदतः क्षेत्रज्ञोनाभिशङ्कते। तस्मान्न देवाः श्रेयांसं लोकेन्यं पुरुषं विदुः॥ ९६ ॥

यस्येति। यस्य वदतः सर्व्वज्ञोऽन्तर्यामी किमयं सत्यं वदत्युतानृतमिति न शङ्कते किन्तु सत्यमेवायं वदति निर्विशङ्कः सम्पद्यते तस्मादन्यं प्रशस्ततरं पुरुषन्देवान जानन्ति ॥ ९६ ॥

यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन्।
तावतः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्व्वशः॥ ९७॥

यावतइति। यस्मिन् पश्वादिनिमित्ते साक्ष्ये अनृतं वदन् यत्सङ्ख्याकान् पित्रादिबान्धवान् नरके योजयति तत्सङ्ख्याकान् क्रमेण परिगणनया मत्तो वक्ष्यमाणान् सौम्य शृणु। अथवा। यावतो बान्धवान् हन्ति यावतां बान्धवानां हननफलं प्राप्नोति तावत्सङ्ख्याकान् शृणु। सर्व्वमेवानृताभिधाननिन्दार्थमिदम् ॥९७॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते। शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥ ९८॥

पञ्चेति। पशुविषयेऽनृते पञ्च बान्धवान् नरके योजयति। पञ्चानां बान्धवानां वा हननफलं प्राप्नोति। एवन्दश गोविषये शतमश्वविषये सहस्रं पुरुषविषये सङ्ख्यागौरवञ्चेदं प्रायश्चित्त गौरवार्थम्॥९८॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्व्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः॥ ९९॥

हन्तीति। हिरण्यार्थे अनृतं वदन् जातान् अजातांश्च पुत्र प्रभृतीन् हिरण्यार्थेऽनृतवादी नरके योजयति। तेषां हननफलं

वा प्राप्नोति। भूमिविषये चानृतं वदन् सर्व्वप्राणिनां नरकम्
प्राप्नोति तस्माद्भूमिविषयेऽनृतं मावदीरिति विशिष्याभिधानम्।
॥ ९९ ॥

अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।
अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च ॥ १०० ॥

वैदुर्य्यादिषु अनृते भूमिवद्दोषमाहु अप्स्विति। तडागकूप
वाप्योदकविषयेऽनृते स्त्रीणाञ्च मैथुनाख्योपभोगविषये अब्जेषु
च मुक्तादिषु पाषाणमयेषु च वैदूर्य्यादिषु अनृते भूमिवद्दोष
माहुः ॥ १०० ॥

एतान् दोषानवेक्ष्य त्वं सर्व्वाननृतभाषणे। यथा
श्रुतं यथादृष्टं सर्व्वमेवाञ्जसा वद ॥ १०१ ॥

एतानिति। एतान् सर्व्वान् असत्यभाषणदोषानवेक्ष्य
दृष्टश्रुतानतिक्रमेण सर्व्वमेवाञ्जसा तत्त्वतो ब्रूहि ॥ १०१ ॥

गोरक्षकान्वाणिजिकांस्तथाकारुकुशीलवान्।
प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥१०२॥

गोरक्षकानित्यादि। गोरक्षजीविनो वाणिज्याजीविनः सूप
कारादिकारुकर्म्मजीविनः नटकर्म्मनृत्यगीतादिजीविनः दास
कर्म्मजीविनः प्रतिषिद्धजीविनो ब्राह्मणान् प्रकृतसाक्षिप्रश्ने
शूद्रवत्पृच्छेत् ॥ १०२ ॥

तद्वदन् धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः। न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ॥१०३॥

तद्वदन्निति। तदेतत्साक्ष्यमन्यथापि जानन् मनुष्यो धर्मेण दयादिना व्यवहारेष्वन्यथा वदन् स्वर्गलोकान्न भ्रश्यति यस्माद्धेतुनिमित्तविशेषेणासत्याभिधानं तां दैवसम्बन्धिनीं वाचं मन्वादयो वदन्ति ॥ १०३ ॥

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः। तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥ १०४ ॥

क्व पुनस्तदन्यथा वक्तव्यमित्यत आह शूद्रेति। यस्मिन् व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्रियब्राह्मणानां वधः सम्पद्यते तत्रासत्यं वक्तव्यं यस्मात्। यस्मिन्विषये अनृतं सत्याचरणेन सत्याद्विशिष्यते एतच्च प्रमादस्खलिताधर्मविषयकं। न त्वत्यन्ताधार्मिकसन्धिकारस्तेनादिविषये। तथा गौतमः नानृतवदने दोषो यज्जीवनं चेत्तदधीनं न तु पापीयसो जीवनमिति। न च न जातु ब्राह्मणं हन्या त्सर्वपापेष्वपि स्थितमिति मनुनैव वध्यमानत्वात् न ब्राह्मण

व

वधप्रसक्तिरिति वाच्यं। उपदस्तत्वाद्गात्रः कथञ्चित्सम्भवात्। अत्र वचने शूद्रादिक्रमेणाभिधानमधमागमत्वात् ॥१०४॥

वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीं। अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिम्पराम् ॥ १०५ ॥

वाग्दैवेति। ते साक्षिणोऽनृताभिधायिनो वाग्देवताकैश्चरुभिः सरस्वतीं यजेरन्। तस्यानृताभिधानजनितपापस्य प्रकृष्टां शुद्धिं कुर्वाणाः साक्षित्वरूपापेक्षं चेदम्। तत्रैकस्यैव साक्षित्वः। कपिञ्जलन्यायेन बहुत्वं। यद्यपि वाग्देवताके चरौ वाक्शब्देनैव देवतात्वं न सरस्वतीशब्देन विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायात्तथापि वाग्वै सरस्वती श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः। अत्र प्रकरणे चेदं प्रायश्चित्ताभिधानं साक्ष्यर्थं। तत्र क्रियमाणे शूद्रविट्क्षत्रियब्राह्मणवधविषयानृतवादिनस्त्वपि वक्तव्यं स्यात् ॥१०५॥

कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ यथाविधि। उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥ १०६ ॥

कूष्माण्डैरिति। कूष्माण्डमन्त्रा यजुर्वेदिका यद्देवादेवहेडनमित्येवमादयः। तैर्मन्त्रदेवताकं घृतमग्नौ जुहुयात्।

यथाविधि परिस्तरणादिहोमधर्मेण स्रुक्स्रुवेण उदुत्तमं वरुणपाशमित्यनया वरुणदेवताकया ऋचा आपो हि ष्ठा इति ऋचेन वाब्दैवताकेन जुहुयात्। घृतमग्नाविति सर्वत्रानुषङ्गः ॥१०६॥

त्रिपक्षाद्ब्रुवन्साक्ष्यमृणादिषु नरोऽगदः। तदृ णं प्राप्नुयात्सर्व्वं दशबन्धञ्च सर्व्वतः॥ १०७॥

त्रिपक्षादिति। अव्याधितः साक्षी ऋणादानादिव्यवहारेषु त्रिपक्षपर्य्यन्तं यदि साक्ष्यं न वदेत्तदा तद्विवादास्पदं सर्व्वमृणमु त्तमर्णस्य दद्यात्तच्च सर्व्वस्य दशमभागं राज्ञो दण्डं दद्यात्॥ १०७॥

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणन्दाप्यो दमञ्च सः॥ १०८॥

यस्येति। यस्य साक्षिणः उक्तवाक्यस्य सप्ताहमध्ये व्याधिदाहधनिकृतपुत्रादिज्ञातिमरणानामन्यतमं भवति तदैव तस्मिन्मिथ्याभिधायितया तदृणमुत्तमर्णस्य दण्डञ्च राज्ञा दाप्यः ॥१०८॥

वधप्रयुक्तिरिति वाच्यं। उपदेशकत्वाद्धास्त्रः कथञ्चिदसम्भ मात्। अत्र वचने शूद्रादिक्रमेणाभिधानमवधस्थामशक्तत्वात् ॥ १०४ ॥

वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीं। अनृतस्यैनसस्तस्य कुर्व्वाणानिष्कृतिम्पराम् ॥ १०५ ॥

वाग्दैवेति। ते साक्षिणोऽनृताभिधायिनोवाग्देवताके चरुभिः सरस्वतीं यजेरन्। तस्यानृताभिधानजनितपापस्य प्रकृष्टां शुद्धिं कुर्वाणाः साक्षिवह्नत्वापेक्षं चेदम्। तत्रैकस्यैव साक्षिणः। कपिञ्जलन्यायेन चरुत्रयं। यद्यपि वाग्देवताके चरौ वाक्छब्देनैव देवतात्वं न सरस्वतीशब्देन विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायात्तथापि वाग्वै सरस्वती श्रुतेर्वाक् सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः। अत्र प्रकरणे चेदं प्रायश्चित्ताभिधानं साक्ष्यवार्थं। तत्र क्रियमाणे शूद्रविट्क्षत्रियब्राह्मणवधविषयानृतवादिनरत्यपि वक्तव्यं स्यात् ॥ १०५ ॥

कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ यथाविधि। उदित्यृचा वा वारुण्यात्यृचेनाब्दैवतेन वा ॥ १०६ ॥

कूष्माण्डैरिति। कूष्माण्डमन्त्रा यजुर्वेदिका यद्देवादेवहेडनमित्येवमादयः। तैर्मन्त्रदेवताये घृतमग्नौ जुहुयात्।

यथाविधि परिस्तरणादिहोमधर्म्मेण समुच्चयेन उदुत्तमं वरुणपाशमित्यनेन वा वरुणदेवताकया ऋचा आपो हि ष्ठेति तृचेन वाब्देवताकेन जुहुयात्। घृतमग्नाविति सर्व्वत्रानुषङ्गः ॥१०६॥

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः। तद्
ऋणं प्राप्नुयात्सर्व्वं दशबन्धञ्च सर्व्वतः॥१०७॥

त्रिपक्षादिति। अव्याधितः सन् यो नर ऋणादिव्यवहारेषु त्रिपक्षपर्यन्तं यदि साक्ष्यं न वदेत्तदा तद्विवादास्पदं सर्व्वमृणमुत्तमर्णाय दद्यात् च सर्व्वस्य ऋणस्य दशमभागं राज्ञो दण्डं दद्यात् ॥१०७॥

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणन्दाप्यो दमञ्च सः॥१०८॥

यस्येति। यस्य साक्षिणः उक्तसाक्ष्यस्य सप्ताहमध्ये व्याधिदाहपितृव्यादिज्ञातिमरणानामन्यतमं भवति तदैव ऋणमिथ्याभिदोषवशात्तद्धनमुत्तमर्णाय दण्डञ्च राज्ञा दाप्यः ॥१०८॥

असाक्षिकेषु त्वर्थेषु मिथोविवदमानयोः। न विन्दंस्तत्त्वतस्सत्यं शपथेनापि लम्भयेत् ॥ १०९ ॥

असाक्षिकेष्विति। अविद्यमानसाक्षिकेषु व्यवहारेषु परस्परं विवदमानयोस्तत्त्वतश्छलादिव्यतिरेकेण सत्यमलभमानः प्राड्विवाकः वक्ष्यमाणेन शपथेन सत्यमुन्नयेत् ॥ १०९ ॥

महर्षिभिश्च देवैश्च कार्य्यार्थं शपथाः कृताः। वशिष्ठश्चापि शपथं शेपे पैयवने नृपे ॥ ११० ॥

महर्षिभिश्चेति। सप्तर्षिभिर्देवैश्च इन्द्रादिभिः सन्दिग्धकार्य्यनिर्णयार्थं शपथाः कृताः। वशिष्ठोऽप्यनेन पुत्रशतं भक्षितमिति विश्वामित्रेणाक्रुष्टः स्वपरिशुद्धये पियवनापत्ये सुदासि राजनि शपथञ्चकार। अनेकार्थत्वाद्धातूनां शपिरपि करोत्यर्थः ॥ ११० ॥

न वृथा शपथं कुर्य्यात्स्वल्पे प्यर्थे नरोबुधः। वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥ १११ ॥

नवृथेति। स्वल्पेपि कार्य्ये न वृथा शपथं पण्डितः कुर्य्यात्। यस्मात् वृथा शपथं कुर्वन् परलोके इह लोके च नरकप्राप्त्याऽकीर्त्तिप्राप्त्या च नाशं प्राप्नोति ॥ १११ ॥

कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने। ब्राह्मणाभ्युपपत्तौ च अनृते नास्ति पातकम्॥ ११२॥

इदानीमनृतप्रतिप्रसवार्थमाह कामिनीष्विति। बहुभार्यस्य अन्यामहं कामये त्वमेव मत्प्रेयसीति एवं विप्रलम्भरतका भावे कामिनीविषये विवाहविषये च मया अन्या न वोढव्ये त्यादौ गवार्थं घासाद्युपहारे च अग्नौ होमार्थमिन्धनाद्युप हारे ब्राह्मणरक्षार्थमङ्गीकृतवचनादौ अनृतवचने पापं न भवति ॥ ११२॥

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥ ११३॥

सत्येनेति। ब्राह्मणं सत्यशब्दोच्चारणेन शापयेत्। क्षत्रियं वाहनायुधं मम निष्फलं स्यादित्येवं वैश्यं गोबीजकाञ्चनानि मम निष्फलानि स्युः। शूद्रञ्च सर्वाणि मे पातकानि स्युरि त्येवं शापयेत्॥ ११३॥

अग्निं वा हारयेदेनमप्सु चैनं निमज्जयेत्। पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक्॥ ११४॥

कार्यगौरवलाघवापेक्षया अग्निमिति। अग्निवर्णमयःपिण्डं ब्राह्मणविकल्पमहार्हमथः पिण्डं हस्तद्वयविन्यस्तपत्त्रान्तरमयं

शूद्रादिर्वं सप्तपदानि पितामहादिपुत्रविधिना हारयेत्। अथो काद्विरर्हितजले चैनमभिमज्जयेत्। अत्रैवेतिकर्त्तव्यता स्मृत्यन्तरे ज्ञेया। पुत्राणां दाराणाञ्च पृथक् शिरांसि एनं स्पर्शयेत् ॥ ११४॥

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च। न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥ ११५ ॥

यमिति। यमुद्दीप्तोऽग्निर्न दहति आपश्च यमोर्द्धं नयन्ति नचार्त्तिमेव महतीं प्राप्नोति स शपथे विशुद्धो ज्ञेयः ॥ ११५ ॥

वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा। नाग्निर्ददाह रोमापि सत्येन जगतः स्पशः ॥ ११६ ॥

अत्र पुरावृत्तमर्थवादमाह वत्सस्येति। यस्मात्पूर्व्वकाले वत्सनामधेयर्षेर्न त्वं ब्राह्मणः शूद्रापत्योसीत्येवं कनीयसा वैमात्रेयेणाभिशप्तस्य नैतदेवमिति शपथार्थमग्निं प्रविष्टस्याग्निः सर्व्वस्य जगतः शुभाशुभकर्त्तव्ये चारभूतः सत्येन हेतुना रोमैकमपि न दग्धवान् ॥ ११६ ॥

यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतम्भवेत्। तत्तत्कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतम्भवेत् ॥ ११७ ॥

यस्मिन्निति। यस्मिन् यस्मिन् व्यवहारे साक्षिभिरनृतमुक्तमिति निश्चितम्भवेत्तत्तत्कार्य्यं धनदानादिकं निवर्त्तयेत्। यदपि च दण्डधनादिपर्य्यन्ततां नीतं तदपि पुनःपरीक्षेत् ॥ ११७॥

लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥११८॥

लोभादिति। वक्ष्यमाणदण्डविशेषार्थं लोभादीन्पृथङ्निर्दिशति। लोभेन विपरीतज्ञानेन भयेन स्नेहेन कामेन क्रोधेनाज्ञानेनानवधानेन साक्ष्यमसत्यमुच्यते ॥११८॥

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥११९॥

एषामिति। एषां लोभादीनां मध्यादन्यतमस्मिन्निमित्ते सति योमिथ्यासाक्ष्यं कथयेत् तस्य दण्डविशेषान् क्रमशो वदिष्यामि ॥११९॥

लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम्।
भयाद्द्वौ मध्यमौ दण्डौ मैत्रात्पूर्वं चतुर्गुणम् ॥१२०॥

लोभादिति। लोभेन मिथ्याभिधाने सति वक्ष्यमाणपणानां सहस्रं दण्ड्यः। मोहेन प्रथमं साहसं वक्ष्यमाणभयेन च वक्ष्यमाणौ मध्यमसाहसौ मैत्रात्प्रथमसाहसं चतुर्गुणम् ॥१२०॥

कामाद्दशगुणम्पूर्व्वं क्रोधात्तु त्रिगुणम्परम् ।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥ १२१ ॥

कामादिति । स्त्रीसम्भोगरूपकामानुरोधेन मिथ्या वदन् प्रथमसाहसं दशगुणन्दण्ड्यः । क्रोधेन तु परं वक्ष्यमाणं मध्यमसाहसन्त्रिगुणं अज्ञानत्वाद्द्वे शते बालिश्यात् अनवधानात् शतमेव दण्ड्य इति सर्व्वत्रानुषङ्गः ॥ १२१ ॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ।
धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च ॥ १२२ ॥

एतानिति । सत्यरूपधर्म्मस्यापरिलोपार्थमसत्यरूपाधर्म्मस्य च वारणार्थमेतान्कौटसाक्ष्यविषये पूर्व्वैर्मुनिभिरुक्तान् दण्डानस्मादय आहुः एतच्च यत् कौटसाक्ष्ये ॥ १२१ ॥

कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन्वर्णान्धार्म्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत् ॥ १२३ ॥

भूयोभूयः कौटसाक्ष्यकरणे तु कौटसाक्ष्यमिति । क्षत्रियादीन् त्रीन् वर्णान् कौटसाक्ष्ये प्रवृत्तान् पूर्व्वोक्तेन दण्डेन दण्डयित्वा धार्म्मिको राजा स्वराज्याद्विवासयेत् । ब्राह्मणन्तु धनदण्डव्यतिरिक्तेनैव स्वराज्यान्निःसारयेत् । न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्ववस्थितम् । राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतमिति धनसहितनिर्व्वासनस्याभिधास्यमानत्वात् ।

केचित्तु राजवत् ब्राह्मणं पुनः पूर्वदण्डेन दण्डयित्वा यद्वं कुर्यात् इति व्याचक्षते। मेधातिथिस्तु ब्राह्मणस्य क्षियादच्चं मासोपवासं दण्डमभ्युपेत्याचष्टे॥१२३॥

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत्॥१२४॥

दशेति। हिरण्यगर्भोमनुर्दश दण्डस्थानानि उक्तवान् यानि क्षत्रियादिवर्णत्रयविषये भवन्ति ब्राह्मणः पुनर्महत्यपराधे अक्षतशरीरो देशान्निःसार्यते॥१२४॥

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्नासा च कर्णौ च धनन्देहस्तथैव च॥१२५॥

उपस्थेति। जिह्वादीन्येतानि दश दण्डस्थानानि। यत्र यत्र दण्डेनापराधे सति अपराधकानुबन्धगौरवापेक्षया तत्तदङ्गमाशच्छेदनादि कर्त्तव्यम्। अल्पापराधे धनमुत्तमदण्डः। देहदण्डो मारणं महापातकादौ॥१२५॥

अनुबन्धम्परिज्ञाय देशकालौ च तत्त्वतः। सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्॥१२६॥

अनुबन्धमिति। पुनःपुनरिच्छातोऽपराधकरणमवेक्ष्य ज्ञानाज्ञानादिवापराधकारणं दिवारात्र्यादिकं वा अपराधकार्यं

सम्यगवेक्ष्य सारं चापराधकारिणो धनशरीरादिसामर्थ्यम् पराधस्य गुरुलघुभावेन चालोक्य दण्डनीयेषु दण्डं कुर्य्यात्। एतच्चाभिहिताभिधास्यमानदण्डशेषभूतम् ॥ १२६ ॥

अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।
अस्वर्ग्यञ्च परत्रापि तस्मात्तत्परिवर्ज्जयेत् ॥ १२७॥

अधर्म्मेति। जीवतः ख्यातिर्यशः। मृतस्य ख्यातिः कीर्त्तिः। यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिह लोके यशोनाशं मृतस्य च कीर्त्तिनाशनं परलोके च धर्म्मान्तरार्जितस्वर्गप्रतिबन्धकं तस्मात्तत्परित्यजेत् ॥ १२७ ॥

अदण्ड्यान् दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥ १२८ ॥

अदण्ड्यानिति। राजा दण्डानर्हान् धनलोभादिना दण्डयन् दण्डार्हांश्चानुरोधादिना उत्सृजन् महतीमख्यातिमाप्नोति नरकञ्च व्रजति ॥ १२८ ॥

वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम्।
तृतीयन्धनदण्डन्तु वधदण्डमतः परम् ॥ १२९ ॥

वाग्दण्डमिति। न साधु कृतवानसि मैवम्भूयः कार्षीः इत्येवं वाग्भिर्भर्त्सनं प्रथमापराधे गुणवतः कुर्य्यात्। तथापि यदि

शेषमप्यपराध्यति तदा धिक् त्वामधीतमिति पापस्य युक्तादित्येव माहि तत्र कार्य्यम्। तथापि यद्यपराधान्न निवर्त्तते तदा धनं दण्डमेव तृतीयं कुर्यात्। एवमपि चेन्नावतिष्ठते तदातः परमधरदण्डं ताडनाङ्गच्छेदरूपमपि कुर्यान्मारणम्। समोक्षकृति वधेनापि यदा त्वेतानिति ॥ १२९ ॥

वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात्।
तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम्॥ १३० ॥

वधेनेति। यदा वधेनाङ्गच्छेदादिनापि दण्ड्यान् वशे कर्त्तुं न शक्नुयात् तदा एषु सर्वं वाग्दण्डादिचतुष्टयं कुर्यात्॥ १३० ॥

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥ १३१ ॥

लोकेति। ताम्ररूप्यसुवर्णानां याः पणादिसंज्ञाः क्रयविक्रयादिलोकव्यवहारार्थं प्रथिता प्रसिद्धास्ता दण्डाद्युपयोगार्थं साकल्येन कथयिष्यामि ॥ १३१ ॥

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ १३२ ॥

जालान्तरेति। गवाक्षविवरप्रविष्टसूर्य्यरश्मिषु यत्सूक्ष्मं रजो दृश्यते तद्वक्ष्यमाणपरिमाणानामाद्यं त्रसरेणुं वदन्ति ॥ १३२ ॥

त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥ १३३ ॥

त्रसेत्यादि । अष्टौ त्रसरेणवो लिक्षैका परिमाणेन ज्ञेया ताः लिक्षास्तिस्रो राजसर्षपो ज्ञेयः । ते राजसर्षपास्त्रयो गौरसर्षपो ज्ञेयः ॥ १३३ ॥

सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम् । पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥ १३४ ॥

सर्षपा इति । गौरसर्षपाः षट् मध्येन स्थूलेनापि स्वल्पेन यवो भवति त्रिभिर्यवैः कृष्णलं रक्तिकेति प्रसिद्धं पञ्चभिः कृष्णलैर्माषः षोडश माषाः सुवर्णः स्यात् पुंसि [illegible] वचनः ॥ १३४ ॥

पलं सुवर्णाश्चत्वारः पलानि धरणं दश । द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥ १३५ ॥

पलमिति । चत्वारः सुवर्णाः पलं स्यात् । दश पलानि धरणं । कृष्णलद्वयं समं कृत्वा तुलयाधृतं रूप्यमाषको बोद्धव्यः ॥ १३५ ॥

ते षोडश स्याद्धरणं पुराणश्चैव राजतः। कार्षाप
णस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः॥१३६॥

त इति। ते षोडश रूप्यमाषकाः रौप्यधरणं पुराणश्च
राजतौ रजतमयौ स्याताम्। कार्षिकः ताम्रमयः कार्षापणः पण
इति च विज्ञेयः। कार्षिकश्च मासीयपलचतुर्थभागो बोद्धव्यः।
पलश्च पलं कर्षचतुष्टयमित्याभिधानिकाः॥१३६॥

धरणानि दश ज्ञेयः शतमानस्तु राजतः। चतुः
सौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः॥१३७॥

धरणेति। दशरूप्यधरणानि रौप्यशतमानो ज्ञातव्यः चतुर्भिः
सुवर्णैर्निष्कः परिमाणेन बोद्धव्यः॥१३७॥

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः॥१३८॥

पणेति। पणानामर्द्धाधिके द्वे पणशते प्रथमसाहसो मन्वा
दिभिः स्मृतः। पणपञ्चशतानि मध्यमः साहसो ज्ञेयः पणस
हस्रन्तु उत्तमसाहसो ज्ञेयः॥१३८॥

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपह्नवे तद्द्विगुणन्तन्मनोरनुशासनम्॥१३९॥

ऋणेति। मयोत्तमर्णस्य धनन्देयमिति सभायामधमर्णेनोक्ते सत्यधमर्णः पञ्चशतात्पञ्च पणानित्येवन्दण्डमर्हति यदा तु सभायामपि न किञ्चिदस्मै धारयामीति एवमपह्नुते तदा पञ्चशताद्दशपणानित्येवं दण्डमर्हति इत्येवं मनुस्मृतौ दण्डप्रकारः॥१३९॥

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम्। अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते॥१४०॥

वसिष्ठेति। वसिष्ठेनोक्तां वृद्धिं धर्म्यत्वाद्धनवृद्धिकरीं वृद्धिजीवी गृह्णीयात् तामेव दर्शयति। शते प्रयुक्ते तस्मात् अशीतिभागमतिमासं वृद्धिं गृह्णीयात्॥१४०॥

द्विकं शतं वा गृह्णीयात्सतान्धर्म्ममनुस्मरन्। द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी॥१४१॥

द्विकमिति। साधूनामयं धर्म्म इति मन्यमानः पञ्चशते प्रयुक्ते पणद्वयं वा प्रतिमासं गृह्णीयात् यस्मात् द्विकं शतं गृह्णानोऽवृद्धिधनग्रहणे किल्बिषी नभवति॥

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्व्वशः॥ १४२॥

द्विकमिति। ब्राह्मणादिवर्णानां क्रमेण द्विकत्रिकचतुष्कं पञ्चकञ्च शतं समभितो नाधिकं मासस्य सम्भिर्णीं वृद्धिं गृह्णीयात्। अशीतिभागो लघुः द्विकशतपक्षं गुरु कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्पेताम्। अत्र मेधातिथिगोविन्दराजौ तु। पूर्व्वश्लोकात् निर्बन्धाभावे द्विकशतपक्षमिति व्याचक्षाते। इदन्तु वदामः सबन्धकेऽशीतिभागपक्षं बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः। तदाह याज्ञवल्क्यः। अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा। वेदान्तोद्गीतमन्त्रोमुनेर्व्याख्यानमाद्रिये। नहि वृद्धं लघुत्वेन निबद्धुमधुनातनैः॥ १४२॥

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः॥१४३॥

नत्विति। भूमिगोदासादौ भोगार्थे बन्धके दत्ते धनप्रयोगमयात्मकरोगां वृद्धिमुत्तमर्णो न लभते। कालसंरोधाच्चिर कालावस्थानं च भोग्याधेश्चिरकालावस्थानात् द्विगुणीभूतमूलधनप्रवेशेऽपि न निसर्गोऽन्यस्मै दानं न चान्यतो विक्रयः। मेधा

निक्षिप्तमिदृशो ह्र। आधेर्विक्रयाभावकालेऽपि न विसर्गो नाशश्च बन्धकेनार्थमिति व्यपदिश्यते। अयन्तु धर्मो देशीयसमाचारविरोधः बन्धकीकृतभूम्यादेरन्यथाधीकरणसमाचारात् ॥ १४३ ॥

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ १४४ ॥

न भोक्तव्येति। गोप्याधिविषयं वचनमिदं बलात्कारादि गोप्याधिर्वस्त्रादिः भोक्तव्यः भुञ्जानो वृद्धिमुत्सृजेत् प्राप्यमूल्येन तोषयेत्। यद्वा। भोगेनासारतामाधौ नीते सारावस्थाधिमूल्यदानेन स्वामिनं तोषयेत् अन्यथा वस्त्रचौरः स्यात् ॥ १४४ ॥

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः। अवहार्यौ भवेतान्तौ दीर्घकालमवस्थितौ ॥ १४५ ॥

आधिश्चेति। आधिर्बन्धकः उपनिधीयतइत्युपनिधिः प्रीत्या भोगार्थमर्पितं द्रव्यं। नारदस्मृतिपठितौ च निक्षेपोपनिधी तावेवाचोपनिधिशब्देन गृह्येते एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः। यदैव स्वामिना प्रार्थितौ तदैव तत्कालावहार्यौ समर्पणीयावित्यर्थः ॥ १४५ ॥

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ १४६ ॥

सम्प्रीत्येति । यत्किञ्चिद्दशवर्षाणीत्यनन्तरश्लोकेन स्वत्वहानिं वक्ष्यति तदपवादार्थमिदं । दुह्यमाना गौरुष्ट्रोऽश्वश्च वहन् दमनार्थश्च प्रयुक्तो बलीवर्दादिः एते प्रीत्याऽन्येन भुज्यमानाः कदाचिदपि स्वामिनो न नश्यन्ति प्रदर्शनार्थञ्चेदं द्रव्यं प्रीत्योपभुज्यमानं न नश्यतीति विवक्षितं सामान्योपक्रमश्चेदं विशेषाभिधानमिति नपुंसकलिङ्गता ॥ १४६ ॥

यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानम्परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ १४७ ॥

यत्किञ्चिदिति । यत्किञ्चिद्धनजातं स्वसमक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दशवर्षाणि भुज्यमानं स्वामी प्रेक्षते मा भुङ्क्ष्वेत्यादिप्रतिषेधोक्तिं न रचयति नासौ तल्लब्धुं योग्यो भवति तत्र तस्य स्वत्वं निवर्त्तत इति भावः ॥ १४७ ॥

अजडश्चेदपोगण्डो विषये चास्य भुज्यते ।
भग्नन्तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८ ॥

अजडेति । जडो बुद्धिविकलः । न्यूनषोडशवर्षः पोगण्डः । तथा च नारदः । बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः ।

च धनस्वामी यदि जडः पोगण्डश्च न भवति तद्दीयदर्शन विषये च तद्धनमुज्यते तदा स्वामिनोऽव्यवहारेण नष्टं ततो भोक्तुरेव तद्धनम्भवति ॥ १४८ ॥

आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः।
राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥ १४९ ॥

आधिरिति। बन्धो ग्रामादिमर्य्यादा बालधनं निक्षेपो वा मनक्षमनाख्याय समुद्रं बन्निधीयतइति नारदोक्तलक्षण उपनिधिः दास्यादिस्त्रियो राजश्रोत्रियधनानि उक्तेन दश वर्षभोगेन न स्वामिनोनश्यन्ति न भोक्तुः स्वम्भवन्ति ॥ १४९ ॥

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥१५०॥

यः स्वामिनेति। योऽधमर्णेन दत्तं बन्धं स्वाम्यनुज्ञाव्यतिरेकेण मूर्खोनिक्षेपेण भुङ्क्ते तेन तस्य भोगस्य संशुद्ध्यर्थमर्द्धवृद्धि स्त्यक्तव्या। बन्धभोगे तु न भोक्तव्योबन्धाधिरिति सर्व्ववृद्धित्याग एवोक्तः ॥ १५० ॥

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता। धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ १५१ ॥

कुसीदेति। वृद्ध्या धनप्रयोगः कुसीदं तत्र या वृद्धिः सकृदाहृता सा द्वैगुण्यं नातिक्रामति मूलाद्द्विगुणैव भवति

तेन प्रतिदिनं प्रक्रियमाणं ग्रहणेन मूलेन सह द्विगुणाधिकापि पूर्व्वोक्तादृणप्रकारादन्यप्रकाराद्वा प्राप्नोति तात्पर्य्यम्। धान्ये पुन र्वृद्ध्या प्रयुक्ते शदे वृक्षफले लूयत इति लवः ऊर्णादिलोम तस्मिन् वाहनीये च बलीवर्द्दादौ प्रयुक्ते चिरेणापि कालेन मूलधान्यादिना सह पञ्चगुणतां नातिक्रामेदिति ॥ १५१ ॥

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ १५२ ॥

कृतानुसारादिति। कृता या वृद्धिर्द्विकन्त्रिकमिति शास्त्रेण वर्णक्रमेणोक्ता तस्याः शास्त्रानुसारादधिका व्यतिरिक्ता कृता मतोऽन्या वृद्धिरकृतेत्यर्थः सा न सम्भवति किन्तु कृतापि वृद्धिः वर्णक्रमेण द्विकत्रिकशतादिरूपैव मासे ग्राह्या। तथाच विष्णुः। वृद्धिश्चापुरःकृतामपि वत्सरातिक्रमे यथाभिहितं। वर्ण क्रमेण द्विकत्रिकादिकामित्यर्थः। किन्तु कृतवृद्धावपि विशेषान्तर माह। कुत्सितात्प्रचरत्वर्थं पन्था इति कुसीदपथः। धनमुत्तम र्णो यत् शूद्रविषयोक्तमप्यर्थं शतं द्विजातेरपि गृह्णातीत्येव कुत्सितः पन्थाः पूर्वोक्ताद्धर्म्यवृद्धिप्रकारादपकृष्ट इत्येवं मन्वाद यथाहुः। एवञ्चाकृता वृद्धिरुद्धारविषये याचनादूर्द्धं बोद्धव्या। तदाह कात्यायनः। प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितं याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतम् ॥ १५२ ॥

नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत् । चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ॥ १५३ ॥

नातीति। समेकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिं विगणय्य एकदा दातव्येत्येवंविधनियमपूर्व्वकं वृद्धिग्रहणमुत्तमर्णः संवत्सरपर्य्यन्तं कुर्य्यात्। नातिक्रान्ते संवत्सरे नियमस्य वृद्धिं गृह्णीयात्। न च शास्त्रादृष्टामुक्तधर्म्यादिकविकप्रतायधिकां गृह्णीयात्। अधर्म्मत्वबोधनार्थो निषेधः। चक्रवृद्ध्यादिचतुष्टयीं चाशास्त्रीयाञ्च गृह्णीयात्। तासां स्वरूपमाह। वृहस्पतिः। कायिका कायसंयुक्ता मासग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता। तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता। कालवृद्धिस्तु द्विगुणाधिकग्रहणेन। कायिका पातिवाहदोहादिना। कारिता ऋणिकेन यापत्कालएव उत्तमर्णपीडया कृता। अतस्तोऽपिवृद्धीरशास्त्रीयान गृह्णीयात्। तथा च वृहस्पतिः। भागोच्च द्विगुणादूर्द्धं चक्रवृद्धिश्च गृह्यते। पूर्णे च सोदयम्पश्चात् वार्द्धुष्यं तद्विगर्हितम्। कात्यायनः। ऋणिकेन कृता वृद्धिरधिका सम्प्रकल्पिता। आपत्कालकृता नित्यन्दातव्या कारिता तथा। अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ॥ १५३ ॥

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम्। स दत्वा निर्जितां वृद्धिं करणम्परिवर्त्तयेत् ॥१५४॥

ऋणं दातुमिति। योऽधमर्णो धनदानासामर्थ्यात्पुनर्लेख्यादिक्रियां कर्त्तुमिच्छेत् निर्जितां धर्म्ममार्गेण सत्यतया आत्मनात्मकृतां वृद्धिं दत्वा करणं लेख्यं पुनः कुर्य्यात् ॥ १५४ ॥

अदर्शयित्वा तत्रैव हिरण्यम्परिवर्त्तयेत्। यावती सम्भवेद्वृद्धिस्तावतीन्दातुमर्हति ॥ १५५ ॥

अदर्शयित्वेति। यदि दैवगत्या वृद्धिहिरण्यमपि समग्रं दातुं न शक्नोति तदा तद्गृहीत्वैव तत्रैव पुनःक्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत्। यत्प्रमाणं चक्रवृद्धिधनं तदानीं सम्भवति तद्दातुमर्हति ॥ १५५ ॥

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः। अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात् ॥ १५६ ॥

चक्रवृद्धिमिति। चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभाटकरूपा वृद्धिरभिमता चक्रवृद्धिमाश्रितउत्तमर्णो देशकालव्यवस्थितः। यदि वाराणसीपर्यन्तं वस्त्रादि शकटेन वहामि तदा ममेयद्धनं दातव्यमिति वेतनरूपदेशव्यवस्थितिः यदि मासं यावद्वहामि तदा ममेयद्धनं दातव्यमिति कालव्यव

स्थितिः। एवमभ्युपगतदेशकालौ नियमतौ देशादपूरयन् अकृत्वा हिंसाऽवयवन् तामक्रूपफलं समयं न प्राप्नोति ॥ १५६ ॥

समुद्रयानकुशला देशकालार्थदर्शिनः। स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमम्प्रति ॥ १५७ ॥

अपितु समुद्रेति। स्थलपथजलपथयाने निपुणा इयद्देश पर्यन्तं इयत्कालपर्यन्तं वा उह्यमाने सति एतावाँल्लाभोग्र हीतुं युक्त इत्येवं देशकाललाभधनस्थावविनादयो यां वृद्धिं तथाविधविषये व्यवस्थापयन्ति सैव तत्र व्यवस्था तथाधिगमं धन प्राप्तिं प्रति प्रमाणम् ॥ १५७ ॥

योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन् स तं तस्य प्रयच्छेत्स्वधनादृणम् ॥ १५८ ॥

योयस्येति। योमनुष्योयस्य दर्शनाय प्रतिभूस्तिष्ठेत् धन दानकाले यथायमधमर्णोदर्शनीय इति स तं तस्मिन् काले उत्तमर्णस्यादर्शयन् स्वधनात् तद्धनन्दातुं यतेत ॥ १५८ ॥

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्।
दण्डशुल्कावशेषञ्च न पुत्रो दातुमर्हति ॥१५९॥

प्रातिभाव्यमिति। प्रतिभूत्वेन यद्देयत्वमङ्गीकृतं प्रातिभाव्यं। वृथादानं यत् परिहासनिमित्तं भण्डादिभ्यो देयत्वेन पित्राङ्गीकृतं। द्यूतनिमित्तं सुरानिमित्तञ्च यद्देयं दण्डं दण्डनिमित्तं शुल्कं घट्टादिदेयं तदवशेषञ्च पितृसम्बन्धि पितरि मृते पुत्रो दातुं नार्हति ॥१५९॥

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्व्वचोदितः।
दानप्रतिभुवि प्रेते दायादानपि दापयेत् ॥१६०॥

दर्शनेति। प्रातिभाव्यं न पुत्रो दातुमर्हतीति योऽयम्पूर्व्वोपदेशः स दर्शनप्रतिभुवः पितुर्देयो ज्ञेयः। दानप्रतिभुवि तु पितरि मृते पुत्रादीनपि धनन्दापयेत् ॥१६०॥

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्। पश्चा
त्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥१६१॥
निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः। स्वध
नादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥१६२॥

अदातरीति। निरादिष्टेति। अदातरि दानप्रतिभुवो ऽन्यस्मिन्दर्शनप्रतिभुवि प्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्य

कारणमूलत्वेनाधमर्णोचितधनग्रहणं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केन हेतुना धनं प्राप्तुमिच्छेत् प्रतिभुवोऽमृतत्वात् तत्पुत्रश्च यादानप्रतिभूपुत्रत्वेनादातृत्वादित्याशङ्क्याह निरादिष्टेति। असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निरादिष्टधनः अधमर्णेन निसृष्टधनः यावता धनेनासौ प्रतिभूस्तच्छोधनपर्याप्तधनः तदात्मधनादेव तद्धनं निरादिष्टोऽत्र निरादिष्टधनपुत्रोऽवश्ययोच्यते स्वधनमुत्तमर्णाय दद्यादिति शास्त्रं ॥१६१॥१६२॥

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा। असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥१६३॥

मत्तोन्मत्तेति। मद्यादिना मत्तउन्मत्तो व्याध्यादिपीडितस्ताभ्यामस्वतन्त्रबालवृद्धैरस्वतन्त्रत्वेन पितृभ्रातृनियुक्तादिव्यतिरिक्तेन वा कृतव्यवहारोऽव्यवहारेण सिध्यति ॥ १६३ ॥

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता। बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥१६४॥

सत्येति। इदं मयानुष्ठेयमित्येवमादिका या भाषा लेख्या

हिना विरोधकृतापि यदि ग्राम्योपधर्मात्पारम्पर्यागतस्य स्वराष्ट्र बहिर्भाव्यते तदा सा सत्या न भवति तद्योगानुष्ठेयः ॥ १६४ ॥

योगाधमनविक्रीतं योगदानप्रतिग्रहम् । यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥ १६५ ॥

योगाधमनेति। योगशब्दश्छलवाची छलेन ये बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न तत्त्वतोऽन्यत्रापि निःक्षेपादौ यत्र छलं जानीयात् वस्तुतो निःक्षेपादि न कृतं तत्सर्वं निवर्तयेत् ॥ १६५ ॥

ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः । दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः ॥ १६६ ॥

ग्रहीतेति। ऋणग्रहीता यदि मृतः स्यात्तेन च पूर्वविभक्ता विभक्तवर्गस्थात्कुटुम्बसंवर्द्धनार्थं तदृणव्ययः कृतः तदा तदृणं विभक्तैरविभक्तैश्च स्वधनाद्दातव्यम् ॥ १६६ ॥

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् । स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥ १६७ ॥

कुटुम्बार्थेति। तद्देशस्थे देशान्तरस्थे वा स्वामिनि स्वामियत्किञ्चित्कुटुम्बपोषणनिमित्तं दासोपि यदृणादानादि कुर्यात् स्वामी तत्तथाऽनुमन्येत ॥ १६७ ॥

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।
सर्व्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥१६८॥

बलाद्दत्तमित्यादि। बलाद्दत्तमप्रतिग्राह्यं बलाद्भुक्तभूम्यादि बलाल्लेखितञ्चऋणद्धिपत्रादि प्रदर्शनञ्चैतत्सर्व्वान् बलकृतान् व्यवहारान्निवर्त्तनीयान्मनुराह ॥१६८॥

चयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्।
चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः ॥ १६९ ॥

त्रयः परार्थेदृति। साक्षिणः प्रतिभूः कुलञ्च धर्मार्थव्यवहारेषु त्रयएते परार्थं क्लेशमनुभवन्ति तस्मादनेन साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणञ्च नाभी कारयितव्याः। चत्वारः पुनर्ब्राह्मणोत्तमर्णवणिगाजानः परार्थन्दानफलोत्पादनञ्च द्रव्यार्पणविक्रयव्यवहारेक्षणरूपं कुर्व्वाणाधनोपचयं प्राप्नुवन्ति। तस्माद्विप्रोदातारं आढ्योऽधमर्णं वणिक् क्रेतारं राजा व्यवहर्त्तारमनेन न प्रवर्त्तयेत्। पूर्व्वश्लोकाभिहितबलनिषेधशेषायमपद्यः ॥१६९॥

अनादेयन्नाददीत परिक्षीणोपि पार्थिवः। न चादेयं समृद्धोपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥१७०॥

अनादेयमिति। क्षीणधनोपि राजा न्यायानर्हं गृह्णीयात् समृद्धोपि सूक्ष्ममपि ग्राह्यं धनं न त्यजेत् ॥१७०॥

अनादेयस्य चादानादादेयस्य च वर्जनात्।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥१७१॥

अनादेयेति। अग्राह्यग्रहणात् शास्त्रीयग्राह्यपरि त्यागाच्च राज्ञः पौरैरसामर्थ्यं ख्याप्यते। ततश्च स प्रेत्याधर्मेण नरकादिभोगादिह लोकेऽप्यकीर्त्या विनश्यति ॥ १७१ ॥

स्वादानाद्वर्णसंसर्गात्त्वबलानां च रक्षणात्। बलं संजायते राज्ञः स प्रेत्येह च वर्द्धते ॥ १७२ ॥

स्वादानादिति। न्याय्यधनग्रहणाद्वर्णानां स्वजातीयैः शास्त्रीय परिणयनादिनियमात् यद्वा वर्णसंसर्गाद्वर्णसङ्करादित्य पि रक्षणादिति योजनीयं प्रजानां दुर्बलानां बलवद्भ्योऽपि रक्षणात्सामर्थ्यमुत्पद्यते नृपस्य तत्फलादिह लोकपरलोक योश्च वर्द्धते ॥ १७२ ॥

तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये। वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥ १७३ ॥

यत एवम् तस्माद्यमेति। तस्माद्यम इव राजा वशीकृतक्रोधो जितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य समया चेष्टया धर्मेण याम्यरूपया वर्तेत ॥ १७३ ॥

यस्त्वधर्म्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः।
अचिरात्तं दुरात्मानं वशे कुर्व्वन्ति शत्रवः॥ १७४॥

यतोयस्त्वधर्म्मेणेति। यः पुनर्नृपतिर्लोभाद्विद्यामोहाद् धर्म्मेण व्यवहारदर्शनादीनि कार्य्याणि कुरुते तन्दुष्टचित्तं प्रकृति पौरविरागाच्छिद्रमेव शत्रवोनिगृह्णन्ति॥ १७४॥

कामक्रोधौ तु संयम्य योऽर्थान् धर्म्मेण पश्यति।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः॥ १७५॥

कामक्रोधेति। योराजा रागद्वेषौ विहाय धर्म्मेण कार्य्याणि निरूपयति तं राजानं प्रजाभजन्ते समुद्रमिव नद्यः यथोयथा समुद्राद्य निवर्त्तन्ते तेनैवैकतां यान्ति प्रजाअपि तथानृपादनु वर्त्तिन्यः तदेकतानाभवन्तीति साम्यम्॥ १७५॥

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे। स राज्ञा तच्चतुर्भागन्दाप्यस्तस्य च तद्धनम्॥ १७६॥

यः साधयन्तमिति। योऽधमर्णोराजवल्लभोऽहमिति मर्यादा मुत्तमर्णं स्वेच्छया धनं साधयन्तं नृपे निवेदयेत् स राज्ञा धनचतुर्भागन्दण्ड्यः तस्य तद्धनं दापनीयः॥ १७६॥

कर्मणापि समं कुर्याद्धनिकायाधमर्णिकः। समोऽपकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः॥१७७॥

कर्मणापीति। समानजातिरपकृष्टजातिर्वाधमर्णो धनाभावे यदि जात्यनुरूपकर्मकरणेनापि समं कुर्यात्। निकृष्टोत्तमर्णाधमर्णव्यपदेशतया धनिकसममात्मानं कुर्यात्। समजातिरपि ब्राह्मणेतरः कर्मणा क्षत्रविट्शूद्रांस्तु समान् हीनांश्च दापयेत् इति कात्यायनेन विशेषितत्वात्। श्रेयान्पुनरुत्कृष्टजातिर्न कर्म कारयितव्यः किन्तु शनैःशनैर्यथासम्भवं तद्धनन्दद्यात्॥१७७॥

अनेन विधिना राजा मिथो विवदतां नृणाम्। साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत्॥१७८॥

अनेनेति। अनेन उक्तप्रकारेण परस्परं विवदमानानामर्थिप्रत्यर्थिनां साक्ष्यादिप्रमाणेन निर्णीतानि कार्याणि विप्रतिपत्तिशून्येन राजा समीकुर्यात्॥१७८॥

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद्बुधः॥१७९॥

कुलज इति। सत्कुलप्रसूते सदाचारवति धर्मवेदिनि सत्याभिधायिनि बहुपुत्रादिपरिजने ऋजुप्रकृतौ मनुष्ये धनिन्यार्ये निक्षेपं स्थापयेत्॥१७९॥

योयथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः। स तथैव ग्रहीतव्योयथा दायस्तथा ग्रहः॥१८०॥

योयथेति। योमनुष्योयेन प्रकारेण मुद्रारहितं समुद्रं वा ससाक्षिकमसाक्षिकं वा यमर्थं सुवर्णादि यस्य हस्ते निक्षिपेत्सो ऽर्थस्तेन निक्षेप्त्रा तथैव याच्ञायस्मात् येन प्रकारेण समर्पणं तेनैव प्रकारेण ग्रहणं न्याय्यं। समुद्रस्थापितसुवर्णादेर्निक्षेप्ता स्वयमेवमुद्रां भित्त्वा यदा वदति ममेदं तुलयित्वा समर्पयेति अभिधाने दण्डायचैमिदं॥१८०॥

योनिक्षेपं याच्यमानोनिक्षेप्तुर्न प्रयच्छति। स याच्यः प्राड्विवाकेन तन्निःक्षेप्तुरसन्निधौ॥१८१॥

योनिक्षेपेति। यः पुरुषोदेहि मे निक्षिप्तं हिरण्यादिद्रव्यमित्येवंनिक्षेप्त्रा प्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापिते प्राड्विवाकेन तस्य निक्षेप्तुरसन्निधौ याचनीयः॥१८१॥

साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः। अपदेशैश्च संन्यस्य हिरण्यन्तस्य तत्त्वतः॥१८२॥

किं कृत्वा याचनीय मित्याह साक्ष्येति। प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैश्चारपुरुषैः प्रतिग्राहयवाक्यैः सौम्यादिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यादि तत्रैव तस्य

निक्षेपविषया नैव च चारपुरुषैः स निःक्षेपधारी प्राड्विवाकेन चारपुरुषनिक्षिप्तसुवर्णं याच्यः॥ १८२॥

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्। न तत्र विद्यते किंचिद्यत्परैरभियुज्यते॥ १८३॥

स यदीति। स निक्षेपधारी यथान्यस्तं समुद्रमसुद्रमा यथा कृतं कटकमुकुटाद्याकारेण रचितं यदि तथैव प्रतिपद्येत मय्य न्यस्तमिति तदा परैश्च पूर्वनिक्षेप्तृप्राड्विवाकैर्यदि मया निक्षिप्तमित्यभियुज्यते तत्र न किंचिद्दण्डोऽस्तीति ज्ञातव्यम् ॥१८३॥

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि। उभौ निगृह्य दाप्यः स्यादिति धर्मस्य धारणा॥ १८४॥

तेषामिति। तेषां चारपुरुषाणां यन्निक्षिप्तं हिरण्यं यथा न्यस्तं यदि तन्न दद्यात्तदा द्वावपि निक्षेपौ ज्ञापकधारकत्वेन निगृह्य सर्वोऽपि दापनीयः स्यादित्येवंरूपो धर्मस्य धारणा निश्चयः। योनिक्षेपमित्यादिश्लोकचतुष्टयस्य चेदम एव पाठ क्रमो मेधातिथिगोविन्दराजादिभिर्लिखितः। गोविन्दराजेन तु तद्वाभावे प्रतिनिधिमिति श्लोकोऽन्यत्र एव पठितः तदाप न्यायकृतिः। यथा वक्ष्यमाणादरः॥ १८४॥

स्थितिः। एवमभ्युपगतदेशकालो नियमतो देशादपूरयन् शकटादिनाऽवहन् तामक्रूपफलं सकलं न प्राप्नोति ॥ १५६ ॥

समुद्रयानकुशला देशकालार्थदर्शिनः। स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमम्प्रति ॥ १५७ ॥

अपितु समुद्रेति। जलपथजलपथयाने विपुला इयद्देशपर्यन्तं इयत्कालपर्य्यन्तं वा गच्छमाने सति एतावाँल्लाभोपयोगीतुं युक्तइत्येवं देशकाललाभधनप्रावविगादयोयां वृद्धिं तथाविधविषये व्यवस्थापयन्ति सैव तत्र व्यवस्था तथाधिगमं धन प्राप्तिं प्रति प्रमाणम् ॥ १५७ ॥

योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन् स तं तस्य प्रयच्छेत्स्वधनादृणम् ॥ १५८ ।

योयस्येति। योमनुष्योयस्य दर्शनाय प्रतिभूस्तिष्ठेत् धन दानकाले मयायमधमर्णोदर्शनीयइति स तं तस्मिन् कालेऽसमर्थस्यादर्शयन् स्वधनात् तद्धनन्दातुं यतेत ॥ १५८ ॥

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्।
दण्डशुल्कावशेषञ्च न पुत्रो दातुमर्हति ॥१५९॥

प्रातिभाव्यमिति। प्रतिभूत्वेन यद्देयत्वमृणं तत्प्रातिभाव्यं। वृथादानं यत् परिहासनिमित्तं पण्डादिभ्यो देयत्वेन पित्रा प्रतिज्ञातं। द्यूतनिमित्तं सुरानिमित्तञ्च यद्देयं दण्डं दण्डनिमित्तं शुल्कं घट्टादिदेयं तदवशेषञ्च पितृसम्बन्धि पितरि मृते पुत्रो दातुं नार्हति ॥१५९॥

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्व्वचोदितः।
दानप्रतिभुवि प्रेते दायादानपि दापयेत् ॥१६०॥

दर्शनेति। प्रातिभाव्यं न पुत्रो दातुमर्हतीति योऽयम्पूर्व्वोपदेशः स दर्शनप्रतिभुवः पितुर्द्देयो ज्ञेयः। दानप्रतिभुवि तु पितरि मृते पुत्रादीनपि धनन्दापयेत् ॥१६०॥

अदातरि पुनर्द्दाता विज्ञातप्रकृतावृणम्। पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥१६१॥
निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः। स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥१६२॥

अदातरीति। निरादिष्टेति। अदातरि दानप्रतिभुवो ऽन्यस्मिन्दर्शनप्रतिभुवि प्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्य

कारणमूलोऽधमर्णो वितधनप्रत्ययं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केन हेतुना धनं प्राप्तुमिच्छेत् प्रतिभुवोऽमृतत्वात् तत्पुत्रश्च यादानप्रतिभूपुत्रेणादातव्यमित्याशङ्क्याह निरा दिष्टेति। असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निरादि ष्टधनः अधमर्णेन निसृष्टधनः यावता धनेनासौ प्रतिभूस्तस्तो धनपर्य्याप्तधनः तदात्मधनादेव तद्दृणं निरादिष्टोऽस्य निरादि ष्टधनपुत्रो बन्धवयोच्यते स्वधनमुत्तमर्णाय दद्यादिति शास्त्रं ॥१६१॥१६२॥

मत्तोन्मत्तार्ताध्यधीनैर्बालेन स्थविरेण वा। असं
बद्धकृतश्चैव व्यवहारो न सिध्यति ॥१६३॥

मत्तोन्मत्तेति। मद्यादिना मत्तउन्मत्तोव्याध्यादिपीडि तस्ताभ्यामस्वतन्त्रवावबृद्धैरस्वतन्त्रत्वेन पितृभ्रातृनिषुक्तादि व्यतिरिक्तेन वा कृतव्यवहारोऽव्यवहारेण सिध्यति ॥ १६२ ॥

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥१६४॥

सत्येति। इदं मयानुष्ठेयमित्येवमादिका या भाषा लेखा

हिता विपरीतकृतापि यदि शास्त्रीयधर्मात्याचारधर्माच्चव्य वहाराच्च बहिर्भाव्यते तदा सा सत्या न भवति तद्धर्मानुष्ठेयः ॥१६४॥

योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥१६५॥

योगाधमनेति। योगशब्दश्छलवाची छलेन ये बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न तत्ततोऽन्यत्रापि निःक्षेपादौ यत्र छलं जानीयात् वस्तुतो निःक्षेपादि न कृतं तत्सर्वं निवर्तते॥१६५॥

ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः। दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः॥१६६॥

ग्रहीतेति। ऋणग्रहीता यदि मृतः स्यात्तेन च पूर्वविभक्ता विभक्तधर्मेणाऽकुटुम्बसंवर्द्धनार्थं तद्व्ययः कृतः तदा तद्धनं विभक्तैरविभक्तैश्च स्वधनाद्दातव्यम्॥१६६॥

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्। स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्॥१६७॥

कुटुम्बार्थेइति। तद्देशे देशान्तरे वा स्वामिनि स्वामि वन्नपि कुटुम्बपालननिमित्तं दासोऽपि ऋणादानादि कुर्यात् स्वामी तत्तथाऽनुमन्येत॥१६७॥

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।
सर्व्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥१६८॥

बलाद्दत्तमित्यादि। बलाद्दत्तमप्रतिग्राह्यं बलाद्भुक्तभूम्यादि बलालेखितसकृद्भुक्तपत्रादि एतदन्यदपीत्थंसर्व्वान् बलकृतान् व्यवहारानिवर्त्तनीयान्मनुराह ॥१६८॥

त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्।
चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः ॥ १६९ ॥

त्रयः परार्थे इति। साक्षिणः प्रतिभूः कुलञ्च धर्म्मार्थव्यवहारेषु त्रय एते परार्थं क्लेशमनुभवन्ति तस्मादनेन साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणञ्च नाशी कारयितव्याः। चत्वारः पुनर्ब्राह्मणोत्तमर्णवणिग्राजानः परार्थन्दानफलोत्पादनधनद्रव्यार्पणविक्रयव्यवहारेक्षणरूपं कुर्व्वाणा धनोपचयं प्राप्नुवन्ति। तस्माद्विप्रोद्दातारं आढ्योऽधमर्णं वणिक् क्रेतारं राजा व्यवहर्त्तारमबलेन न प्रवर्त्तयेत्। पूर्व्वश्लोकाभिहितबलनिषेधस्यैवायमपवादः ॥ १६९ ॥

अनादेयन्नाददीत परिक्षीणोपि पार्थिवः। न चादेयं समृद्धोपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥ १७० ॥

अनादेयमिति। क्षीणधनोपि राजा न्यायाननर्हं न गृह्णीयात् समृद्धोपि स्वल्पमपि ग्राह्यं धनं न त्यजेत् ॥ १७० ॥

अनादेयस्य चादानादादेयस्य च वर्जनात् ।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥१७१॥

अनादेयस्येति। अनादेयग्रहणात् शास्त्रीयग्राह्यपरित्यागाच्च राज्ञः पौरैरसामर्थ्यं ख्याप्यते। ततश्च प्रेत्याधर्मेण नरकादिभोगादिहलोकेऽपकीर्त्या विनश्यति ॥ १७१ ॥

स्वादानाद्वर्णसंसर्गात्त्वबलानाञ्च रक्षणात्। बलं संजायते राज्ञः स प्रेत्येह च वर्द्धते ॥ १७२ ॥

स्वादानादिति। स्वाद्यधनग्रहणाद्वर्णानां सजातीयैः शास्त्रीयपरिणयनादिसम्बन्धात् यद्वा वर्णसंसर्गाद्वर्णसङ्करादित्यपि रक्षणादिति योजनीयं प्रजानां दुर्बलानां बलवद्भ्योऽपि रक्षणात्सामर्थ्यमुत्पाद्यते नृपस्य तस्माच्चायमिह लोकपरलोकयोश्च वर्द्धते ॥ १७२ ॥

तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये। वर्त्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥ १७३ ॥

यत एवम् तस्माद्यमेति। तस्माद्यम इव राजा वशीकृतक्रोधो जितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य यमस्य चेष्टया धर्मेण साम्यरूपया वर्त्तेत ॥ १७३ ॥

यस्त्वधर्म्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्व्वन्ति शत्रवः ॥ १७४ ॥

यस्त्वधर्म्मेणेति । यः पुनर्नृपतिर्लोभादिव्यामोहाद धर्म्मेण व्यवहारदर्शनादीनि कार्य्याणि कुरुते तन्दुष्टचित्तं प्रकृति पौरविरागाच्छिद्रमेव शत्रवोऽभिभवन्ति ॥ १७४ ॥

कामक्रोधौ तु संयम्य योऽर्थान् धर्म्मेण पश्यति ।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः ॥ १७५ ॥

कामक्रोधेति । यो राजा रागद्वेषौ विहाय धर्म्मेण कार्य्याणि निरूपयति तं राजानं प्रजाभजन्ते समुद्रमिव नद्यः यथा नद्यः समुद्रान्न निवर्त्तन्ते तेनैवैकतां यान्ति प्रजाअपि तस्मान्नृपादनु वर्त्तिन्यः तदेकतामाभवन्तीति वाक्यम् ॥ १७५ ॥

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे । स राज्ञा तच्चतुर्भागन्दाप्यस्तस्य च तद्धनम् ॥ १७६ ॥

यः साधयन्तमिति । योऽधमर्णो राजवल्लभोऽहमिति मर्म्मा हुत्तमर्णं स्वेच्छया धनं साधयन्तं नृपे निवेदयेत् स राज्ञा चच्चतुर्भागमञ्चक्ष्याः तस्य तद्धनं दापनीयः ॥ १७६ ॥

कर्मणापि समं कुर्याद्धनिकायाधमर्णिकः। समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः॥ १७७॥

कर्मणापीति। समानजातिरपकृष्टजातिर्वाधमर्णो धनाभावे सति समात्मानुरूपकर्मकरणेनापि समं कुर्यात्। निकृष्टो ऽधमर्णोऽधमर्णव्यपदेशतया धनिकसममात्मानं कुर्यात्। समजातिरपि ब्राह्मणेतरः कर्मणा क्षत्रविट्शूद्रान्समान् हीनांश्च दापयेत् इति कात्यायनेन विशेषितत्वात्। श्रेयान्पुनरुत्कृष्टजातिर्न कर्म कारयितव्यः किन्तु शनैः शनैर्यथासम्भवं तद्धनन्दद्यात्॥ १७७॥

अनेन विधिना राजा मिथोविवदतां नृणाम्। साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत्॥१७८॥

अनेनेति। अनेन उक्तप्रकारेण परस्परं विवदमानानामर्थिप्रत्यर्थिनां साक्ष्यादिप्रमाणेन निर्णीतानि कार्याणि विप्रतिपत्तिशमनेन राजा समीकुर्यात्॥ १७८॥

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्ये निक्षेपन्निक्षिपेद्बुधः॥ १७९॥

कुलजइति। सत्कुलप्रसूते सदाचारवति धर्मवेदिनि सत्याभिधायिनि बहुपुत्रादिपरिजने ऋजुप्रकृतौ मनुष्ये धनिन्यार्येऽमायाविनि निक्षेपं स्थापयेत्॥ १७९॥

योयथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः। स तथैव ग्रहीतव्योयथा दायस्तथा ग्रहः॥ १८०॥

योयथेति। योमनुष्योयेन प्रकारेण मुद्रारचितं समुद्रं वा ससाक्षिकमसाक्षिकं वा यमर्थं सुवर्णादि यस्य हस्ते निक्षिपेत्सो ऽर्थस्तेन निक्षेप्त्रा तथैव याच्योयस्मात् येन प्रकारेण समर्पणं तेनैव प्रकारेण ग्रहणं न्याय्यं। समुद्रस्थापितसुवर्णादेर्निक्षेप्ता स्वयमेवमुद्रां भित्त्वा यदा वदति ममेदं तुलयित्वा समर्पयेति तदभिधाने दृष्टार्थमिदं॥ १८०॥

योनिक्षेपं याच्यमानोनिक्षेप्तुर्न प्रयच्छति। स याच्यः प्राड्विवाकेन तन्निःक्षेप्तुरसन्निधौ॥ १८१॥

योनिक्षेपेति। यः पुरुषोदेहि मे निक्षिप्तं हिरण्यादिद्रव्यमिति तेननिक्षेप्त्रा प्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापिते प्राड्विवाकेन तस्य निक्षेप्तुरसन्निधौ याचनीयः॥ १८१॥

साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः। अपदेशैश्च संन्यस्य हिरण्यन्तस्य तत्त्वतः॥ १८२॥

किं कृत्वा याचनीय मित्याह साक्ष्येति। प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैरपुरुषैः प्रतिग्रहसमयादिकैः सौम्या दिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यानि तत्रैव तस्य

निर्णयविधिना तैरेव चारपुरुषैः स निःक्षेपधारी साक्षिवाक्येन चारपुरुषनिक्षिप्तसुवर्णं दाप्यः॥१८२॥

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्। न तत्र विद्यते किंचिद्यत्परैरभियुज्यते॥१८३॥

स यदीति। स निक्षेपधारी यथान्यस्तं समुद्रममुद्रं वा यथाकृतं कटकमुकुटाद्याकारेण रचितं यदि तथैव प्रतिपद्येत ममास्ति स्थापनामिति तदा परैश्च पूर्वनिक्षेप्त्रा साक्षिवाक्यैरिदं यन्निक्षिप्तमित्यभियुज्यते तत्र न किंचिदस्तीति ज्ञातव्यम् ॥१८३॥

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि। उभौ निगृह्य दाप्यः स्यादिति धर्मस्य धारणा॥१८४॥

तेषामिति। तेषां चारपुरुषाणां यन्निक्षिप्तं हिरण्यं यथान्यस्तं यदि तत्र दद्यात्तदा तावपि निक्षेपौ ज्ञापकचारकृतम् उभौ सन्नीय दापनीयः स्यादित्येवंरूपो धर्मस्य धारणा निश्चयः। योनिक्षेपमित्यादिश्लोकचतुष्टयं चेहम एव पाठक्रमो मेधातिथिभोजदेवादिभिर्लिखितः। गोविन्दराजेन तु साक्ष्यभावे प्रणिधिभिरिति श्लोकोऽन्त एव पठितः तदा च कार्यच्युतिः। यथा दृष्टाचारादरः॥१८४॥

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे। नश्यतोविनिपाते तावनिपाते त्वनाशिनौ॥ १८५॥

निक्षेपइति। निक्षिप्यतइति निक्षेपः मुद्राङ्कितमगणितं वाऽगणनस्थं वा यन्निधीयते स उपनिधिः ग्रास्त्रपरिभाषकवहुप देश्यभेदः। तौ निक्षेपोपनिधी निक्षेप्तरि उपनिधातरि च जीवति प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरे तद्धनाधिकारिणि कदाचिन्न निक्षेपधारिणा देयौ यतस्तस्य पुत्रादेरपि पितुरसमर्पण विनाशे तौ निक्षेपोपनिधी नश्यतः पुत्रादेः पुनरविनाशे समर्पणेन कदाचिदविनाशिनौ स्यातां तस्मादनर्थसन्देहान्न देयौ॥ १८५॥

स्वयमेव तु योदद्यान्मृतस्य प्रत्यनन्तरे। न स राज्ञा नियोक्तव्योन निक्षेप्तुस्य बन्धुभिः॥ १८६॥

स्वयमेवेति। निक्षेप्तुर्मृतस्य निक्षेपधारी निक्षिप्तधनं तद्धनाधिकारिणि पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति स राज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति नाभियोक्तव्यः॥ १८६॥

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्व्वकम्। विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥ १८७॥

यदिकयचिद्भ्रान्तिः स्यात्तदा अच्छलेनैवेति। तद्धने

यथान्तरस्वत्वावंचकवचनासूहनादिपरिहारेणैव प्रीतिपूर्वकं निश्चिनुयात् न तु झटिति हिंसादि दानेन । तत्र निक्षेपधारिणः शीलमवेक्ष्य धार्मिकोऽयमिति ज्ञात्वा सामप्रयोगेण निश्चिनुयात् ॥ १८७ ॥

निक्षेपेष्वेषु सर्वेषु विधिः स्यात्परिसाधने । समुद्रे नाप्नुयात्किंचिद्यदि तस्मान्न संहरेत् ॥ १८८ ॥

निक्षेपेष्विति । सर्वेषु निक्षेपेषु अपह्नियमाणेषु एष साक्ष्याभावे चारप्रयोगादिपूर्वोक्तविधिर्निर्णयसिद्धौ स्यात् । मुद्रितादौ पुनः निक्षेपधारी यदि प्रतिमुद्रादिना न किंचिदपहरेत्तदा च तन्निक्षेप्ता तेन किंचिद्दूषणमाप्नुयात् ॥ १८८ ॥

चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा । न दद्याद्यदि तस्मात्स न संहरति किंचन ॥ १८९ ॥

चौरैरिति चौरैर्मुषितं उदकेन देशान्तरमापितं अग्निना दग्धं च निक्षेपादि निक्षेपधारी न दद्यात् । यदि स्वयं तस्मान्न किंचिदपहरति ॥ १८९ ॥

निक्षेपस्यापहर्तारमनिक्षेप्तारमेव च । सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥ १९० ॥

निक्षेपस्येति । निक्षेपस्यापहर्तारं तथा अनिक्षिप्य याचितारं

ना चाप्रेक्षा संभवात् येनैव प्रकारेण दावं तेनैव प्रकारेण प्रत्यर्पणं प्रदातव्यमिति अथवा निक्षेपधारिणोऽयं नियमविधिः। ये यथा निक्षिपेयुस्तदिति तु निक्षेप्तुर्नियमार्थं ग्रहीतव्यमिति अव स्थात् प्रतीत ग्रैगतद्रव्यम् ॥ १९५ ॥

निक्षिप्तस्य धनस्यैवमीक्षोपनिहितस्य च। राजा विनिर्णयं कुर्यादक्षिण्वन्न्यासधारिणम् ॥१९६॥

निक्षिप्तस्येति। राजा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रा दियुतस्य वा उपनिधिरूपस्य तथा प्रीत्या कतिचित्कालभोगा र्थमर्पितस्यानेनैव प्रकारेण न्यासधनधारिणमपीडयन् निर्णयं कुर्यात् ॥ १९६ ॥

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः। न तन्नयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम् ॥ १९७ ॥

विक्रीणीतेइति। अस्वामी यः स्वामिना चाननुमतः पर कीयद्रव्यं विक्रीणीते वस्तुतश्चौरमचौरमात्मानं मन्यमानन्तं साक्षित्वं कारयेत् न कुत्रचिदपि प्रमाणीकुर्यादित्यर्थः ॥ १९७ ॥

अवहार्यो भवेच्चैव सान्वयः षट्शतन्दमं । निर
न्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषं ॥ १९८ ॥

अवहार्य्येति। एष परस्वविक्रयी यदि स्वामिनोभ्रात्रादि
रूपेण सान्वयः सम्बन्धी भवति तदा षट्पणशतानि अवहा
र्य्यो दण्डनीयः यदि पुनः स्वामिनः सम्बन्धी न भवति अनप
सरश्च स्यात् अपसरत्यनेनास्मात् सकाशादागमित्यपसरः
प्रतिग्रहक्रयादिः स यस्य स्वामिसम्बन्धिपुत्रादेः सकाशान्नास्ति
तदा चौरसम्बन्धिपापं प्राप्नोति तद्दण्डनीय इत्यर्थः ॥ १९८ ॥

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥ १९९ ॥

अस्वामिनेति। अस्वामिना यद्दत्तं यत्क्रीतं विक्रीतं वा तद
कृतमेव बोद्धव्यम् व्यवहारे यथा मर्य्यादा तथा कृतं न भवती
त्यर्थः ॥ १९९ ॥

सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।
आगमः कारणन्तत्र न सम्भोग इति स्थितिः ॥ २०० ॥

सम्भोग इति। यस्मिन् वस्तुनि सम्भोगो विद्यते क्रयादि
रूपस्त्वागमो नास्ति तत्र प्रथमपुरुषभोगरूपागम एव प्रमाणं
न भोग इति शास्त्रमर्य्यादा ॥ २०० ॥

विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसंनिधौ ।
क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥ २०१ ॥

विक्रयादिति । विक्रीयतेऽस्मिन्निति विक्रयदेशो विक्रयः तस्माद्यत् क्रेयधनं किंचिद्वणिक्समूहसमक्षं क्रीणाति सोऽनेन क्रयेण मूल्ये तेन स्वत्वं गृह्णीयात् अतो न्यायत एवास्याभिविक्रेतृ स्वाम्यात् क्रयणादिशुद्धं धनं लभते ॥ २०१ ॥

अथ मूलमनाहार्यं प्रकाशक्रयशोधितः । अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥ २०२ ॥

अथेति । अथ मूलमस्वामी विक्रेता मरणाद्देशान्तरगमनादिना वा व्यवहर्तुं न शक्नोति प्रकाशक्रयेणासौ निश्चितः तदा दण्डानर्ह एव क्रेता राज्ञा मुच्यते नष्टधनस्वामी च यद् स्वामिना विक्रीतं द्रव्यं तत् क्रेतुर्हस्तात् लभते अत्र च विषयेऽर्द्धं मूल्यं क्रेतुर्दत्त्वा अर्द्धं स्वामिना प्राप्यं तदाह वृहस्पतिः । वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः । अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः । स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीयात्स्वकं धनम् । अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥ २०२ ॥

पिता दाता दद्यादेव भवति नैवाकथने दद्यादसौ गम्यते यस्तु दोषवतीं कन्यामिति वक्ष्यति॥ २०५॥

ऋत्विग्यदि वृतोयज्ञे स्वकर्म्म परिहापयेत्। तस्य कर्म्मानुरूपेण देयोंऽशस्सहकर्तृभिः॥ २०६॥

अथ सम्भूय समुत्थानमाह ऋत्विगिति। यज्ञे कृतवरण ऋत्विग् यदि किञ्चित्कर्म कृत्वा व्याध्यादिना कर्म त्यजति तदा तदीयेतरऋत्विग्भिः पर्यालोच्य कृतानुसारेण दक्षिणांशो देयः॥ २०६॥

दक्षिणासु च दत्तासु स्वकर्म्म परिहापयन्। कृत्स्नमेव लभेतांशमन्येनैव च कारयेत्॥ २०७॥

दक्षिणेति। माध्यन्दिनसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्म परित्यजन् तु प्राप्यात् कृत्स्नमेव दक्षिणाभागं लभेत कर्मशेषं प्रकृतमन्येन कारयेत्॥ २०७॥

यस्मिन् कर्म्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः। स एव ता आददीत भजेरन्सर्व्व एव वा॥ २०८॥

यस्मिन्निति। यस्मिन् कर्मण्याधानादौ अङ्गमङ्गम्प्रति या दक्षिणा यत्सम्बन्धेन श्रुताः स्युः स एव ता आददीत उत तत्र त्यागमात्रं सर्वे विभज्य गृह्णीरन्निति संशयः॥ २०८॥

होतारः ते मुख्यर्त्विग्गृहीतस्य तृतीयमंशं लभन्ते पादिनस्तु ग्रावस्तुदादयो होत्रसम्बन्धात्ते मुख्यर्त्विग्गृहीतस्य चतुर्थमंशं लभन्ते एतच्च षट् षट् द्वितीयेभ्यः चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्य इति सूत्रयता कात्यायनेन स्फुटीकृतम् ॥ २१० ॥

सम्भूय स्वानि कर्म्माणि कुर्व्वद्भिरिह मानवैः।
अनेन विधियोगेन कर्त्तव्यांशप्रकल्पना ॥ २११ ॥

सम्भूयेति। मिलिता गृहनिर्माणादीनि स्वकर्माणि शौचि स्थपतिसूत्रधारादिभिर्मनुष्यैः कुर्व्वद्भिरनेन यज्ञदक्षिणा विधानाश्रयणेन विज्ञानव्यापाराद्यपेक्षया भागकल्पना कार्य्या ॥२११॥

धर्म्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम्।
पश्चाच्च न तथा तत् स्यान्न देयन्तस्य तद्भवेत् ॥ २१२ ॥

इदानीं दत्तानपकर्म्माह धर्म्मार्थमिति। येन याज्ञादियोर्थं कस्मैचिद्याचमानाय धनन्दत्तं प्रतिश्रुतं वा स्यात् पश्चाच्च तद्धनमसौ यागार्थं न विनियुञ्जीत तदा तद्दत्तमपि धनं याच्यं प्रतिश्रुतञ्च न देयं। यदाह गौतमः। प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात् ॥ २१२ ॥

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः। राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः॥ २१३॥

यदीति। यदि तद्दत्तमर्थं गृहीत्वा लोभाहङ्काराद्वा न ददाति प्रतिश्रुतं वा धनं यत्नेन गृह्णाति तदा तस्य चौर्यपापस्य प्रशमार्थं राज्ञा सुवर्णं दण्डस्तदापनीयो भवेत्॥ २१३॥

दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया। अत ऊर्द्ध्वं प्रवक्ष्यामि वेतनस्यानपक्रियाम्॥ २१४॥

दत्तस्येति। एतद्दत्तस्याप्रतिपादनं धर्मादनपेतं तत्त्वतउक्तं अतोऽनन्तरं भृतेरपनयादिकं वक्ष्यामि॥ २१४॥

भृतोनार्त्तोन कुर्य्याद्यो दर्पात्कर्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्॥ २१५॥

भृत इति। योभृतिपरिक्रीतो व्याध्यपीडितो यथानिरूपितं कर्माहङ्कारान्न कुर्य्यात् स कर्मानुरूपेण सुवर्णकृष्णलान्यष्टौ दण्डनीयः वेतनञ्च न देयम्॥ २१५॥

आर्त्तस्तु कुर्य्यात्स्वस्थः सन् यथाभाषितमादितः। स दीर्घस्यापि कालस्य तल्लभेतैव वेतनम्॥ २१६॥

आर्त्तस्त्वादि। यदा व्याध्यादिपीडया कर्म न करोति

त्वतः वत् यादृग्भाषितं पूर्वं तादृक्कर्म कुर्यात् वेतनञ्च स चिरकालेऽपि लभेतैव ॥ २१६ ॥

यथोक्तमार्त्तः सुस्थोवा यस्तत्कर्म्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्म्मणः ॥ २१७ ॥

यथोक्तमिति। यत्कर्म्म यथाभाषितम्पीडितोऽन्येन नकारयेत् स्वस्थोवा न कुर्यात् नापि कारयेत् तस्य किञ्चिन्न्यूनस्यापि कृतस्य कर्म्मणोवेतनम्न देयम् ॥ २१७ ॥

एषधर्म्मोऽखिलेनोक्तोवेतनादानकर्म्मणः। अत ऊर्द्ध्वं प्रवक्ष्यामि धर्म्मं समयभेदिनाम् ॥ २१८ ॥

एषधर्म्मइति। एषा व्यवस्था वेतनादानाख्यकर्म्मणोनिःशेषेणोक्ता अतोऽनन्तरं संविद्व्यतिक्रमकारिणां दण्डादिव्यवस्थां वदिष्यामि ॥ २१८ ॥

योग्रामदेशसंघानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरोलोभात्तं राष्ट्राद्विप्रवासयेत् ॥ २१९ ॥

योग्रामेति। ग्रामदेशवञ्चाभावतदाधिनोवञ्चनो संघोत्व विग्मादिसमूहः इदमस्माभिः कर्त्तव्यम्परिहार्य्यमित्येवंरूपं संकेतं सत्यादिशपथेन कृत्वा तमर्थं योनरोलोभादिना तिक्रामेत्तं राजा राष्ट्रान्निर्व्वासयेत् ॥ २१९ ॥

निगृह्य दापयेच्चैनं समयव्यभिचारिणम्। चतुः
सुवर्णान् षण्निष्कांश्छतमानञ्च राजतं ॥ २२० ॥

निगृह्येति। यश्चैनं संविद्व्यतिक्रमकारिणं निरस्य चतुरः
सुवर्णान् षण्निष्कान् प्रत्येकं चतुःसुवर्णपरिमितान् राजतञ्च
शतमानं त्रिंशत्यधिकरत्तिकाशतत्रयपरिमाणमयमेतद्विच
बलाबलगौरवापेक्षया समुचितं समस्तं वा राजा दण्डं दाप
येत् ॥ २२० ॥

एतद्दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥ २२१ ॥

एतदिति। ग्रामेषु ब्राह्मणादिजातिसमूहेषु च संविद्व्यतिक्रमका
रिणामेतद्दण्डविधिं धार्मिको राजानुतिष्ठेत् ॥ २२१ ॥

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ॥ २२२ ॥

क्रीत्वेति। क्रीत्वा विक्रीय वा किञ्चिद्द्रव्यमविनश्वररूपं स्थिरार्थं
भूमिताम्रपट्टादि यस्य लोके पश्चात्तापो जायते न साधु मया
क्रीतमिति स क्रीतद्रव्यं दशाहमध्ये प्रत्यर्पयेत्। विक्रीतं वा
गृह्णीयात् ॥ २२२ ॥

परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्॥ २२३॥

परेणेति। दशाहादूर्द्ध्वं क्रीतञ्च त्यजेत् नापि विक्रीतं विक्रायकोऽबलेन दापयेत्। विक्रीतं बलेन गृह्णन् क्रीतञ्च परित्यजन् राज्ञा षट् शतानि पणान् दण्ड्यः॥ २२३॥

यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति। तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिम्पणान्॥ २२४॥

यस्त्विति। गोप्यत्वादादिति सामान्योक्तदण्डविशेषाभिधानार्थमिदं उन्मादादिदोषानकथयित्वा दोषवतीं कन्यां वराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिं पणान् दण्डं कुर्यात् अनुप्रसङ्गेनैतत्कन्यागतमुच्यते ॥ २२४॥

अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः। स शतम्प्राप्नुयाद्दण्डन्तस्या दोषमदर्शयन्॥ २२५॥

अकन्येति। नेयं कन्या क्षतयोनिरियमिति योऽननुयोगे द्वेषेण ब्रूयात् तत्कन्यागतदोषमविभावयन् पणशतं राजदण्डं प्राप्नुयात्। ॥ २२५॥

मन्त्राणां सप्तमपदे भवति मन्त्रेण कन्यायाः सप्तमे दत्ते पदे भार्य्यात्वनिष्पत्तेः ब्राह्मणैः सम्यग्निर्विज्ञेया एवञ्च सप्तपदीदानात्प्राग्भार्य्यात्वानिष्पत्तिः सत्यनुशये अत्यागोऽर्हः॥२२७॥

यस्मिन्यस्मिन् कृते कार्य्ये यस्येहानुशयो भवेत्।
तमनेन विधानेन धर्म्ये पथि निवेशयेत्॥ २२८॥

यस्मिन्निति। न केवलं क्रयविक्रययोरेव अन्यत्रापि यस्मिन् यस्मिन्नृणदानादौ कार्य्ये यस्य पश्चात्तापो जायते तमनेन दशाहविधिना धर्म्मादनपेते मार्गे नृपः स्थापयेत्॥२२८॥

पशुषु स्वामिनाञ्चैव पालानाञ्च व्यतिक्रमे।
विवादं सम्प्रवक्ष्यामि यथावद्धर्म्मतत्त्वतः॥ २२९॥

पशुष्विति। गवादिपशुविषये स्वामिनां पालानाञ्च व्यतिक्रमे जाते विवादं सम्यग्धर्म्मयाथातथ्यव्यवस्थया वक्ष्यामि॥२२९॥

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्॥ २३०॥

दिवेति। दिवा पशूनाम्पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां

स्वामिदर्शितमार्गं स्वामिनो दोषोऽन्यथा तु यदि रात्रावपि पालयच्छन्नतामवगच्छति तत्र दोषतस्तत्पाल एव सर्वथैव तत्प्राप्नोति ॥ २३० ॥

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतोवरां। गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥ २३१ ॥

गोप: क्षीरेति। यो गोपालाख्यो भृत्यः क्षीरेण भृतो न भक्तादिना स स्वाम्यनुज्ञया दशभ्यो गोभ्यः श्रेष्ठामेकां गां भृत्यर्थं दुह्यात्सा भक्तादिरहिते गोपाले भृतिः स्यात्। एवमेक गवीक्षीरलाभेन दश गाः पालयेदित्युक्तम् ॥ २३१ ॥

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्। हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ २३२ ॥

नष्टमिति। नष्टं दृष्टिपथातीतं कृमिभिर्व्यापितं श्वभिर्हतं मारितं विषमादिपातमृतं गर्त्तभागार्थे पतित्वा पालकमन्तरेण यथा पुरुषव्यापाररहितं यत्नकारितं तथाविधपशुं पाल एव स्वामिने दद्यात् ॥ २३२ ॥

विघुष्य तु हृतञ्चौरैर्न पालो दातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ २२३ ॥

विघुष्येति। चौरैः पुनः पटहादिना विघुष्य हृतं पालो दातुं नार्हति। विघुष्येति चौराणां बहुलप्रबलत्वदर्शनार्थं यदि सन्निहिते देशे हरणकालानन्तरमेवात्मीयस्वामिनः कथयति ॥ २२३ ॥

कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम्। पशुषु स्वामिनान्दद्यान्मृतेष्वङ्कानि दर्शयेत् ॥ २२४ ॥

कर्णाविति। स्वयं मृतेषु पशुषु कर्णचर्मवालान् मूत्रवाधनाभ्यधोभागस्नायुरोचनाः स्वामिनान्दद्यात्। अन्यानि च चिह्नान्यवधारणानि शृङ्गखुरादीनि दर्शयेत् ॥ २२४ ॥

अजाविके तु संरुद्धे वृकैः पाले त्वनायति। यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषम्भवेत् ॥ २२५ ॥

अजाविके इति। अजाश्च अविकाश्च अजाविकं गवाश्वप्रभृतीनि चेति द्वन्द्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृते यति पालेनागच्छति यामजामेडकां वा वने वृको हन्यात्स पालस्य दोषः स्यात् ॥ २२५ ॥

तासां चेदवरुद्धानां चरन्तीनां मिथो वने। यामु
त्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥ २३६॥

तासामिति। तासामजाविकानां पालेन नियमितानां संघी
भूय वने चरन्तीनां मध्याद्यदि कश्चिद्वृकः कुतश्चिदुत्प्लुत्यागत्य
कां कश्चिद्धन्यात् न पालस्तत्र दोषभाक्॥ २३६॥

धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः।
शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु॥ २३७॥

धनुःशतमिति। चतुर्हस्तो धनुः शम्या यष्टिः तस्याः पातः
त्रयोपि ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि त्रीन् वा
यष्टिप्रक्षेपान् यावत्पशुप्रचारार्थं शस्यवपनादिवर्जितः परि
हारः कार्यः नगरसमीपे पुनरयं त्रिगुणः कर्त्तव्यः॥ २३७॥

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र
प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥ २३८॥

तत्रापरीति। तस्मिन् परिहारस्थाने यदि केनचिद्वृत्या
अनावृतं धान्यं वपेत तच्चेत्पशवो भक्षयेयुः। तत्र पशुपालानां
नृपो दण्डं न कुर्यात्॥ २३८॥

विघुष्य तु हृतञ्चौरैर्न पालो दातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ २३३ ॥

विघुष्येति। चौरैः पुनः पटहादिना विघुष्य हृतं पालो दातु नार्हति। विघुष्येति चौराणां बहुलप्रबलत्वदर्शनार्थं यदि सन्निहिते देशे हरणकालानन्तरमेवात्मीयस्वामिनः कथयति ॥ २३३ ॥

कर्णौ चर्म्म च बालांश्च वस्तिं स्नायुञ्च रोचनाम्। पशुषु स्वामिनान्दद्यान्मृतेष्वङ्कानि दर्शयेत् ॥ २३४ ॥

कर्णाविति। स्वयं मृतेषु पशुषु कर्णचर्मबालाः मूत्रवाहनाश्च योभागस्नायुरोचनाः स्वामिनान्दद्यात्। अन्यानि च चिह्न न्यसाधारणानि शृङ्गखुरादीनि दर्शयेत् ॥ २३४ ॥

अजाविके तु संरुद्धे वृकैः पाले त्वनायति। यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषम्भवेत् ॥ २३५ ॥

अजाविके इति। अजाश्च अविकाश्च अजाविकं गवाश्व प्रभृतीनि चेति द्वन्द्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृते सति पालेनागच्छति यामजामेडकां वा वने वृको हन्यात्स पालस्य दोषः स्यात् ॥ २३५ ॥

तासां चेदवरुद्धानां चरन्तीनां मिथो वने। यामु
त्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥ २३६॥

तासाञ्चेति। तासामजाविकानां पालेन नियमितानां संभू
य वने चरन्तीनां मध्याद्यदि कश्चिद्वृकः कुतश्चिदुत्प्लुत्यागत्यै
कां कश्चिद्धन्यात् न पालस्तत्र दोषभाक्॥ २३६॥

धनुः शतम्परीहारो ग्रामस्य स्यात्समन्ततः।
शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु॥ २३७॥

धनुःशतमिति। चतुर्हस्तो धनुः शम्या यष्टिः तस्याः पातः
त्रयोपि ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि त्रीन् वा
यष्टिप्रक्षेपान् यावत्पशुप्रचारार्थं सस्यरक्षणादिसंरोधपरि
हारः कार्य्यः नगरसमीपे पुनरयं त्रिगुणः कर्त्तव्यः॥ २३७॥

तत्रापरिवृतन्धान्यं विहिंस्युः पशवो यदि। न तत्र
प्रणयेद्दण्डन्नृपतिः पशुरक्षिणाम्॥ २३८॥

तत्रापरीति। तस्मिन् परिहारस्थाने यदि केनचिद्वृत्या
वर्जितकधान्यं वर्धेत तच्चेत्पशवोभक्षयेयुः। तत्र पशुपालानां
नृपो दण्डं न कुर्यात्॥ २३८॥

वृतिन्तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत्। छिद्रञ्च वारयेत्सर्व्वं श्वसूकरमुखानुगम्॥ २३९॥

वृतिमिति। तत्र परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमयीं तथाविधामुच्छ्रितां कुर्य्यात् यामपरपार्श्वे उष्ट्रो न विलोकयेत् तस्यां च यच्छिद्रं श्वसूकरमुखप्रवेशयोग्यं तत्सर्व्वमावृणुयात्॥ २३९॥

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः। स पालः शतदण्डार्हो विपालान्वारयेत्पशून्॥२४०॥

पथीति। वर्त्मसमीपे ग्रामसमीपे वा परिहारस्थे क्षेत्रे वृत्यावृते स पालः पशुः पालानिवारितो द्वारादिना कथञ्चित्प्रविष्टो यदा भक्षयति तदा पालशतन्दण्ड्यः पशोश्च दण्डासम्भवात्पाल एव दण्ड्यः विपालान् पुनर्भक्षयतः पशून् क्षेत्ररक्षको निवारयेत्॥ २४०॥

क्षेत्रेष्वन्येषु तु पशुः सपादम्पणमर्हति। सर्व्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा॥ २४१॥

क्षेत्रेष्विति। वर्त्मग्रामान्तव्यतिरिक्तेषु क्षेत्रेषु पशुर्भक्षयन्सपादम्पणं दण्डमर्हति। अत्रापि पाल एव दण्ड्यः सर्व्वत्र क्षेत्रे पशु

नाच प्रजाभयजनकप अधिक्रमे धर्मप्रधानोभूपतिरेनमूर्धा
कर्त्तव्यमनुतिष्ठेत् ॥ २४४ ॥

सीमांप्रतिसमुत्पन्ने विवादे ग्रामयोर्द्वयोः। ज्यैष्ठे
मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥ २४५ ॥

सीमामिति। द्वयोर्ग्रामयोर्मर्यादां प्रति विप्रतिपत्तावुत्प
न्नायां ज्यैष्ठे मासि सीमारविताप्रसंशुष्कतृणलात् प्रकटीभूतेषु
सीमालिङ्गेषु राजा सीमां निश्चिनुयात् ॥ २४५ ॥

सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीन्शालतालांश्च क्षीरिणश्चैव पादपान्॥२४६॥

सीमावृक्षानिति। न्यग्रोधादीन्वृक्षान्० क्षीरिणउदुम्बरा
दीन् चिरस्थायिनस्सीमालिङ्गभूतान् कुर्वीत ॥ २४६ ॥

गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति॥२४७॥

गुल्मानिति। गुल्मान् प्रकाण्डरहितान्वेणूंश्च प्रचुरकण्टक
लाघकण्टकलादिभेदेन नानाप्रकारान्सीमस्थान्सल्लीलता:

वल्लीश्च छत्रिमोचितभूभागान् शरान् कुब्जकगुल्मांश्च प्रचुरी
भावेन मेयाद् यथा शरांश्च पृथक् निर्दिष्टान् सीमाचिह्नभूतान् कुर्यात्।
एवं कृते सीमा न नश्यति ॥२४७॥

तडागान्युदपानानि वाप्यः प्रस्रवणानि च।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥२४८॥

तडागमिति। तडागकूपदीर्घिकाप्रस्रवणनिर्झरमार्गदेवगृहाणि सीमासन्धिषु ग्रामद्वयसन्धिस्थानेषु कर्त्तव्यानि। एतेषु सीमानिर्णयाय लोके विख्याय कृतेषूदकार्थिजनानामपि श्रुतिपरम्परया चिरकालेऽपि साक्षिणो भवन्ति ॥२४८॥

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत्।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्य्ययं ॥२४९॥

उपच्छन्नानीत्यादि। सीमानिर्णये मर्यादाऽस्मिन् लोके मनुष्याणां भ्रमज्ञानं दृष्ट्वाऽभिहितव्यतिरिक्तानि गूढानि अन्यान्यपि सीमाचिह्नानि कारयेत् ॥२४९॥

अश्मनोऽस्थीनि गोवालांस्तुषान्भस्मकपालिकाः।
करीषमिष्टकाङ्गाराञ्छर्करावालुकास्तथा ॥२५०॥

यानि चैवम्प्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥ २५१ ॥

अश्मेति। यानीति। स्थूलप्रस्तराश्मास्थिगोवालतुषभस्मकपालिकाशुष्कगोमयपक्वेष्टकाङ्गारशर्करावालुका अन्यान्यप्येवं प्रकाराणि कालाज्जनकार्पासाऽस्थिप्रभृतीनि यानि चिरकालेनापि भूमिरात्मसात् न करोति तानि ग्रामयोः सन्धिषु सीमायां प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेदिति वक्ष्यति वचनात् स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा अप्रकाशानि भूमौ निखाय धारयेत् ॥ २५० ॥ ॥ २५१ ॥

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः । पूर्व्व भुक्त्या च सततमुदकस्यागमेन च ॥ २५२ ॥

एतैरिति। विवदमानयोर्ग्रामयोः प्रागुक्तैरेतैश्चिह्नै राजा सीमामुन्नयेत् यततः पुनरविच्छिन्नया भुक्त्या सीमा निर्णयेन तु त्रिपुरुषादिकया तस्याधिः सीमेति पर्य्युदस्तात्। ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमां निश्चिनुयात् ॥ २५२ ॥

यदि संशय एव स्यात् लिङ्गानामपि दर्शने। साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः॥२५३॥

यदीति। यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेऽपि केनचित् प्रच्छन्नाङ्गारतुषादिलिङ्गान्यपनीय स्थानान्तरं नीत्वा निखातानामपि सीमातद्दर्शनविरोधः स सन्देहस्तादृशि सन्देहोऽपि यदि स्यात् तदा साक्षिप्रत्यय एव सीमाविवादनिर्णयो भवेत्॥२५३॥

ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥२५४॥

ग्रामीति। ग्रामिकजनसमूहानां ग्रामद्वयस्थितिज्ञयोर्वादिप्रतिवादिनोश्च समक्षं सीमाविषये सीमालिङ्गसन्देहे लिङ्गानि साक्षिणः प्रष्टव्याः॥२५४॥

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम्। निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः॥२५५॥

ते इति। ते पृष्टाः साक्षिणः समस्ता ऐक्येन सीमाविषये येन प्रकारेण निश्चयं ब्रूयुः तेन प्रकारेणाविस्मरणार्थं पत्रे सीमां लिखेत् तांश्च सर्वानेव साक्षिणो नामभिर्नाम लिखेत्॥२५५॥

यानि चैवम्प्रकाराणि कालाद्भूमिर्न्न भक्षयेत्।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत्॥२५१॥

अश्मेति। यानीति। स्थूल प्रस्तरास्थिगोवालतुषभस्मकपा
लिकाकरीषगोमयपक्केष्टकाङ्गारशर्करावालुका अन्यान्येवं
प्रकाराणि कालाञ्जनकार्पासाऽस्थिप्रभृतीनि यानि चिरकाले
नापि भूमिरात्मसात् न करोति तानि ग्रामयोः सन्धिषु सीमायां
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेदिति बृहस्पति
वचनात् स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा अप्रकाशानि
भूमौ निखाय धारयेत्॥२५०॥ ॥२५१॥

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः। पूर्व्व
भुक्त्या च सततमुदकस्यागमेन च॥२५२॥

एतैरिति। विवदमानयोर्ग्रामयोः प्रागुक्तैरेतैश्चिह्नै
राजा सीमामनुनयेत् यद्वा पुनरविच्छिन्नया भुक्त्या सीमा
निर्णयेन तु चिरप्रवाहिकया नद्यापि सीमेति पूर्व्वदर्शनात्।
ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमां
निश्चिनुयात्॥२५२॥

यदि संशय एव स्यात् लिङ्गानामपि दर्शने । साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः ॥ २५३ ॥

यदीति । यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेपि केनचित् प्रच्छन्नकारणात् तृणादिलुप्तावगमो स्थानान्तरं नीता निखातानां सीमान्तरदर्शनेपि स सदृशत्वादि सन्देहो यदि स्यात् तदा साक्षिप्रत्यय एव सीमाविवादनिर्णयो भवेत् ॥ २५३ ॥

ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः । प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥२५४॥

ग्रामीति । ग्रामिकजनसमूहानां ग्रामद्वयजनितयोर्वादिप्रतिवादिनोश्च समक्षं सीमाविषये सीमालिङ्गसन्देहे लिङ्गानि साक्षिणः प्रष्टव्याः ॥ २५४ ॥

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् । निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥२५५॥

ते इति । ते पृष्टाः साक्षिणः समस्ताः ऐकमत्येन सीमाविषये येन प्रकारेण निश्चयं ब्रूयुः तेन प्रकारेणाविस्मरणार्थं पत्रे सीमां लिखेत् तांश्च सर्वानेव साक्षिणो नामभिर्नामतो लिखेत् ॥ २५५ ॥

शिरोभिस्ते गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्॥२५६॥

शिरोभिरिति। ते साक्षिण इति सामान्यश्रवणेऽपि रक्तस्रग्वाससः सीमां नयेयुरिति सामर्थ्यवचनात् रक्तपुष्पमाल्यलोहितवाससो मस्तके मृल्लोष्टानि गृहीत्वा यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तः तां सीमां यथाशक्ति निर्णयेयुः॥२५६॥

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतन्दमम्॥२५७॥

यथोक्तेनेति। ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन विधानेन निर्णयन्तो निष्पापा भवन्ति अतथ्येन तु निश्चिन्वन्तः प्रत्येकं पणशतद्वयन्दण्डन्दाप्या भवेयुः॥२५७॥

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः।
सीमाविनिर्णयं कुर्य्युः प्रयता राजसन्निधौ॥२५८॥

साक्ष्येति। ग्रामद्वयसम्बन्धिसीमाविवादसाक्ष्यभावे चतुर्दिशं समन्तभवाः सामन्तास्तद्वासिनः चत्वारो ग्रामाः साक्षिवदेव राजसमक्षं सीमानिर्णयं कुर्य्युः॥२५८॥

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥२५९॥

सामन्तानामिति। साक्षिधर्मेण राजसमक्षं सामन्तभव ग्रामवासिनां मौलानां ग्रामनिर्माणकालादारभ्य पुरुष क्रमेण तद्ग्रामस्थानां सीमासाक्षिणामभावे इमान्वक्ष्यमाणा न्वविहितवनचारिणः पुरुषान् पृच्छेत्॥२५९॥

व्याधाञ्छाकुनिकान् गोपान्कैवर्तान्मूलखानकान्।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः॥२६०॥

व्याधेति। लुब्धकान् पक्षिवधजीविनः गोपालान् मत्स्य जीविनो मूलोत्पाटनजीविनः सर्पधारिणः शिलोञ्छवृत्तीन न्यांश्च फलपुष्पेन्धनाद्यर्थं वनसञ्चारिणः पृच्छेत्। एते हि स प्रयोजनार्थमन्तेन यामेव सर्वदा वनं गच्छन्तः तद्ग्रामसीमा भिज्ञाः भवन्ति॥२६०॥

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः॥२६१॥

ते पृष्टा इति। ते व्याधादयः पृष्टाः सीमारूपेषु ग्रामसन्धिषु येन प्रकारेण चिह्नं ब्रूयुः तेनैव प्रकारेण राजा द्वयो र्ग्रामयोः सीमां व्यवस्थापयेत्॥२६१॥

क्षेत्रकूपतडागानामारामस्य गृहस्य च। सामन्त प्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः ॥ २६२ ॥

क्षेत्रेति। एकग्रामेपि क्षेत्रकूपतडागोद्यानगृहाणां सीमा सेतुविवादे समन्तदेशवासिसाक्षिप्रमाणक एव मर्यादाचिह्न निश्चयोविज्ञेयोन व्याधादिप्रमाणकः ॥ २६२ ॥

सामन्ताश्चेन्मृषाब्रूयुः सेतौ विवदतां नृणाम्। सर्व्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥ २६३ ॥

सामन्तेति। सीमाचिह्ननिमित्तं विवदमानानां मनुष्याणां यदि समन्तदेशवासिनोमिथ्याब्रूयुस्तदा ते सर्व्वे प्रत्येकं राज्ञा मध्यमसाहसन्दण्डनीयाः एवञ्चासामन्तरूपाणामूर्ध्वा कदिशतोदमोज्ञेयः ॥ २६३ ॥

गृहन्तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ २६४ ॥

गृहमिति। गृहतडागोद्यानक्षेत्राणामन्यतमं मारणबन्धनादिभयकथनपूर्व्वमाक्रम्य हरणे पञ्च पणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरतो द्विशतो दमः ॥ २६४ ॥

सीमायामविषह्यायां स्वयं राजैव धर्म्मवित्।
प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥ २५५ ॥

सीमेति। चिह्नाद्यभावे सीमायामपरिच्छेत्तुमशक्यायां राजैव धर्म्मज्ञः पक्षपातरहितो ग्रामद्वयमध्यवर्त्तिनीं विवाद विषयभूमिं येषामेव ग्रामवासिनां उपकारातिशयो भवति तद्व्यतिरेकेण च महाननिष्टश्चैषामेव स्यादिति शास्त्रव्यवस्था ॥ २५५ ॥

एषोऽखिलेनाभिहितो धर्म्मः सीमाविनिर्णये। अत ऊर्द्धं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयं ॥ २५६ ॥

एष इति। एष सीमानिर्णयो धर्म्मो निःशेषेण उक्तः अत ऊर्द्धं वाक्पारुष्यं वक्ष्यामि। दण्डपारुष्यात् प्राक् वाक्पारुष्यस्य लघुत्वात् पूर्व्वमभिधानं अनुक्रमतुल्यात्तु पारुष्ये दण्डवाचिके इति दण्ड शब्दस्याल्पाच्तरत्वात् द्वन्द्वे पूर्व्वनिपातः ॥ २५६ ॥

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्यो प्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥ २५७ ॥

शतमिति। ब्राह्मणं चौरेत्याक्षेपरूपपरुषवचनमुक्त्वा क्षत्रियः शतपणं दण्डमर्हति एवं वाऽर्द्धशतं द्वे वा शते कारणगौरवापे

यथा त्रैश्यः शूद्रोप्येवं ब्राह्मणाक्रोशे ताडनादिरूपं वधमर्हति ॥ २६७ ॥

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ २६८ ॥

पञ्चाशदिति। ब्राह्मणः क्षत्रियस्याक्रूपाक्षेपे कृते पञ्चाशत्पणान् दण्ड्यः वैश्ये शूद्रे च यथाक्रमाक्रोशे कृते पञ्चविंशति द्वादशपणाः क्रमेण ब्राह्मणस्य दण्डः स्यात् ॥ २६८ ॥

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे। वादेष्ववचनीयेषु तदेव द्विगुणम्भवेत् ॥ २६९ ॥

समेति। द्विजातीनां समानजातिविषये यथाक्रमाक्रोशे कृते द्वादशपणो दण्डः अवचनीयेषु पुनराक्रोशवादेषु भ्रातृभगिन्याद्यश्लीलरूपेषु तदेवेति नपुंसकनिर्देशात् शतं ब्राह्मणमाक्रुश्येत्यादि यदुक्तं तदेव द्विगुणन्दण्डरूपम्भवेत् ॥ २६९ ॥

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदञ्जघन्यप्रभवो हि सः ॥२७०॥

एकेति। शूद्रो द्विजातीन् पातकाभियोगिन्या वाचाक्रुश्य जिह्वाच्छेदं लभेत्। यस्मादसौ पादाख्याज्जिघन्याद्ब्रह्मणो जातः ॥ २७० ॥

नामजातिग्रहं त्वेषामभिद्रोहेण कुर्व्वतः । निः
क्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ २७१ ॥

नामेति । अभिद्रोहेणाक्रोशः ब्राह्मणादीनां हे त्वं यज्ञ
दत्त ब्राह्मणापसद इत्याक्रोशेन नामजातिग्रहणं कुर्व्वतो
लोहकीलोऽग्निना प्रदीप्तो दशाङ्गुलो मुखेषु क्षेप्यः ॥ २७१ ॥

धर्म्मोपदेशं दर्पेण विप्राणामस्य कुर्व्वतः । तप्त
मासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥ २७२ ॥

धर्म्मेति । कथञ्चिद्दर्पेणैवमयमाम्नायं ते धर्मोऽनुष्ठेय इति
ब्राह्मणानामहंकारादुपदिशतोऽस्य शूद्रस्य मुखे कर्णयोश्च तप्त
तैलं राजा प्रक्षेपयेत् ॥ २७२ ॥

श्रुतं देशञ्च जातिञ्च कर्म्म शारीरमेव च । वित
थेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥ २७३ ॥

श्रुतेति । समानजातिविषयमिदं दण्डस्याल्पत्वात् न तु शूद्रस्य
द्विजात्याक्षेपविषयं । न त्वयैतत् श्रुतम् अयमेतद्देशजातो न
त्वेवं जातिर्न तव शरीरसंस्कारमुपनयनादिकर्म्म कृतमि
त्यहङ्कारेण मिथ्या ब्रुवन् द्विशतं दण्डं दाप्यः स्यात् । वितथे
नेति प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया ॥ २७३ ॥

कार्षं वाप्यथवा सन्नमन्यं वापि तथाविधम्।
तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरं॥२७४॥

काणमिति। एकाक्षिविकलं पादविकलं अन्यमपि वा तथाविधं हस्ताद्यङ्गविकलं सत्येनापि काणादिशब्देन ब्रुवन् अत्यल्पाल्पं तदा कार्षापणं दण्डं दाप्यः॥ २७४॥

मातरम्पितरञ्जायां भ्रातरन्तनयं गुरुम्। आक्षारयञ्छतन्दाप्यः पन्थानञ्चाददद्गुरोः॥ २७५॥

मातेति। आक्षारितः क्षारितोऽभिशस्तस्त्याभिधायिकाः मात्रादीन् पातकादिनाऽभिशपन् गुरोश्च पन्थानमयच्छन् शतं दण्ड्यः अत्र मातृभ्रातृभार्य्यादीनां गुरुत्वमुपापाभिशापेन दण्डसाम्यं समाधेयं। मेधातिथिस्तु आक्षारणमेदन मित्युक्ता मातृपुत्रपित्रादीनामपरस्परभेदनकर्त्तुरयं दण्ड विधिरिति व्याख्यातवान्॥ २७५॥

ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता।
ब्राह्मणे साहसः पूर्व्वः क्षत्रियेत्वेवमध्यमः॥ २७६॥

ब्राह्मणेति। ब्राह्मणक्षत्रियाभ्यामपरस्परम्पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्य्यः। दण्डमेव विशेषेणाह

ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्य्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः॥ २७६॥

विट्शूद्रयोरेवमेव स्वजातिम्प्रति तत्त्वतः। छेदवर्जं प्रणयनन्दण्डस्येति विनिश्चयः॥ २७७॥

विडिति। वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवत् वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यमसाहसस्त्वेवं दण्डस्य प्रणयनं जिह्वाच्छेदरहितं यथावत्कर्त्तव्यमिति शास्त्रनिश्चयः। एवञ्चैकजातिर्द्विजातीनिति प्रागुक्तजिह्वाच्छेदो वैश्ये निवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवावतिष्ठते॥ २७७॥

एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः। अत ऊर्द्धं प्रवक्ष्यामि दण्डपारुष्यनिर्णयं॥ २७८॥

एषइति। एषोऽनन्तरोक्तो वाक्पारुष्यस्य यथावद्दण्डविधिरुक्तोऽनन्तरमाताडनादेर्दण्डपारुष्यस्य निर्णयं वक्ष्यामि ॥ २७८॥

येन केनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः। छेत्तव्यन्तत्तदेवास्य तन्मनोरनुशासनम्॥ २७९॥

येनेति। अन्त्यजः शूद्रो येन केनचित्करचरणादिनाङ्गेन यष्ट्यादिना व्यवहितेन वा द्विजातिं प्रहरेत् तदेवाङ्गमस्य छेत्तव्यमित्ययं मनोरुपदेशः मनुग्रहणमादरार्थं अस्यैवोत्तरः प्रपञ्चः॥ २७९॥

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति। पादेन प्रहरन् कोपात्पादच्छेदनमर्हति॥ २८०॥

पाणिमिति। प्रहर्त्तुं पाणिं दण्डं वोद्यम्य पाणिच्छेदं लभते पादेन कोपात्प्रहरन् पादच्छेदं प्राप्नोति॥ २८०॥

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्कोनिर्व्वास्यः स्फिचं वास्यावकर्त्तयेत्॥ २८१॥

सहेति। ब्राह्मणेन सहैकासनोपविविक्षुः शूद्रः कट्यां तप्तलोहकृतचिह्नो देशान्निर्व्वासनीयः स्फिचं वाऽस्य यथा न म्रियते तथा छेदयेत्॥ २८१॥

अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः। अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम्॥ २८२॥

अवेति। दर्पेण श्लेष्मणा ब्राह्मणमपमानयतः शूद्रस्य राजा द्वावोष्ठौ छेदयेत् मूत्रप्रक्षेपेणापमानयतो मेढ्रं शर्द्धनं कुत्सितो गुदशब्दः तेनापमानयतो दर्पान्न प्रमादात् गुदं छेदयेत्॥ २८२॥

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्। पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च॥ २८३॥

केशेष्विति। दर्पादित्यनुवर्त्तते अहङ्कारेण केशेषु ब्राह्मणं गृह्णतः शूद्रस्य पीडाऽस्य जाता न जातावेत्यविचारयन् हस्तौ छेदयेत् पादयोः श्मश्रुणि ग्रीवायां वृषणे च हिंसार्थं गृह्णतो हस्तद्वयच्छेदमेव कुर्य्यात्॥ २८३॥

त्वग्भेदकः शतन्दण्ड्यो लोहितस्य च दर्शकः। मांसभेत्ता तु षण्निष्कान् प्रवास्यस्त्वस्थिभेदकः॥ २८४॥

त्वग्भेदेति। चर्म्ममात्रभेदकः समानजातिर्नतु शूद्रो ब्राह्मणस्य दधिकारात् पणशतन्दण्डनीयः तथा रक्तोत्पादकोऽपि पण

एतमेव दण्डः मांसभेदी षण्निष्कान् हाप्योऽस्थिभेदकस्तु देश-निर्वास्यः ॥ २८४ ॥

वनस्पतीनां सर्व्वेषामुपभोगं यथा यथा। तथा तथा दमः कार्य्यो हिंसायामिति धारणा ॥ २८५ ॥

वनस्पतीनामिति। वृक्षाद्युक्तिदं सर्व्वेषां येन येन प्रकारेण उपभोगः फलपुष्पपत्रादिना उत्तममध्यमाधमरूपोभवति तथा तथा हिंसायामप्युत्तमसाहसादिर्दण्डोविधेयइति निश्चयः। तथाच विष्णुः। फलोपभोगद्रुमच्छेदीउत्तमं साहसं पुष्पोपभोग-द्रुमच्छेदी मध्यमं वल्लीगुल्मलताच्छेदी कार्षापणशतन्तृणच्छेदेकं। कार्षापणञ्च पणएव मनुनाप्युक्तोवेदितव्यः ॥ २८५ ॥

मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति। यथा यथा महद्दुःखन्दण्डं कुर्य्यात्तथा तथा ॥ २८६ ॥

मनुष्याणामित्यादि। मनुष्याणां पशूनाम्पीडोत्पादनार्थे प्रहारे कृते सति यथा यथा पीडाधिक्यं तथा तथा दण्डमप्यधिकं कुर्य्यात् एवञ्च मर्म्मस्थानादौ लम्भेदनादिषु कृतेषु लम्भेदकः एतन्दण्ड्य इत्युक्तादप्यधिको दण्डोदुःखविशेषापेक्षया कर्त्तव्यः ॥ २८६ ॥

चक्षुरादिप्रतीकाराश्च अस्थिमोक्षितयोस्तथा ।
समुत्थानव्ययन्दाप्यः सर्व्वदण्डमथापि वा ॥२८७॥

चक्षुरिति। चक्षुरादीनां कर्परकादीनां अस्थिमोक्षितयोश्च पीड़ितयोः सतोः समुत्थानव्ययं यावता कालेन पूर्व्वावस्थाप्राप्तिरूप समुत्थानमस्यो भवति तावता कालेन पथ्यौषधादिना यावान् व्ययो भवति तमसौ दापनीयः। अथ तं व्ययमीड़ितात्पादकेन दातुमिच्छति तदा सः समुत्थानव्ययो यस्य दण्डसमेन्न दण्डेन राज्ञा दाप्यः॥ २८७॥

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समं॥ २८८॥

द्रव्याणीति। द्रव्याण्युक्तविशेषदण्डानि कटकतासघटादीनि यो यस्य ज्ञानादज्ञानाद्वा नाशयेत्स तस्य द्रव्यान्तरादिना तुष्टिमुत्पादयेत् राज्ञश्च विनाशितद्रव्यसमं दण्डं दद्यात् ॥२८८॥

चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्टमयेषु च। मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च॥ २८९॥

चर्म्मेति। चर्म्मघटितवरत्रादौ चर्म्मकाष्ठकृतिका निर्मितेषु च भाण्डेषु पुष्पमूलफलेषु परस्य नाशितेषु तन्मूल्या

त्यक्षमुखो दण्डो राज्ञो देयः क्षमिवस्तु तद्विरुध्यादयोयैव ॥ २८९ ॥

यानस्य चैव यातुश्च यानस्वामिन एव च।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥ २९० ॥

यानस्येति। यानस्य रथादेः यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानं तेषाञ्छिन्ननास्यादीनि दशनिमित्तानि दण्डमतिक्रम्य वर्त्तन्ते एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च प्रकृते यानस्वाम्यादीनान्दण्डो न भवतीति मन्वादयआहुः एतद्व्यतिरिक्तनिमित्तेषु पुनर्दण्डोऽनुष्ठीयते ॥ २९० ॥

छिन्ननास्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥ २९१ ॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥ २९२ ॥

छिन्नेति। छेदनइति। नासायामवसानं शरीरावयवत्वात्। या चेह बलीवर्द्दादिनासासम्बन्धिनी रज्जुः छिन्नास्य रज्जौ बलीवर्द्दादिके भग्नयुगास्यकाष्ठे रथादौ भूमिवैषम्यादिना तिरश्चीनं वा गते तथा चक्रान्तःप्रविष्टाक्षकाष्ठभङ्गे यन्त्राणां चर्मबन्धनानाञ्छेदने योक्त्रस्य पशुग्रीवारज्जौ रश्मेः प्रग्रहस्य

छिन्ने चापवरापवर्त्तैस्तु पूर्वैः सहैवं सारथ्यादिना कृते च यानेन प्राणिहिंसाद्रव्यविनाशयोः कृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराह ॥ २९१ ॥ २९२ ॥

यत्रापवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु । तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतन्दमम् ॥ २९३ ॥

यत्रेति। यत्र सारथेरकौशलाद्यानमन्यथा भवति तत्र हिंसायामशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यात् ॥ २९३ ॥

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति। युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतं ॥ २९४ ॥

प्राजकइति। यदि तु सारथिः कुशलः स्यात्तदा सारथिरेवोक्तद्विशतं दण्डं यथायोग्यं मनुष्यमारणस्यादिकञ्च दण्डमर्हति न स्वामी अकुशले तु तस्मिन्सारथिस्वामिव्यतिरिक्ता सर्वेऽपि यानारूढा अकुशलसारथिकयानारोहणापराधेन प्रत्येकं शतं शतं दण्ड्याः ॥ २९४ ॥

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा।
प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः॥२९५॥

स चेदिति। स चेत्प्राजकः संमुखागतैः प्रचुरगवादिभीरथा न्तरेण वा संरुद्धः स्वरथगमनानवधानात्प्रत्यक्षमर्पणावकाशः सद्दष्टेपि स्वरथतुरगान् प्रेरयन् तुरगैरथेन वा रथावयवैर्वा प्राणिनो व्यापादयति तत्राविचारितो दण्डः कर्त्तव्य एव ॥२९५॥

मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषम्भवेत्।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु॥२९६॥

रथसङ्कटापराधे कीदृशं दण्डमित्याह मनुष्येति। तत्र मनुष्यमारणे प्राजकस्यानवधानात् यानेन कृते शीघ्रमेव चौरदण्डोत्तमसाहसो भवेत् न तु मारणरूपः प्राणभृत्सु महत्स्वर्द्धमिति अवणात्। गोगजादिषु महत्सु प्राणिषु मारितेषु उत्तमसाहसस्यार्द्धम्पञ्च शतपणो दण्डो भवेत्॥ २९६॥

क्षुद्रकाणाम्पशूनान्तु हिंसायां द्विशतोदमः।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥२९७॥

क्षुद्रेति। क्षुद्रकाणां पशूनां जातितोविशेषापदिष्टेतरेषां वत्सचरादीनां वधया च किशोरादीनां मारणे द्विशतोदण्डः स्यात्

क्षुद्रेषु मृगेषु हरिणचमरादिषु पक्षिषु च शुकहंसचकोरादिषु
पक्षिषु हतेषु पञ्चाशत्पणो दण्डो भवेत्॥२९७॥

गर्दभाजाविकानान्तु दण्डः स्यात्पञ्चमाषिकः।
माषिकस्तु भवेद्दण्डः श्वसूकरनिपातने॥ २९८॥

गर्दभेति। गर्दभछागैडकानामुन्मारणे पञ्चरूप्यमा
षकपरिमाणो दण्डः स्यात्। नचात्र हैरण्यमाषग्रहणं उत्तरो
त्तरगुरुदण्डाभिधानात् श्वसूकरमारणेषु पुना रौप्यमाष
परिमाणो दण्डः स्यात्॥२९८॥

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥ २९९॥

भार्येति। भार्यापुत्रादयः कृतापराधा रज्ज्वाति
पृथुवेणुशाखया वा ताड्या भवेयुः शिक्षार्थं ताडनविधानादयं
दण्डापवादः॥२९९॥

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन। अतो
ऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम्॥ ३००॥

पृष्ठत इति। रज्ज्वादिभिरपि देहस्य पृष्ठदेशे ताडनीयाः
न तु शिरसि उत्तमाङ्गव्यतिरेकेण प्रहरणे शास्त्रलङ्घनरूप
चौरदण्डं प्राप्नुयात्॥ ३००॥

एषो खिलेनाभिहितो दण्डपारुष्यनिर्णयः। स्तेन स्यातः प्रवक्ष्यामि विधिन्दण्डविनिर्णये॥ ३०१ ॥

एषइति। एष दण्डपारुष्य निर्णयो निःशेषेणोक्तः अतऊर्द्धं चौरदण्डविनिर्णये विधानं वक्ष्यामि॥ ३०१ ॥

परमं यत्नमातिष्ठेत् स्तेनानान्निग्रहे नृपः। स्तेनानां निग्रहादस्य यशोराष्ट्रञ्च वर्द्धते॥ ३०२ ॥

परममिति। चौराणां नियमने राजा परममुत्कृष्टं यत्नं कुर्य्यात् यस्माच्चौरनिग्रहाद्राज्ञः ख्यातिर्निरुपद्रवतया राष्ट्रं च वृद्धिमेति॥ ३०२ ॥

अभयस्य हि यो दाता स पूज्यः सततन्नृपः। सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम्॥ ३०३ ॥

अभयस्येति। हि अवधारणे चौराणां नियमनेन यो नृपतिः साधूनामभयं ददाति स एव पूज्यः सर्व्वेषां श्लाघ्योभवति सत्रं गवायनादिक्रतुविशेषः यस्मात् सत्रमिव सत्रं तत्फलदानाच्चौरनिग्रहरूपाभयदक्षिणं सर्व्वदैव तस्य वृद्धिमेति अन्यद्धि सत्रं नियतकालीनं नियतदक्षिणञ्च एतत्तु सर्व्वकालीनमभयदक्षिणञ्चेति व्यतिरेकालङ्कारः॥ ३०३ ॥

सर्व्वतो धर्म्मषड्भागो राज्ञो भवति रक्षतः। अध
र्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥ ३०४॥

सर्व्वत इति। प्रजारक्षतो राज्ञः सर्व्वस्य भृतिदातुर्ब्रह्मचार्य्यादे
र्भैक्षदातुश्च श्रोत्रियादेः सकाशात् धर्म्मषड्भागो भवति अर
क्षतश्चाधर्म्मादपि लोकेन कृतात् षड्भागः स्यात् तस्माद्यत्नतः
लोकनियमेनैव राजा रक्षणं कुर्य्यात्। न च भृतिक्रीतत्वात् राज्ञो
धर्म्मषड्भागो न युक्त इति वाच्यम्। भृत्या धर्म्मषड्भागेन च परि
क्रयस्य शास्त्रीयत्वात्॥ ३०४॥

यदधीते यद्यजते यद्ददाति यदर्च्चति। तस्य षड्भाग
भाग्राजा सम्यग्भवति रक्षणात्॥ ३०५॥

यदिति। यः कश्चिज्जपयागदानदेवतार्च्चादीनि करोति
तस्य राजा सम्यक्पालनेन षड्भागमाप्नोति॥ ३०५॥

रक्षन्धर्म्मेण भूतानि राजा वध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥ ३०६॥

रक्षन्निति। भूतानि सर्व्वाणि स्थावरजङ्गमादीनि यथाशास्त्रं
रक्षणप्रयत्नरूपेण धर्म्मेण रक्षन् वध्यांश्च चोरादीन् घातयन्
प्रत्यहं सहस्रशतदक्षिणैर्यज्ञैर्यजते तत्तुल्यं पुण्यं प्राप्नोतीति भावः।
॥ ३०६॥

योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः। प्रतिभागञ्च दण्डञ्च स सद्योनरकं व्रजेत्॥ ३०७॥

योऽरक्षन्निति। यो राजा रक्षामकुर्वन् बलिं धान्यादेः षड्भागादिकं करं ग्रामपुरवासिभ्यः प्रतिमासं भाद्रपौषादिमासनियमेन वा ग्राह्यं शुल्कं स्थलजलपथादिना वणिज्याकारिभ्यो नियतस्थानेषु द्रव्याऽनुसारेण ग्राह्यन्दानमिति प्रसिद्धं प्रतिभागं फलकुसुमशाकतृणाद्युपायनं प्रतिदिनग्राह्यं दण्डं व्यवहारादौ गृह्णाति स मृतःसन् सद्य एव नरकं याति॥ ३०७॥

अरक्षितारं राजानं बलिषड्भागहारिणम्। तमाहुः सर्व्वलोकस्य समग्रमलहारकम्॥ ३०८॥

अरक्षितारमिति। यो राजा न रक्षति अथ च धान्यादिषड्भागादिकं बलिरूपं गृह्णाति तं सर्व्वलोकानां सकलपापहारिणं मन्वादयश्चाहुः॥ ३०८॥

अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम्। अरक्षितारमत्तारं नृपं विद्यादधोगतिम्॥ ३०९॥

अनपेक्षितमिति। लंघितशास्त्रमर्य्यादं परलोकाभावबुद्धिशालिनमनुचितदण्डादिना धनग्राहिणं रक्षणरहितं करग्रहणादेर्भक्षितारं राजानं नरकगामिनं जानीयात्॥ ३०९॥

अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥

अधार्मिकमिति । अधार्मिकं चौरादिमपराधापेक्षया त्रिभिरुपायैः प्रयत्नेन नियमयेत् । तानाह । कारागारप्रवेशनेन निगडादिबन्धनेन ताडनकरचरणादिच्छेदनादिनाना प्रकारवधेन ॥ ३१० ॥

निग्रहेण हि पापानां साधूनां संग्रहेण च ।
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ ३११ ॥

निग्रहेणेति । पापकारिणां निग्रहेण साधूनां संग्रहेण द्विजातय इव महायज्ञादिभिः सर्वकालं नृपतयः पवित्री भवन्ति । तस्मादधार्मिकान् निगृह्णीयात् साधूंश्चानुगृह्णीयात् ॥ ३११ ॥

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम् ।
बालवृद्धातुराणां च कुर्वता हितमात्मनः ॥ ३१२ ॥

क्षन्तव्यमिति । कार्य्यवतामर्थिप्रत्यर्थिनां दुःखेनाक्षेपेणाभि रक्षवतां तथा बालवृद्धव्याधितानामाक्षिपतां वक्ष्यमाण नात्मीयमुपकारमिच्छता प्रभुणा क्षमणीयम् ॥ ३१२ ॥

यः क्षिप्तो मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते। यस्त्वै
श्वर्य्यान्न क्षमते नरकन्तेन गच्छति ॥ ३१३ ॥

यःक्षिप्त इति। दुःखितैराक्षिप्तः सहते यः स तेन स्वर्गलोके
पूजां लभते प्रभुत्वदर्पान्न सहते यः स तेन नरकं गच्छति
॥ ३१३ ॥

राजा स्तेनेन गन्तव्यो मुक्तकेशेन धावता। आच
क्षाणेन तत् स्तेयमेवं कर्म्मास्मि शाधि मां ॥ ३१४ ॥
स्कन्धेनादाय मुषलं लगुडं वापि खादिरम्।
शक्तिञ्चोभयतस्तीक्ष्णामायसन्दण्डमेव वा ॥ ३१५ ॥

राजेति। स्कन्धेनेति। यद्यपि सुवर्णस्तेयस्य दिग्भरत्वादिना
प्रायश्चित्तप्रकरणे वक्ष्यति तथापि सुवर्णस्तेनं प्रति राज
दण्डरूपतामस्य दर्शयितुं दण्डप्रकरणे पाठः। ब्राह्मणसुवर्णस्य
चोरेण मुक्तकेशेन वेगाद्गच्छता मया ब्राह्मणसुवर्णमपहृत
मिति स्तेयंख्यापयता मुषलाख्यमायुधं खादिरमयं वा दण्ड
मुभयतस्तीक्ष्णां शक्तिं लोहमयं वा दण्डं स्कन्धे गृहीत्वा राज
समीपे गन्तव्यं ततो ब्राह्मणसुवर्णहार्य्यहमतोऽनेन मुषलादिना
मां व्यापादयेत्येवं राज्ञे वक्तव्यम् ॥ ३१४ ॥ ३१५ ॥

प्राणनाशो विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । अशा सित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषं ॥ ३१६ ॥

प्राणनादिति । वक्ष्यमुषलादिप्रहारेण प्राणपरित्यागनान्मृतक कस्य जीवतोपि वा परित्यागात् स चौरस्तस्मात्पापात्प्रमु च्यते । अतएव याज्ञवल्क्यः । मृतकस्यः प्रहारार्त्तोजीवन्नपि विशुद्ध्यतीति । तं पुनःस्तेनं करणादिभिरदत्त्वा स्तेनस्य तत्पा पमनुद्राजा प्राप्नोति ॥ ३१६ ॥

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी । गुरौ शिष्यश्च याज्यश्च स्तेनोराजनि किल्बिषं ॥ ३१७ ॥

अन्नादइति । भ्रूणहा ब्रह्महन्ता यो अन्नमत्ति तस्मिन्नसौ स्वपापं संक्रामयति अन्नदाताभोक्तुः पापकृतोन्नेतद्व विश्व ज्ञातिं महद्व्रह्मणः पापकृति तथा भार्य्या व्यभिचारिणी जार पतिं क्षमादेशभर्त्तरि पापं संवेशयति शिष्यश्च सन्ध्याग्निकार्य्या करणजन्यं पापं गुरौ वर्त्तमाने भर्त्तति याज्यश्च विविक्तति क्रमम् याजके क्षमाणे पापं निःक्षिपति स्तेनश्च राजन्युपेक्ष माणे पापं समर्पयति भ्रूणहादा स्तेनोनियन्तीतयः ॥ ३१७ ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥३१८॥

राजेति। सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभि र्विहितदण्डामनुष्याः प्रतिबन्धकदुरिताभावात् पूर्व्वार्जित पुण्यवशेन साधवः सुकृतकारिण इव स्वर्गं गच्छन्ति एवञ्च प्रायश्चित्तवद्दण्डस्यापि पापक्षयहेतुत्वमुक्तम्॥ ३१८॥

यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्। स दण्डं प्राप्नुयान्माषन्तच्च तस्मिन्समाहरेत्॥ ३१९॥

यस्त्विति। कूपसमीपे रज्जुघटयोः जलोद्धरणाय धृतयो रज्जुं घटं वा योहरेत्।योवापानीयदानगृहंविदारयेत्प्रत्येकं माषन्दण्डं प्राप्नुयात् अनिर्द्दिष्टस्तु येत्वर्षे माषस्तत्र प्रकल्पये दिति कात्यायनवचनात्। तच्च रज्ज्वादि तस्मिन् कूपे समर्पयेत् ॥ ३१९॥

धान्यन्दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः।
शेषेप्येकादशगुणन्दाप्यस्तस्य च तद्धनं॥ ३२०॥

धान्यमिति। द्विपलशतद्रोणोविंशतिद्रोणश्च कुम्भः दशसंख्ये भ्यः कुम्भेभ्योऽधिकधान्यं हरतोवधः स च धर्म्मस्वामि

गुणापेक्षया ताडनाद्युच्छेदमारणान्तो वधः। शेषे पुनरेक
कादारभ्य दशकुम्भपर्य्यन्तहरणे निह्नुतैकादशगुणं दण्डं
दाप्यः स्वामिनश्चापहृतं ॥ ३२० ॥

तथा धरिममेयानां शतादभ्यधिके वधः। सुवर्ण
रजतादीनामुत्तमानाञ्च वाससाम् ॥ ३२१ ॥

तथेति। यथा धान्ये वध उक्तस्तथा तुलापरिच्छेद्यानां
सुवर्णरजतादीनामुत्कृष्टानाञ्च वाससाम्पट्टादीनाञ्च शता
धिकेऽपहृते वधः कर्त्तव्य एव विषयसमीकरणञ्च देशकाला
पहर्त्तृस्वामिजातिगुणापेक्षया परिहरणीयं एवमुत्तरत्रापि
ज्ञेयम् ॥ ३२१ ॥

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषे त्वे
कादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥ ३२२ ॥

पञ्चेति। पूर्व्वोक्तानामेव पञ्चाशतमारभ्य शतं यावदपहारे कृते
हस्तच्छेदनं मन्वादिभिरभिहितं। शेषे पुनरेकपलादारभ्य
पञ्चाशत्पलपर्य्यन्तापहारे अपहृतधनादेकादशगुणन्दण्डं
दाप्यः ॥ ३२२ ॥

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः। मुख्या
नाञ्चैव रत्नानां हरणे वधमर्हति ॥ ३२३ ॥

पुरुषाणामिति। महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां

महाकुलप्रसूतानां मेढानाञ्च रत्नानां वज्रवैदूर्य्यादीनां अपहारे वधमर्हति ॥ ३२३ ॥

महापशूनां हरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्य्यञ्च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥

महेति । महताम्पशूनां हस्त्यश्वगोमहिषादीनान्तथा खड्गादीनामस्त्राणां कल्याणघृतादेरौषधस्य दुर्भिक्षादिरूपं कालं कार्य्यप्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदनवधरूपन्दण्डं प्रकल्पयेत् ॥ ३२४ ॥

गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने । पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः ॥ ३२५ ॥

गोष्विति । ब्राह्मणस्वामिनीनाङ्गवामपहारे वन्ध्यायाश्च गोर्वाहनार्थं नासाछेदने पशूनाञ्चाजैडकानां हस्तश्चवस्तावागवर्थानां हरणेऽनन्तरमेव छित्वार्द्धपादिकः कार्य्यः ॥ ३२५ ॥

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥

वेणुवैदलभाण्डानां लवणानान्तथैव च । मृण्मयानाञ्च हरणे मृदोभस्मनएव च ॥ ३२७ ॥

मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥२२८॥
अन्येषां चैवमादीनामद्यानामोदनस्य च। पक्वा
न्नानाञ्च सर्वेषां तन्मूल्याद्द्विगुणो दमः॥ २२९॥

सूत्रेति। वेणुवैदलेति। मत्स्यानामिति। अन्येषामिति। ऊर्णादिसूत्रस्य कार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य सूत्रवेणुवंशनिर्मितवस्तादरभाण्डादीनां यदन्यत्पशुप्रभवं वलयचर्मशृङ्गादि अन्येषामप्येवंविधानामद्यारम्याणां मनःशिलादीनां मद्यानां दाद्यानां पक्वान्नानामोदनव्यतिरिक्तानामपूपमोदकादीनाञ्च कार्पासादिसर्वद्रव्याणामविज्ञातानां वा हारेऽपहृतद्रव्यमूल्याद्द्विगुणो दण्डः कार्य्यः॥ २२६॥ २२७॥ २२८॥ २२९॥

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च। अन्येष्व
परिपूतेषु दण्डः स्यात्पञ्चकृष्णलः॥ २३०॥

पुष्पेष्विति। पुष्पेषु हरिते च क्षेत्रस्थे धान्ये गुल्मलतादिषु अपरिपूतेषु अनपावनपुलाकेषु वस्त्रमापतीते धान्यनिर्द्यात् परिपवनमभावाच अन्येषु धान्येषु सर्षपुरुषभारद्वाजेषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णल परिमाणो दण्डः स्यात्॥ २३०॥

परिपूतेषु धान्येषु शाकमूलफलेषु च। निरन्वये शतन्दण्डः सान्वयेऽर्द्धशतन्दमः ॥ ३३१ ॥

परीति। निष्पुलाकीकृतेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्यस्वामिनां सम्बन्धः येन सह कश्चिदपि सम्बन्धो नास्ति एकग्रामवासादिः तत्र शतं दण्डः सान्वये तु पञ्चाशत्पणो दमः खलस्थेषु धान्येषु अयन्दण्डः तत्र हि परिपूयन्ते गृहस्थिते त्वेकादश गुणो दण्डः प्रागुक्तः ॥ ३३१ ॥

स्यात्साहसन्त्वन्वयवत् प्रसभं कर्म्म यत्कृतम्। निरन्वयम्भवेत् स्तेयं हृत्वापह्नूयते च यत् ॥ ३३२ ॥

स्यादिति। यद्द्रव्यापहारादिकर्म्म द्रव्यस्वामिसमक्षं बलात् कृतं तत्साहसं स्यात् परोक्षं तद्भवं वा इदं अतएव स्तेय दण्डो न कार्य्यः एतदर्थं स्तेयप्रकरणेऽस्य पाठः यत्पुनः स्वामिपरोक्षापहृतं तत् स्तेयं भवेत् यच्च हृत्वा अपह्नुते तदपि स्तेयमेव ॥ ३३२ ॥

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः। तमाद्यन्दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥ ३३३ ॥

यस्त्वेतानीति। यः पुनरेतानि सूत्रादिद्रव्याणि उपभोगार्थं कृतसंस्काराणि मनुष्यश्चोरयेत्। यश्च त्रेताग्निं गृह्याग्निं वा

अग्निगृहस्तेययोरनयोस्तं राजा प्रथमं साहसं दण्डयेत् अग्न्यागारमिव साधारणोपयोगादारतश्च। गोविन्दराजस्तु लौकिकमप्यग्निं चोरयतोऽयं दण्ड इत्याह तदयुक्तम् अल्पापराधे गुरुदण्डस्यान्याय्यत्वात्॥ ३३३॥

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः॥ ३३४॥

येनेति। येन येनाङ्गेन हस्तपादादिना येन प्रकारेण सन्धिच्छेदादिना चौरो मनुष्येषु विरुद्धं धनापहारादिकं चेष्टते तस्य तदेवाङ्गमपराधनिवारणाय राजा छेदयेत्। तत्र धन स्वाम्युत्कर्षयोगेना कार्षापणस्याऽप्यङ्गच्छेदः॥ ३३४॥

पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः। नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न तिष्ठति॥ ३३५॥

पितेति। पित्राचार्यमित्रभ्रातृमातृपत्नीपुत्रपुरोहितानां मध्यात्स्वधर्मे योनावतिष्ठते स राज्ञोऽदण्डनीयो नास्ति अपितु दण्डनीय एव॥ ३३५॥

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥ ३३६॥

कार्षेति। यत्रापराधे राजव्यतिरिक्तो जनः कार्षापणं दण्डनीयो भवेत्तस्मिन्नपराधे राजा सहस्रं दण्डनीय इति

योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रतिभागञ्च दण्डञ्च स सद्योनरकं व्रजेत् ॥ ३०७ ॥

योऽरक्षन्निति। यो राजा रक्षामकुर्वन् बलिं धान्यादेः षड्भागादिकं करं ग्रामपुरवासिभ्यः प्रतिमासं भाद्रपौषादिमासनियमेन वा ग्राह्यं शुल्कं स्थलजलपथादिना वणिग्भ्यः कारिभ्योनियतस्थानेषु द्रव्याऽनुसारेण ग्राह्यन्दानमिति प्रसिद्धं प्रतिभागं फलकुसुमशाकतृणाद्युपायनप्रतिदिनग्राह्यं दण्डं व्यवहारादौ गृह्णाति स स्वतःसन् सद्यएव नरकं याति ॥ ३०७ ॥

अरक्षितारं राजानं बलिषड्भागहारिणम्। तमाहुः सर्व्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥

अरक्षितारमिति। यो राजा न रक्षति अथ च धान्यादिषड्भागादिकं बलिरूपं गृह्णाति तं सर्व्वलोकानां सकलपापहारिणं मन्वादयआहुः ॥ ३०८ ॥

अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम्। अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥ ३०९ ॥

अनपेक्षितमिति। त्यक्तशास्त्रमर्य्यादं परलोकाभाववद्धिप्राशिनमनुचितदण्डादिना धनग्राहिणं रक्षणरहितं करग्रहणादेर्भक्षितारं राजानं नरकगामिनं जानीयात् ॥ ३०९ ॥

अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥

अधार्मिकमिति । अधार्मिकं चौरादिमपराधापेक्षया त्रिभिरुपायैः प्रयत्नेन नियमयेत् । तानाह । कारागारप्रवेशनेन निगडादिबन्धनेन ताडनकरचरणादिच्छेदनादिनानाप्रकारहिंसनेन ॥ ३१० ॥

निग्रहेण हि पापानां साधूनां संग्रहेण च ।
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ ३११ ॥

निग्रहेणेति । पापकारिणां निग्रहेण साधूनां संग्रहेण द्विजातयश्च महायज्ञादिभिः सर्व्वकालं नृपतयः पवित्री भवन्ति । तस्मादधार्मिकान् निगृह्णीयात् साधूंश्चानुगृह्णीयात् ॥ ३११ ॥

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम् ।
बालवृद्धातुराणाञ्च कुर्व्वता हितमात्मनः ॥ ३१२ ॥

क्षन्तव्यमिति । कार्य्यवतामर्थिप्रत्यर्थिनां दुःखेनाक्षेपेणाभिरक्षपतां तथा बालवृद्धव्याधितानामाक्षिपतां क्षन्तव्यमात्मीयमुपकारमिच्छता प्रभुणा क्षमणीयम् ॥ ३१२ ॥

यः क्षिप्तो मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते। यस्त्वैश्वर्यान्न क्षमते नरकन्तेन गच्छति ॥ ३१३ ॥

यःक्षिप्त इति। दुःखितैराक्षिप्तः सहते यः स तेन स्वर्गलोके पूजां लभते प्रभुत्वदर्पान्न सहते यः स तेन नरकं गच्छति ॥ ३१३ ॥

राजा स्तेनेन गन्तव्यो मुक्तकेशेन धावता। आचक्षाणेन तत् स्तेयमेवं कर्म्मास्मि शाधि मां ॥ ३१४ ॥
स्कन्धेनादाय मुषलं लगुडं वापि खादिरम्। शक्तिञ्चोभयतस्तीक्ष्णामायसन्दण्डमेव वा ॥ ३१५ ॥

राजेति। स्कन्धेनेति। यद्यपि सुवर्णस्तेयकृद्विप्रइत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यति तथापि सुवर्णस्तेनं प्रति राजदण्डरूपतामस्य दर्शयितुं दण्डप्रकरणे पाठः। ब्राह्मणसुवर्णचोरेण मुक्तकेशेन वेगाद्गच्छता मया ब्राह्मणसुवर्णमपहृतमिति स्तेयं ख्यापयता मुषलाख्यमायुधं खादिरमयं वा दण्डमुभयतस्तीक्ष्णां शक्तिं लोहमयं वा दण्डं स्कन्धे गृहीत्वा राजसमीपे गन्तव्यं ततो ब्राह्मणसुवर्णहार्य्यहमतोऽनेन मुषलादिना मां व्यापादयेत्येवं राज्ञे वक्तव्यम् ॥ ३१४ ॥ ३१५ ॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते । अशा
सित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषं ॥ ३१६ ॥

शासनादिति । मुसलादिप्रहारेण प्राणपरित्यागान्मृतक
ल्पस्य जीवतोऽपि वा परित्यागात् स चौरस्तस्मात्पापान्मु
च्यते । अतएव याज्ञवल्क्यः । मृतकल्पः प्रहारार्त्तोजीवन्नपि
विशुध्यतीति । तं पुनःस्तेनं दण्डादिभिरदत्त्वा स्तेनस्य यत्पा
पन्तद्राजा प्राप्नोति ॥ ३१६ ॥

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनोराजनि किल्बिषं ॥ ३१७ ॥

अन्नाद इति । ब्रह्महा यस्यान्नमत्ति भोक्तरि तस्मिन्नेव
स्वपापं संक्रामयति भ्रूणहाऽभोक्तुः पापमपनीतोऽस्त्येतदत्र विव
क्षितं नतु ब्रह्मघ्नः पापमपैति तथा भार्य्या व्यभिचारिणी जार
पतिं क्षममाणे भर्त्तरि पापं संश्लेषयति शिष्यश्च सन्ध्याग्निकार्य्या
द्यकरणजन्यं पापं गुरौ क्षममाणे न्यस्यति याज्यश्च विधिवत्
ज्ञानम् याजके क्षममाणे पापं निःक्षिपति स्तेनश्च राजन्युपेक्ष
माणे पापं समर्पयति तदन्नादनादि दोषोऽपि परीतव्यः ॥ ३१७ ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥३१८॥

राजेति। सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभि र्विहितदण्डा मनुष्याः प्रतिबन्धकदुरिताभावात् पूर्व्वार्जित पुण्यवशेन साधवः सुकृतकारिण इव स्वर्गं गच्छन्ति एवञ्च प्रायश्चित्तवद्दण्डस्यापि पापक्षयहेतुत्वमुक्तम्॥ ३१८॥

यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्। स दण्डं प्राप्नुयान्माषन्तच्च तस्मिन्समाहरेत्॥ ३१९॥

यस्त्विति। कूपसमीपे रज्जुघटयोः जलोद्धरणाय धृतयो रज्जुं घटं वा यो हरेत्। यो वा पानीयदानगृहं विदारयेत्स एकं माषन्दण्डं प्राप्नुयात् यन्निर्द्दिष्टन्तु येवर्णं माषन्तत्र प्रकल्पये दिति कात्यायनवचनात्। तच्च रज्ज्वादि तस्मिन् कूपे समर्पयेत् ॥ ३१९॥

धान्यन्दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकम्वधः।
शेषेऽप्येकादशगुणन्दाप्यस्तस्य च तद्धनं॥ ३२०॥

धान्यमिति। द्विपलशतन्द्रोणो विंशतिद्रोणश्च कुम्भः दशसंख्ये भ्यः कुम्भेभ्योऽधिकन्धान्यं हरतो वधः स च वर्त्तमानस्वामि

मुख्यत्वापेक्षया ताडनाङ्गच्छेदमारणात्मको वधः। शेषे पुनरेकस्मादारभ्य दशकुम्भपर्यन्तहरणे निह्नुतैकादशगुणं दण्डं दाप्यः स्वामिनश्चापहृतं॥ २२०॥

तथा धरिममेयानां शतादभ्यधिके वधः। सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्॥ २२१॥

तथेति। यथा धान्ये वध उक्तस्तथा तुलापरिच्छेद्यानां सुवर्णरजतादीनामुत्कृष्टानाञ्च वाससाम्पट्टादीनाम्पलशताधिकेऽपहृते वधः कर्त्तव्य एव विषयसमीकरणञ्चात्र देशकालापहर्त्तृद्रव्यस्वामिजातिगुणापेक्षया परिहरणीयं एवमुत्तरत्रापि ज्ञेयम्॥ २२१॥

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्॥ २२२॥

पञ्चेति। पूर्वोक्तानाम्पञ्चाशतऊर्द्धं शतं यावदपहारे हस्तच्छेदनं मन्वादिभिरभिहितं। शेषे पुनरेकपलादारभ्य पञ्चाशत्पलपर्यन्तापहारे अपहृतधनादेकादशगुणन्दण्डं दाप्यः॥ २२२॥

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः। मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति॥ २२३॥

पुरुषाणामिति। महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां

महाकुलप्रसूतानां स्त्रीणाञ्च रत्नानां वज्रवैदूर्यादीनां अपहारे वधमर्हति ॥ ३२३ ॥

महापशूनां हरणे शस्त्राणामौषधस्य च। कालमासाद्य कार्य्यञ्च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥

महेति। महताम्पशूनां हस्त्यश्वगोमहिषादीनान्तथा खड्गादीनामस्त्राणां कल्याणघृतादेरौषधस्य दुर्भिक्षादिरूपं कालं कार्य्यम्प्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदनवधरूपन्दण्डं प्रकल्पयेत् ॥ ३२४ ॥

गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने। पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः ॥ ३२५ ॥

गोष्विति। ब्राह्मणसम्बन्धिनीनाङ्गवामपहारे वन्ध्यायाश्च गोर्वाहनार्थं नासाछेदने पशूनाञ्चाजैडकानां रक्षकस्वामाना गावर्य्योनां हरणेऽनन्तरमेव छिन्नार्द्धपादिकः कार्य्यः ॥ ३२५ ॥

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च। दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥

वेणुवैदलभाण्डानां लवणानान्तथैव च। मृण्मयानाञ्च हरणे मृदो भस्मन एव च ॥ ३२७ ॥

मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥ ३२८ ॥

अन्येषां चैवमादीनामद्यानामोदनस्य च । पक्वा
न्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥ ३२९ ॥

सूत्रेति । वेणुवैदलेति । मत्स्यानामिति । अन्येषामिति ।
कर्पासादिसूत्रस्य कार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य
वेणुवेत्रादिनिर्मितपात्रभाण्डादीनां यच्चान्यत्पशुसम्भ
वद्रव्यं चर्मशृङ्गादि अन्येषामप्येवंविधानामद्यानां
भक्ष्यःपिष्टादीनां मद्यानां द्रव्याणां पक्वान्नानामोदनव्यतिरिक्ता
नामपूपमोदकादीनां च कार्पासादिद्रव्याणामपहृतानां
अपहारेऽपहृतद्रव्यमूल्याद्द्विगुणो दण्डः कार्यः ॥ ३२६ ॥ ३२७ ॥
॥ ३२८ ॥ ३२९ ॥

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च । अन्येष्व
परिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥

पुष्पेष्विति । पुष्पेषु हरिते च क्षेत्रस्थे धान्ये गुल्मलतावृक्षेषु
चापरिपूतेषु तुषापगमशून्येषु वस्त्रमापरेणोक्ते धान्यनिर्देशात्
परिपवनशून्यात्र अन्येषु धान्येषु यवगोधूमचणकादिषु
हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णल
परिमाणो दण्डः स्यात् ॥ ३३० ॥

महाकुलप्रसूतानां मेधाविनां रत्नानां वज्रवैदूर्यादीनां अपहारे वधमर्हति ॥ ३२३ ॥

महापशूनां हरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्यञ्च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥

महेति । महतां पशूनां हस्त्यश्वगोमहिषादीनां तथा खड्गादीनामस्त्राणां कल्याणघृतादेरौषधस्य दुर्भिक्षादिरूपं कालं कार्य्यप्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदनवधरूपं दण्डं प्रकल्पयेत् ॥ ३२४ ॥

गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने । पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः ॥ ३२५ ॥

गोष्विति । ब्राह्मणसम्बन्धिनीनां गवामपहारे वन्ध्यायाश्च गोर्वाहनार्थं नासाछेदने पशूनां छागैडकानां हरणेऽप्यल्पप्रयोजनानां हरणेऽनन्तरमेव छिन्नार्द्धपादिकः कार्य्यः ॥ ३२५ ॥

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥

वेणुवैदलभाण्डानां लवणानान्तथैव च । मृण्मयानाञ्च हरणे मृदो भस्मन एव च ॥ ३२७ ॥

मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥ २२८ ॥
अन्येषाञ्चैवमादीनामद्यानामोदनस्य च । पक्वा
न्नानाञ्च सर्व्वेषान्तन्मूल्याद्द्विगुणो दमः ॥ २२९ ॥

सूत्रेति । वेणुवैदलेति । मत्स्यानामिति । अन्येषामिति ।
ऊर्णादिसूत्रस्य कार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य
सूत्रवेणुवंशनिर्मितवस्तुःदरणभाण्डादीनां चर्मत्वग्भवस्य
वस्तुमचर्मचक्षुशृङ्गादि अन्येषामप्येवंविधानामद्यारम्भाणां
नः:पिष्टादीनां मद्यानां दाडिमानां पक्वान्नानामोदनव्यतिरिक्ता
नामपूपमोदकादीनां च कार्पासादिमूल्यार्घाणामविज्ञाना चा
हारेऽपहृतद्रव्यमूल्याद्द्विगुणो दण्डः कार्य्यः ॥ २२६ ॥ २२७ ॥
॥ २२८ ॥ २२९ ॥

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च । अन्येष्व
परिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ २३० ॥

पुष्पेष्विति । पुष्पेषु हरिते च येन केन धान्ये गुल्मलतादिषु
अपरिपूतेषु तुषापनयनादिषु अच्छमायतवेष्टे धान्यनिर्माणात्
परिशोधनाय अन्येषु धान्येषु समर्थपुरुषभारहार्येषु
हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णल
परिमाणो दण्डः स्यात् ॥ २३० ॥

परिपूतेषु धान्येषु शाकमूलफलेषु च। निरन्वये शतन्दण्डः सान्वयेऽर्द्धशतन्दमः ॥ ३३१ ॥

परीति। निष्पुलाकीकृतेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्यस्वामिनां सम्बन्धः येन सह कश्चिदपि सम्बन्धो नास्ति एकग्रामवास्यादिः तत्र शतं दण्डः सान्वये तु पञ्चाशत्पणो दमः स्वल्पेषु धान्येषु अयन्दण्डः तत्र हि परिपूयन्ते गृहस्थिते ष्वेकादश गुणो दण्डः प्रागुक्तः ॥ ३३१ ॥

स्यात्साहसन्त्वन्वयवत् प्रसभं कर्म्म यत्कृतम्। निरन्वयम्भवेत् स्तेयं हृत्वापह्नूयते च यत् ॥ ३३२ ॥

स्यादिति। यद्द्रव्यापहारादिकर्म्म द्रव्यस्वामिसमक्षं बलात् कृतं तत्साहसं स्यात् यदेवलं तद्भवं साहसं अतएव स्तेय दण्डो न कार्य्यः एतदर्थं स्तेयप्रकरणे साहसपाठः यत्पुनः स्वामिप रोक्षापहृतं तत् स्तेयं भवेत् यच्च हृत्वा अपह्नुते तदपि स्तेय मेव ॥ ३३२ ॥

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः। तमा द्यन्दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥ ३३३ ॥

यस्त्वेतानीति। यः पुनरेतानि सूत्रादिद्रव्याणि उपभोगार्थं कृतसंस्काराणि मनुष्यश्चोरयेत्। यश्च चेताग्निं गृहाग्निं वा

मग्निगृहाच्चोरयेत्तं राजा प्रथमं साहसं दण्डयेत् अग्निस्वामिन श्चाधानोपक्षयोत्पादकः। गोविन्दराजस्तु लौकिकमप्यग्निं चोरयतोऽयं दण्ड इत्याह तदयुक्तम् अल्पापराधे गुरुदण्ड स्यान्याय्यत्वात्॥ ३३३॥

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः॥ ३३४॥

येनेति। येन येनाङ्गेन हस्तपादादिना येन प्रकारेण सन्धि च्छेदादिना चौरो मनुष्येषु विरुद्धं धनापहारादिकं चेष्टते तत्तदेवाङ्गमवयवनिवारणाय राजा छेदयेत्। तत्र धन स्योत्कर्षापकर्षापेक्षयाऽवयवच्छेदः॥ ३३४॥

पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः। नाद ण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न तिष्ठति॥ ३३५॥

पित्रेति। पित्राचार्य्यमित्रभ्रातृमातृपत्नीपुत्रपुरोहितानां मध्यात्स्वधर्म्मे योऽनवतिष्ठते स राज्ञोऽदण्डनीयो नास्ति अपितु दण्डनीय एव॥ ३३५॥

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥ ३३६॥

कार्षेति। यत्रापराधे राजव्यतिरिक्तो जनः कार्षापणं दण्ड नीयो भवेत्तस्मिन्नपराधे राजा पणसहस्रं दण्डनीय इति

निग्रहः। स्वार्थं रक्षकस्तु स्वयं प्रवेशयेत् आत्मीयेभ्यो वा दद्यात्। ईशीदण्डकं वध्य इति वक्ष्यमाणत्वात्॥ ३३६॥

अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषं। षोड
शैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य च॥ ३३७॥

ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतम्भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः॥ ३३८॥

अष्टेति। ब्राह्मणस्येति। तद्दोषगुणविद्धि सइति सर्वत्र संब
ध्यते यस्मिन् स्तेये यो दण्ड उक्तः स स्तेयगुणदोषज्ञस्य शूद्रस्याष्ट
भिरापाद्यते गुण्यते इति अष्टगुणः कर्त्तव्यः। षोडशगुणो गुण
दोषज्ञस्य वैश्यस्य। द्वात्रिंशद्गुणस्तथाविधक्षत्रियस्य। चतुःषष्टि
गुणो गुणदोषविदुषो ब्राह्मणस्य। शतगुणो वा। अष्टाविंशत्यधिक
शतगुणो वा। गुणातिशयापेक्षया ब्राह्मणस्यैव॥ ३३७॥ ३३८॥

वानस्पत्यं मूलफलन्दार्व्वग्न्यर्थन्तथैव च। तृणञ्च
गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥ ३३९॥

वानस्पत्यमिति। वीरुद्वनस्पतीनां पुष्पाणि स्ववदाद
दीत फलानि चापरिवृतानां इति गौतमवचनात्। अपरिवृत

[illegible] मूलफलं होमीयाग्न्यर्थं च दारु गोग्रासार्थं च तृणमपरकीयवदेवं मनुराह तदादाने न दण्डो नाप्यधर्मः ॥ ३३९ ॥

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनं। याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥ ३४० ॥

योऽदत्तेति। अदत्तादायिनश्चौरस्य हस्तात् यो ब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीयधनं ज्ञात्वा लब्धुमिच्छेत् स चौरवच्चौरसदृशो ज्ञेयः अतः स इव दण्ड्यः ॥ ३४० ॥

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ ३४१ ॥

द्विजइति। द्विजातिः पथिकः क्षीणपाथेयः द्वाविक्षुदण्डौ द्वे च मूलके परकीयक्षेत्राद्गृह्णन् दण्डदानयोग्यो न भवति ॥ ३४१ ॥

असन्धितानां संधाता सन्धितानाञ्च मोक्षकः। दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्बिषं ॥ ३४२ ॥

असन्धीति। असम्बद्धानामश्वादीनामपरकीयाणां योऽदर्शेन बन्धयिता बद्धानां मनुष्यादीनां मोचयिता यो वा दासाश्वरथापहारी च चौरदण्डं प्राप्नुयाच्च गुरुलघ्वपराधानुसारेण भार लघ्व्येदमनयापराधरूपोयोग्यः ॥ ३४२ ॥

अनेन विधिना राजा कुर्व्वाणः स्तेननिग्रहं।
यशोऽस्मिन् प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखं॥३४३॥

अनेनेति। अनेनोक्तविधानेन राजा चौरनियमनं कुर्व्वाणः इह लोके ख्यातिम्परलोके चोत्कृष्टसुखञ्चाप्नुयात् ॥ ३४३ ॥

ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्। नोपेक्षेत क्षणमपि राजा साहसिकन्नरम्॥ ३४४॥

ऐन्द्रमिति। सर्व्वाधिपत्यलक्षणं पदं ख्यातिं चाविनाशिनीमनपचयामतिशयेन प्राप्तुमिच्छन् राजा बलेन गृहदाहधनग्रहणकारिणं मनुष्यं क्षणमपि नोपेक्षेत॥ ३४४ ॥

वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः। साहसस्य नरः कर्त्ता विज्ञेयः पापकृत्तमः॥ ३४५ ॥

वागिति। वाक्पारुष्यकृतश्चौराच्च दण्डपारुष्यकारिणश्च मनुष्यात्साहसकृन्मनुष्योऽतिशयेन पापकारी बोद्धव्यः ॥३४५॥

साहसे वर्त्तमानन्तु यो मर्षयति पार्थिवः। स विनाशं व्रजत्याशु विद्वेषञ्चाधिगच्छति ॥ ३४६ ॥

साहसइति। योराजा साहसे प्रवर्त्तमानं क्षमते स पापकृतामुपचयादधर्म्मवृद्ध्या विनश्यति अपक्रियमाणराष्ट्रतया जनविद्वेषञ्च गच्छति ॥ ३४६ ॥

न मित्रकारणाद्राजा विपुलाद्वा धनागमात्।
समुत्सृजेत्साहसिकान्सर्व्वभूतभयावहान् ॥ ॥३४७॥

नमित्रेति। मित्रवाक्येन बहुधनप्राप्त्या वा सर्व्वभूतभय जनकान् साहसिकान् राजा न त्यजेत् ॥ ३४७ ॥

शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते। द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते ॥ ३४८ ॥

आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे। स्त्रीविप्राभ्युपपत्तौ च धर्म्मेण घ्नन्न दुष्यति ॥ ३४९ ॥

शस्त्रमिति। आत्मनइति। ब्राह्मणादिभिस्त्रिभिर्वर्णैः तदायुधं ग्रहीतव्यं यस्मिन् काले वर्णानामाश्रमिणाञ्च बलात्कारादिभिर्धर्म्मः कर्त्तुं न शक्यते तथा त्रैवर्णिकानामराजकेषु राष्ट्रेषु परचक्रागमनादिकालजनिते क्षोभसंकरादौ प्राप्ते। तथात्मरक्षार्थं दक्षिणाधनगवाद्यपहारनिमित्ते च संग्रामे स्त्रीब्राह्मणरक्षार्थञ्च धर्म्मयुद्धेनाततायिनः परान् हिंसन् न दोषभागी भवति परमारणेच्छया बाह्यपरत्वो न कार्य्यः ॥ ३४८ ॥ ३४९ ॥

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥३५०॥

गुरुं वेति। गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमं वधो द्यतमागच्छन्तं विद्यावृत्तादिभिरुत्कृष्टं पलायनादिभिरपि स्वनिस्तरणाशक्तौ निर्विचारं हन्यात् अतएव उशनाः। गृहीत शस्त्रमाततायिनं हत्वा न दोषः। कात्यायनस्तु भृगुप्रश्नो क्तेन मनुश्लोकमेव व्यक्तं व्याख्यातवान्। आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः। वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः। मेधातिथिगोविन्दराजौ तु स्वीविप्राभ्युपपत्तौ च धर्म्मीय घ्नन् न दुष्यतीति पूर्व्वस्यायमनुवादः। गुर्व्वादिक मपि हन्यात् किमुतान्यमपीति आचष्टे ॥ ३५० ॥

नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥ ३५१ ॥

नाततेति। जन समक्षं रहसि वा वधोद्यतस्य मारणे हन्तुर्न कश्चिदपि अधर्म्मरूपः प्रायश्चित्ताख्यो दोषो वा भवति यस्मात् स्तुगतोमन्युः क्रोधाभिमानिनी देवता हन्यमानगतं क्रोधं निवर्त्तयति। स्वाहवे चापराधगौरवापेक्षया मारणपूर्व्वेदंव धनपरदारयोरक्षा: कार्य्याः ॥ ३५१ ॥

परदाराभिमर्शेषु प्रवृत्तान्नॄन्महीपतिः। उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥ ३५२ ॥

इदानीं स्त्रीसंग्रहणमाह परदारेति। परदारसंयोगेषु प्रवृत्तान् मनुष्यान् भयजनकैर्दण्डैर्नासौष्ठकर्तनादिभिश्चिह्नयित्वा राजा देशान्निःसारयेत् ॥ ३५२ ॥

तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः। येन मूलहरोऽधर्मः सर्व्वनाशाय कल्पते ॥ ३५३ ॥

तदिति। यस्मात् परदाराभिगमनात्संभूतो वर्णस्य सङ्करः सम्पद्यते येन वर्णसङ्करेण विशुद्धपत्नीकयजमानाभावात् यज्ञो नाप्याहुतिः सम्यगादित्यमुपतिष्ठत इत्यस्याभावे सति उत्सन्नजगन्मूलविनाशकोऽधर्मो जगन्नाशाय सम्पद्यते ॥ ३५३ ॥

परस्य पत्न्या पुरुषः सम्भाषां योजयन् रहः। पूर्व्वमाक्षारितो दोषैः प्राप्नुयात्पूर्व्वसाहसम् ॥ ३५४ ॥

परस्येति। तत्स्त्रीसम्भाषणादिदोषैः पूर्व्वमुत्पन्नाभिशापः पुरुष उचितकारणव्यतिरेकेण परभार्य्यया सह सम्भाषणं कुर्व्वन् प्रथमसाहसदण्डमाप्नुयात् ॥ ३५४ ॥

यस्त्वनाक्षारितः पूर्व्वमभिभाषेत कारणात्। न दोषम्प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमः॥ ३५५॥

यस्त्विति। यः पुनः पूर्व्वन्तत्स्त्रीप्रार्थनाभिप्रायरहितः केनचित् कारणेन अनयमयमभिभाषणं कुर्य्यान्न स पुनर्द्दण्डादिदोषम्प्राप्नुयात् यस्मान्न कश्चित्तस्यापराधोस्ति॥३५५॥

परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा। नदीनां वापि सम्भेदे ससंग्रहणमाप्नुयात्॥ ३५६॥

परेति। तीर्थारण्यवनादिकं निर्ज्जनदेशोपलक्षणार्थं यः पुरुषः परस्त्रियमुदकावतरणमार्गेऽरण्ये ग्रामाद्वहिर्गुल्मलताकीर्णे निर्ज्जने देशे वने वक्षखण्डयुक्ते नदीनां सङ्गमे पूर्व्वमनाक्षारितोपि कारणादपि सम्भाषेत् स संग्रहण दण्डं सहस्रपणं वक्ष्यमाणम्प्राप्नुयात्। सम्यग्गृह्यते ज्ञायते येन परस्त्रीसम्भोगाभिलाषइति संग्रहणम्॥ ३५६॥

उपचारक्रिया केलिः स्पर्शोभूषणवाससां। सह खट्वासनञ्चैव सर्व्वं संग्रहणं स्मृतम्॥ ३५७॥

उपचारेति। स्रग्गन्धानुलेपनप्रेषणाद्युपचारकरणं केलिः परीहासालिङ्गनादिः भ्रलङ्कारवस्त्राणां स्पर्शनमेकखट्वासनमित्येतत्सर्व्वं संग्रहणं मन्वादिभिः स्मृतम्॥ ३५७॥

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम्॥ ३५८॥

स्त्रियमिति। यः स्प्रष्टुमनुचिते स्तनजघनादिदेशे स्त्रियं स्पृशेत्तया वा वृषणादिके स्पृष्टः क्षमते तदाऽन्योन्यानुमोदनरूपं सर्वं संग्रहणं मन्वादिभिः स्मृतम्॥ ३५८॥

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति। चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा॥ ३५९॥

अब्राह्मण इति। अब्राह्मणोऽत्र शूद्रः दण्डभूयस्त्वात्। ब्राह्मण्यामनिच्छन्त्यामुत्तमं संग्रहणे प्राणान्तं दण्डमाप्नोति चतुर्णामपि ब्राह्मणादीनां वर्णानामधमपुंसादीनामप्यादितिवचनेन दाराः सर्वदा रक्षणीयाः तेन प्रवृत्तिनिवृत्त्यर्थं उत्कृष्टसंग्रहणादपि सर्वैर्वर्णैर्भार्या रक्षणीयाः॥ ३५९॥

भिक्षुका बन्दिनश्चैव दीक्षिताः कारवस्तथा। सम्भाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः॥ ३६०॥

भिक्षुका इति। भिक्षाजीविनः स्तुतिपाठकाः यज्ञार्थं कृतदीक्षकाः सूपकारादयश्च भिक्षादिककार्यार्थं परस्त्रीभिः सह संभाषणमनिवारिताः कुर्युः। एवञ्चैषां संग्रहणाभावः॥ ३६०॥

न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत्। निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥ ३६१ ॥

न संभाषामिति। स्वामिना निषिद्धः स्त्रीभिः संभाषणं कुर्य्यात्प्रतिषिद्धः संभाषणमाचरन् राज्ञः षोडशमाषात्मकसुवर्णदण्डयोग्योभवति ॥ ३६१ ॥

नैष चारणदारेषु विधिर्नात्मोपजीविषु। सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥ ३६२ ॥

नैषइति। परस्त्रियं योऽभिवदेदित्यादिसंभाषणनिषेधविधिर्नटगायनादिदारेषु नास्ति तथा भार्य्यापुत्रः स्वकातनुरित्युक्तत्वात् भार्य्यैवात्मा अनया उपजीवन्ति धनलाभाय तस्याजारं चमन्ते ये तेषु नटादिव्यतिरिक्तेष्वपि ये दारास्तेष्वप्येवं निषेधविधिर्नास्ति यस्माच्चारणा आत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्य्याः संश्लेषयन्ते स्वयमागतांश्च परपुरुषान् प्रच्छन्नाभूत्वा स्वात्मानं विभावयन्तो व्यवहारयन्ति॥३६२॥

किञ्चिदेव तु दाप्यः स्यात्संभाषां ताभिराचरन्। प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥ ३६३ ॥

किञ्चिदिति। निर्ज्जनदेशे चारणात्मोपजीविस्त्रीभिः संभाषणं कुर्व्वन् स्वल्पदण्डमेवं राज्ञा दाप्यः तासामपि

परदारत्वात् तच्च दासीभिरवरुद्धाभिर्भुजिष्याभिः प्रव्रजिता-
भिश्च सम्भाषां कुर्वन् किञ्चिदल्पमात्रं दाप्यः स्यात्॥ ३६३॥

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति। सका-
मान्दूषयंस्तुल्यो न वधम्प्राप्नुयान्नरः॥ ३६४॥

योऽकामामिति। यस्तु सजातिरनिच्छन्तीं कन्यां दूषयति
स तत्क्षणादेव ब्राह्मणेतरो लिङ्गच्छेदनादिकं वधमर्हति
इच्छन्तीं पुनर्गच्छन् वधार्हो मनुष्यो न भवति॥ ३६४॥

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।
जघन्यं सेवमानान्तु संयतां वासयेद्गृहे॥ ३६५॥

कन्यामिति। कन्यां सम्भोगार्थमुत्कृष्टजातिपुरुषं सेवमानां
स्वल्पमपि दण्डं न दापयेत् हीनजातिं पुनः सेवमानां बद्धां
वासयेत् यावत्सा निवृत्तकामा स्यात्॥ ३६५॥

उत्तमां सेवमानस्तु जघन्यो वधमर्हति। शुल्कन्द-
द्यात्सेवमानः समामिच्छेत्पिता यदि॥ ३६६॥

उत्तमामिति। हीनजातिरुत्कृष्टजातीयां कन्यामिच्छन्ती

अनिच्छन्तीं वा गच्छन् आत्ममेवयाऽङ्गुच्छेदनमारणात्मकं वधमर्हति समानजातीयां पुनरिच्छन्तीं गच्छन् यदि पिता मन्यते तदा पितुः शुल्कानुरूपमर्थं दद्यात्तच दण्ड्यः सा च कन्या तेनैव वोढव्या ॥ ३६६ ॥

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥ ३६७ ॥

अभीति। योमनुष्यः प्रसह्य बलात्कारेण समानजातीयां गमनवर्ज्जमदर्पादेवाङ्गुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य शीघ्रमेवाङ्गुलिद्वयच्छेदः कर्त्तव्यः षट् पणशतानि चायं दण्ड्यः स्यात् ॥ ३६७ ॥

सकामान्दूषयंस्तुल्योनाङ्गुलिच्छेदमाप्नुयात् । द्विशतन्तु दमं दाप्यः प्रसंगविनिवृत्तये ॥ ३६८ ॥

सकामामिति। समानजातिरिच्छन्तीं कन्यामङ्गुलिप्रक्षेपमात्रेण नाशयन्नाङ्गुलिच्छेदमाप्नोति किन्त्वऽतिप्रसक्तिनिवारणाय द्विशतन्दण्डन्दाप्यः ॥ ३६८ ॥

कन्यैव कन्यां या कुर्य्यात्तस्याः स्याद्द्विशतोदमः। शुल्कञ्च द्विगुणन्दद्याच्छिफाश्चैवाप्नुयाद्दश ॥३६९॥

कन्यैवेति। या कन्यैवापरांकन्यामंगुलिप्रक्षेपेण नाशयेत् तस्या

द्विशतो दण्डः स्यात्कन्यायाः शुल्कं च द्विगुणं कन्यापितुर्दद्यात् शिफा प्रहारांश्च दश प्राप्नुयात्॥ ३६९॥

या तु कन्यां प्रकुर्यात् स्त्री सा सद्योमौण्ड्यमर्हति। अङ्गुल्योरेव च छेदं खरेणोद्वहनं तथा॥ ३७०॥

या त्विति। या पुनः स्त्री कन्यां अङ्गुलिप्रक्षेपेण नाशयेत्सा तत्क्षणादेव शिरोमुण्डनं अनुबन्धापेक्षयाङ्गुल्योरेव छेदनं गर्दभेन च राजमार्गे वहनमर्हति॥ ३७०॥

भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता। तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥ ३७१॥

भर्तारमिति। या स्त्री प्रबलधनिकपित्रादिज्ञातिदर्पेण सौन्दर्यादिगुणदर्पेण वा पतिं पुरुषान्तरोपगमनाल्लङ्घयेत्। तां राजा बहुजनाकीर्णे देशे श्वभिर्भक्षयेत्॥ ३७१॥

पुमांसं दाहयेत्पापं शयने तप्त आयसे। अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत्॥ ३७२॥

पुमांसमिति। परस्त्रीगमनाज्जारं पापकारिणं पुरुषमयोमयशयने प्रज्वलिते राजा दाहयेत्तत्र शयने वधघातिनः काष्ठानि निःक्षिपेयुः यावत्पापकारी दग्धः स्यात्॥ ३७२॥

संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः। व्रात्यया सह संवासे चाण्डाल्या तावदेव तु॥ ३७३॥

संवत्सरेति। परस्त्रीगमनेन दुष्टस्य पुंसोऽदण्डितस्य पुनः संवत्सरातिक्रमे तामेवाभिशस्तस्य पूर्व्वदण्डाद्द्विगुणो दमः कार्य्यः। तथा व्रात्यजायागमने योदण्डः परिकल्पितः चाण्डाल्याश्च निर्द्देशात् चाण्डालीगमनरूपः तथा चाण्डालीगमने योदण्डः सहस्रन्त्वन्त्यजस्त्रियमिति संवत्सरे ऽतीते यदि तामेव व्रात्यजायान्तामेव चाण्डालीं पुनर्गच्छति तदा द्विगुणः कर्त्तव्यः। एतच्च पूर्व्वस्यैवोदाहरणद्वयं व्रात्यजायागमनेपि चाण्डालीगमनदण्डप्रदर्शनार्थं सर्व्वस्यैव तु पूर्व्वाभिशस्तदण्डितस्य संवत्सरातिक्रमे पुनस्तामेव गच्छतः पूर्व्वदण्डाद्द्विगुणो दण्डो ऽद्रष्टव्यः॥ ३७३॥

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। अगुप्तमङ्गसर्व्वस्वैर्गुप्तं सर्व्वेण हीयते॥ ३७४॥

शूद्र इति। भर्त्रादिभीरक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तदाऽरक्षितां रक्षारहितां गच्छन् लिङ्गसर्व्वस्वाभ्यां वियोजनीयः यथाङ्गविशेषानवबोधेपि मार्गस्याभिजनने

लिङ्गोद्धारः सर्वस्वहरणं गुप्तां चेद्योऽधिकरतिगोप्तमनपत्या लिङ्गच्छेदः । रक्षितान्तु गच्छन् शरीरधनहीनः कर्त्तव्यः ॥३७४॥

वैश्यः सर्व्वस्वदण्डः स्यात्संवत्सरनिरोधतः ।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥३७५॥

वैश्य इति । वैश्यस्य गुप्तब्राह्मणीगमने संवत्सरमवरोधनान्तरं सर्व्वस्वापहरणरूपो दण्डः कार्य्यः क्षत्रियागमने तु वैश्यस्य क्षत्रियामिति वक्ष्यति क्षत्रियो गुप्ता ब्राह्मणीगमने सहस्रदण्डनीयः खरमूत्रेण चास्य मुण्डनं कर्त्तव्यम् ॥ ३७५ ॥

ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ । वैश्यं पञ्चशतं कुर्य्यात्क्षत्रियन्तु सहस्रिणं ॥ ३७६ ॥

ब्राह्मणीमिति । अरक्षितां तु ब्राह्मणीं यदि वैश्यक्षत्रियौ गच्छतः तदा वैश्यं पञ्चशतदण्डयुक्तं कुर्य्यात् । क्षत्रियं पुनः सहस्रदण्डयोगिनं । वैश्ये चायमल्पतरदण्डः शूद्रागमनादिना निर्गुणस्वामिकापोषितब्राह्मणीगमनविषयः गुणितरब्राह्मणीगमने तु वैश्यस्यापि सहस्रदण्ड एव ॥ ३७६ ॥

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना॥ ३७७॥

उभाविति। तावेवोभावपि क्षत्रियवैश्यौ ब्राह्मण्या रक्षितया सह कृतमैथुनौ शूद्रवत् सर्व्वस्व हीयते गुप्तं इति दण्ड्यौ। यद्वा कटेन प्रावेष्ट्य दग्धव्यौ तत्र वैश्यं लोहितदर्भैः क्षत्रियं शर पत्रैर्वावेष्ट्य इति वशिष्ठोक्तो विशेषो ग्राह्यः। पूर्व्वं सहस्रं क्षत्रियो दण्ड्यो वैश्यः सर्व्वस्वमित्युक्तत्वादयमात्यन्तिकदण्डो गुण वद्ब्राह्मणीगमनविषयो बोद्धव्यः॥ ३७७॥

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः॥ ३७८॥

सहस्रमिति। रक्षितां विप्रां ब्राह्मणो बलेनोपगच्छन्सहस्रं दण्ड्यः स्यात्। इच्छन्त्या पुनः सहकृतमैथुने पञ्चशतानि दण्डनीयो भवेत्॥ ३७८॥

मौण्ड्यम्प्राणान्तिकोदण्डोब्राह्मणस्य विधीयते। इतरेषान्तु वर्णानान्दण्डः प्राणान्तिको भवेत्॥ ३७९॥

मौण्ड्यमिति। ब्राह्मणस्य वधदण्डस्थाने शिरोमुण्डन न्दण्डः शास्त्रेणोपदिश्यते क्षत्रियादीनान्तु मरणेन घातेन दण्डो भवति॥ ३७९॥

न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वपि स्थितम्।
राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतम्॥ ३८०॥

नजात्विति। ब्राह्मणं सर्व्वपापकारिणमपि कदाचिन्न हन्यात्। अपितु सर्व्वस्वयुक्तमक्षतशरीरं राष्ट्रान्निर्व्वासयेत् ॥ ३८०॥

न ब्राह्मणबधाद्भूयानधर्म्मो विद्यते भुवि। तस्मादस्य बधं राजा मनसापि न चिन्तयेत्। ३८१॥

न ब्राह्मणेति। ब्राह्मणबधादन्यः पृथिव्यामधर्म्मो नास्ति तस्माद्राजा सर्व्वपापकारिणो ब्राह्मणस्य मनसापि बधञ्चिन्तयेत्॥ ३८१॥

वैश्यञ्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्।
योब्राह्मण्यामगुप्तायान्तावुभौ दण्डमर्हतः॥ ३८२॥

वैश्यश्चेति। रक्षितां क्षत्रियां यदि वैश्यो गच्छेत् क्षत्रियो वा यदि रक्षितां वैश्यां तदा तयोर्ब्राह्मण्यामगुप्तायाङ्गमने यो दण्डाबुक्तौ वैश्यं पञ्चशतङ्कुर्य्यात् क्षत्रियन्तु सहस्रमिति तावेव तौ दण्डौ वैश्यक्षत्रिययोर्भवतः अयञ्च वैश्यस्य रक्षितक्षत्रियागमने पञ्चशतरूपो दण्डो लघुत्वात् गुणवद्भार्य्याविमुखस्यातिमात्रोपपीडितक्षत्रियागामिनः मूत्राभ्यादिमन्त्र

विषयोयोद्धव्यः क्षत्रियस्य रक्षितवैश्यायां ब्राह्मणीपुत्रएव सहस्रदण्डः॥ ३८२॥

सहस्रं ब्राह्मणो दण्ड्यो गुप्ते तु ते व्रजन्।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः॥ ३८३॥

सहस्रमित्यादि। क्षत्रियावैश्ये रक्षिते ब्राह्मणो व्रजन्सहस्रं दापनीयः शूद्रायां रक्षितायां क्षत्रियवैश्ययोर्गमने सहस्रमेव दण्डः स्यात्॥ ३८३॥

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतन्दमः। मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा॥ ३८४॥

क्षत्रियेति। अरक्षितक्षत्रियागमने वैश्यस्य पञ्चशतानि दण्डः स्यात्। क्षत्रियस्य त्वरक्षितक्षत्रियागमने गर्दभमूत्रेण मुण्डनं पञ्चशतरूपं वा दण्डमाप्नुयात्॥ ३८४॥

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन्।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियं॥ ३८५॥

अगुप्ते इति। अरक्षितां क्षत्रियां वैश्यां शूद्रां वा ब्राह्मणो गच्छन् पञ्च शतानि दण्ड्यः स्यात् अन्ते भवोऽन्त्यजः यस्मादधमो नास्ति चाण्डालादिस्तस्य स्त्रियं गच्छन्सहस्रन्दण्ड्यः॥ ३८५॥

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्। न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक्॥३८६॥

यस्येति। यस्य राज्ञो राष्ट्रे चौरः परदारगामी परुषवादी बलात्कारादिसाहसकारी दण्डपारुष्यकर्त्ता च नास्ति स राजा शक्रपुरं याति ॥ ३८६ ॥

एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके। साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः ॥ ३८७ ॥

एतेषामिति। एतेषां स्तेनादीनां पञ्चानां स्वराष्ट्रे निग्रहः समानजातीयेषु राजसु मध्ये राज्ञः साम्राज्यकृत् इह लोके च यशस्करो भवति ॥ ३८७ ॥

ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि। शक्तं कर्मण्यदुष्टञ्च तयोर्दण्डः शतं शतं ॥ ३८८ ॥

ऋत्विजमिति। यो याज्यः ऋत्विजं कर्मानुष्ठानसमर्थं पतितत्वादिदोषरहितं ऋत्विग्वा याज्यमदुष्टं त्यजति तयोः शतं शतं दण्डः कार्य इति दण्डप्रपञ्चादिरमुक्तम् ॥ ३८८ ॥

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति। त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट् ॥ ३८९ ॥

न मातेति। मातृपितृभार्यापुत्राः त्यागं पोषणशुश्रूषणा

यकरणात्मकं नार्हति तस्मादेतान् पातकादिदोषरहितान् परित्यजन् एकैकपरित्यागे राज्ञा षट्शतानि दण्ड्याः ॥ ३८९ ॥

आश्रमेषु द्विजातीनां कार्य्ये विवदतां मिथः। न विब्रूयान्नृपो धर्म्मञ्चिकीर्षन् हितमात्मनः ॥ ३९० ॥

आश्रमेष्विति। द्विजातीनां गार्हस्थ्याद्याश्रमविषये कार्य्ये अयं शास्त्रार्थोऽनायं शास्त्रार्थ इति परस्परञ्जातविवादानां राजा स्वीयहितञ्चिकीर्षुरयं शास्त्रार्थ इति सहसाविशेषेण न ब्रूयात् ॥ ३९० ॥

यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः। सान्त्वेन प्रशमय्यादौ स्वधर्म्मं प्रतिपादयेत् ॥ ३९१ ॥

यथार्हमिति। योयादृशीं पूजामर्हति तन्तथा पूजयित्वा अन्यैर्ब्राह्मणैस्सह प्रथमम्प्रीत्या अपगतकोपं कृत्वा ततएषां यः स्वधर्म्मः तं बोधयेत् ॥ ३९१ ॥

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे। अर्हावभोजयन् विप्रो दण्डमर्हति माषकं ॥ ३९२ ॥

प्रातीति। निरन्तरगृहवासी प्रातिवेश्यः तदनन्तरगृहवासी अनुवेश्यः यस्मिन्नुत्सवे विंशतिरन्ये ब्राह्मणाभोज्यन्ते तत्र प्राति वेश्यानुवेश्यौ प्रातिवेश्यब्राह्मणातिक्रमकारी चेति विष्णुवचनात्

ब्राह्मणौ भोजनार्हावभोजयन् ब्राह्मणस्तत्र च हैरण्यादिपद पदार्थ रौप्यमाषकं दण्डमर्हति ॥ ३९२ ॥

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन् । तदन्नं द्विगुणं दाप्यो हिरण्यं चैव माषकं ॥ ३९३ ॥

श्रोत्रिय इति । विद्याचारवान् तथाविधमेव गुणवन्तं विभव कार्येषु विवाहादिषु प्रकृतत्वात् प्रातिवेश्यानुवेश्यावेवाभोजयं स्तदन्नमभोजिताय द्विगुणं दाप्यो हिरण्यमाषकञ्च राज्ञः । ॥ ३९३ ॥

अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः । श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित्करम् ॥ ३९४ ॥

अन्ध इति । जडो बधिरः पंगुः सम्पूर्णसप्ततिवर्षः सप्तत्येति प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । श्रोत्रियेषु धनधान्य भूम्यादिनोपकारकश्च केनचिदपि क्षीणकोषेणापि राज्ञा स्वल्पमपि करं न दापनीयाः ॥ ३९४ ॥

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिंचनम् ।
महाकुलीनमार्य्यञ्च राजा संपूजयेत्सदा ॥ ३९५ ॥

श्रोत्रियमिति । विद्याचारवन्तं ब्राह्मणं रोगिणं पुत्रवियोगादिदुःखितं बालवृद्धदरिद्रमहाकुलप्रसूतोदारचरितान् राजा दानमानहितकरणैः संपूजयेत्सदा ॥ ३९५ ॥

शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः । न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ॥ ३९६ ॥

शाल्मलीति । शाल्मल्यादिवृक्षस्निग्धफलके अपरुषे रजकः शनैःशनैर्वासांसि प्रक्षालयेत् न च परकीयैर्वस्त्रैरन्यवस्त्राणि नयेत् न चान्यवासांसि अन्यपरिधानार्थं दद्यात् यद्येवं कुर्य्यात्तदासौ दण्ड्यः स्यात् ॥ ३९६ ॥

तन्तुवायो दशपलन्दद्यादेकपलाधिकम् । अतोन्यथावर्त्तमानो दाप्यो द्वादशकं दमम् ॥ ३९७ ॥

तन्तुवाय इति । तन्तुवायो वस्त्रनिर्माणार्थं दशपलानि सूत्रं गृहीत्वा पिष्टभक्ताद्यनुप्रवेशादेकादशपलं वस्त्रन्दद्यादि

ततोऽन्यूनत्वान्तरे द्वादश पणान् राज्ञा दाप्यः स्वामिनश्च तुष्टिः कर्त्तव्यैव ॥ ३९७ ॥

शुल्कस्थानेषु कुशलाः सर्व्वपण्यविचक्षणाः। कुर्य्युरर्घं यथापण्यन्ततो विंशं नृपो हरेत्॥ ३९८ ॥

शुल्केति। जलस्थलपथव्यवहारिभ्यो राजग्राह्यो भागः शुल्कं तत्स्थानेषु ये कुशलाः तथा सर्व्वपण्यानां सारासारज्ञाः ते पण्येषु यमर्घं मूल्यमनुरूपं कुर्य्युः ततो लाभधनाद्विंशतिभागं राजा गृह्णीयात्॥ ३९८ ॥

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च। तानि निर्हरतो लोभात्सर्व्वहारं हरेन्नृपः॥ ३९९ ॥

राज्ञ इति। राज्ञः सम्बन्धितया यानि विक्रेयद्रव्याणि प्रख्यातानि राजोपयोगीनि हस्त्यादीनि तद्देशोद्भवानि तथा यानि च प्रतिषिद्धानि यथा दुर्भिक्षे धान्यं देशान्तरं न नेतव्यमिति तानि लोभाद्देशान्तरं नयतो वणिजः सर्व्वहरणं राजा कुर्य्यात् ॥ ३९९ ॥

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी। मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥ ४०० ॥

शुल्कमिति। शुल्कमोषणाय उत्पथेन गच्छति अकाले रात्र्यादौ वा क्रयविक्रयं करोति शुल्कवञ्चनार्थं विक्रेयद्रव्यस्य वा अन्यां संख्यां वक्ति राजदेयमपलपितमष्टगुणन्दण्डरूप तथा दाप्यः ॥ ४०० ॥

आगमं निर्गमं स्थानन्तथा वृद्धिक्षयावुभौ। विचार्य सर्वपण्यानां कारयेत् क्रयविक्रयौ ॥ ४०१ ॥

आगममिति। कियतो दूरादागतमिति देशान्तरीयद्रव्यस्यागमं कियद्दूरं नीयतइति स्वदेशोद्भवस्य निर्गमं कियत्कालं स्थितं कियन्मूल्यं लभतइति स्थानं तथा कियती वृद्धिरस्य तथा कर्मकाराणां भक्ताच्छादनादिना कियानुपचयइत्येवं विचार्य यथा वणिजां क्रेतॄणां च पीडा न भवति तथा सर्वपण्यानां क्रयविक्रये कारयेत् ॥ ४०१ ॥

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथ वा गते। कुर्व्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः ॥ ४०२ ॥

पञ्चरात्रइति। आगमनिर्गमोपयोगादेः पण्यानाम

नियतत्वात्। अस्थिरार्घाणां पञ्चरात्रे पञ्चरात्रे गते स्थिर प्रायार्घाणां पक्षे पक्षे गते वणिजामर्घविदामग्रतश्च नृपतिरात्म पुरुषैर्व्यवस्थां कुर्यात्॥ ४०२ ॥

तुलामानं प्रतीमानं सर्व्वञ्च स्यात्सुलक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥ ४०३॥

तुलेति। तुलामानं सुवर्णादीनाम्परिच्छेदार्थं यत् क्रियते प्रतिमानं प्रस्थद्रोणादितत्सर्वं सुनिरूपितं यथा स्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्वं सभ्यपुरुषैर्नृपतिः परीक्षयेत् ॥ ४०३ ॥

पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणन्तरे। पादम्पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्॥ ४०४॥

पणमिति। भाण्डपूर्णानि यानानीति वक्ष्यति तेन रिक्त शकटादियानं तरविषये पणन्दाप्यं एवं पुरुषवाह्यभारोर्द्ध पणन्तरपणन्दाप्यः पशुश्च गवादिः पणचतुर्थभागं भाररहितोमनुष्यः पणाष्टमभागन्दापनीयः ॥ ४०४ ॥

भाण्डपूर्णानि यानानि तार्य्यन्दाप्यानि सारतः। रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः॥४०५॥

भाण्डेति। पण्यद्रव्यपूर्णानि शकटादीनि द्रव्यगतोत्कर्षापेक्षया सारतरं दाप्यानि द्रव्यरहितानि च गोणीकम्बलादीनि यत्किञ्चित्स्वल्पं तार्य्यन्दाप्यानि अपरिच्छदा दरिद्राश्चपदार्द्धरागापेक्षया यत्किञ्चिद्दापनीयाः॥४०५॥

दीर्घाध्वनि यथादेशं यथाकालन्तरोभवेत्। नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम्॥४०६॥

दीर्घेति। पूर्वं पारावारतरणार्थमुक्तं इदानीं नदीमार्गेण दूराध्वनि गन्तव्ये प्रबलवेगस्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया तरमूल्यं कल्पनीयं एतच्च नदीतीरेषु बोद्धव्यं समुद्रे तु वाताधीनपोतगमनत्वात् स्थायित्वाभावे तरपण्यविशेषज्ञापकं नदीवद्योजनादिकं नास्ति अतस्तत्रोचितमेव तरपण्यं ग्राह्यम्॥४०६॥

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः। ब्राह्मणा लिंगिनश्चैव नदाप्यास्तारिकन्तरे॥४०७॥

गर्भिणीति। संजातगर्भा स्त्री मासद्वयादूर्द्ध्वं तथा प्रव्रजितो भिक्षुर्मुनिर्वानप्रस्थो ब्राह्मणाश्च लिंगिनो ब्रह्मचारिणः तरमूल्यं तरे न दाप्याः॥४०७॥

यन्नावि किंचिद्दाशानां विशीर्येतापराधतः ।
तद्दाशैरेव दातव्यं समागम्य स्वतोंऽशतः ॥ ४०८ ॥

यन्नावीति । नौकारूढानां यत्किंचिद्भाण्डादि नाविकापराधेन नष्टं तन्नाविकैरेव मिलित्वा यथाभागं दातव्यम् ॥ ४०८ ॥

एष नौयायिनामुक्तो व्यवहारस्य निर्णयः । दाशापराधतस्तोये दैविके नास्ति निग्रहः ॥ ४०९ ॥

एष नाविति । नाविकापराधात् यदुदके नष्टं तन्नाविकैरेव दातव्यमिति पूर्वोक्तमनूदितं दैविके नास्ति निग्रह इति विधातुं नौयायिनामेष व्यवहारस्य निर्णयक्रमः दैवेन वातवात्यादिना नौभङ्गेन धनादिनाशे नाविकानां न दण्डः ॥ ४०९ ॥

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च । पशूनां रक्षणं चैव दास्यं शूद्रं द्विजन्मनाम् ॥ ४१० ॥

वाणिज्यमिति । वाणिज्यकुसीदकृषिपशुरक्षणानि वैश्यं कारयेत् शूद्रं च राजा द्विजातीनां दास्यं कारयेत् । अकुर्वाणौ वैश्यशूद्रौ राज्ञो दण्ड्यावित्येवमर्थोऽयमभिधोपदेशः ॥ ४१० ॥

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ । बिभृयादानृशंस्येन स्वानि कर्माणि कारयन् ॥ ४११ ॥

क्षत्रियमित्यादि । ब्राह्मणः क्षत्रियवैश्यौ वृत्त्यभावेन पीडितौ

करुणया तानि कर्माणि रक्षणक्षमादीनि कारयन् ग्रासाच्छादनादिना पोषयेत्। एवं धनवान् ब्राह्मणः तावुपनतावविभ्रत् राज्ञा दण्डनीय इति प्रकरणसामर्थ्याद्गम्यते ॥ ४११ ॥

दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्
॥ ४१२ ॥

दास्यन्त्विति। प्रभवतोभावः प्राभवत्यं ब्राह्मणः कृतोपनयनान् द्विजातीननिच्छतः प्रभुत्वेन लोभाद्दास्यकर्म पादधावनादि कारयन् षट् शतानि दण्ड्यः ॥ ४१२ ॥

शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा। दास्यायैव हि सृष्टोसौ ब्राह्मणस्य स्वयम्भुवा ॥ ४१३ ॥

शूद्रन्त्विति। शूद्रम्पुनर्भक्तादिभृतमभृतं वा दास्यं कारयेत यस्मादसौ ब्राह्मणस्य दास्यायैव प्रजापतिना सृष्टः ॥ ४१३ ॥

न स्वामिना निसृष्टोपि शूद्रो दास्याद्विमुच्यते।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति ॥ ४१४ ॥

न स्वामिनेति। यस्मादसौ स्वभावतस्तादृशो दासत्वं गतः स तेन त्यक्तः सदास्याभावेपि शूद्रो ब्राह्मणस्य दास्याय

विमुच्यते यस्माद्दास्यं शूद्रस्य सहजं अतः शूद्रत्वजातिमिव दास्य मपनयति यद्दृष्टार्थमप्यवश्यं शूद्रेण ब्राह्मणादिद्विजशुश्रूषा कर्त्तव्येत्येवंपरमेतत् अन्यथा वक्ष्यमाणदासकरणपरिगणन मनर्थकं स्यात् ॥ ४१४ ॥

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥ ४१५ ॥

ध्वजेति । संग्रामे स्वामिपक्षाज्जितो भक्तलाभाभ्युपगत दासो भक्तदासः तथा स्वदास्याः पुत्रः मूल्येन क्रीतोऽन्येन दत्तः पित्रादिक्रमागतः दण्डादिधनशुद्ध्यर्थं स्वीकृतदासभाव इत्ये तानि सप्त ध्वजाहृतादीनि दासत्वकरणानि ॥ ४१५ ॥

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ४१६ ॥

भार्येति । भार्यापुत्रदासास्त्रयोऽमी निर्धना एव मन्वा दिभिः स्मृता यस्मात् यद्धनमेतेऽर्जयन्ति यस्य ते भार्यादय स्तस्य तद्धनं भवति एतच्च भार्यादीनामस्वातन्त्र्यप्रदर्शनार्थं

परं मध्यमाद्दिः पशिषस्य स्त्रीधनस्य सम्भावत्वात् अत एवाहुष्टार्थकर्मोपदेशाच भार्य्यादीनामप्यधिकरणे पत्न्या अपि यागाधिकारस्य उक्तत्वात् स्त्रीपुंसयोर्मध्य एकधने चानुमति दारैर स्त्रियामपि कर्तृत्वात् ॥ ४१६ ॥

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत्। न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्य्यधनो हि सः ॥४१७॥

विस्रब्धमिति। निर्व्विचिकित्समेव सङ्कताहासशूद्राद्धन ग्रहणं कुर्य्यात् ब्राह्मणः यतस्तस्य किञ्चिदपि स्वं नास्ति यस्मा द्भर्तृग्राह्यधनोऽसौ। एवञ्चापदि बलादपि दासात् ब्राह्मणो धनं गृह्णन् राज्ञा दण्डनीय इत्येवमर्थमेतदुच्यते॥ ४१७॥

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्म्माणि कारयेत्। तौ हि च्युतौ स्वकर्म्मभ्यः क्षोभयेतामिदञ्जगत् ॥ ४१८॥

वैश्येति। वैश्यं कृष्यादीनि शूद्रञ्च द्विजातिशुश्रूषादीनि कर्म्माणि यत्नतो राजा कारयेत् यस्मात्तौ स्वकर्मभ्यश्च्युतावन्या न्यायोपार्ज्जितधनमदादिना जगदाकुलीकुर्य्याताम्॥ ४१८॥

अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च।
आयव्ययौ च नियतावाकरान् कोषमेव च ॥४१९॥

अहनीति। प्रत्यहमधिकृतद्वारेण प्रारब्धदृष्टादृष्टार्थ कर्म्मणां निष्पत्तिं नृपतिर्निरूपयेत्तथा हस्त्यश्वादीनि किमद्य प्रविष्टं किं निःसृतमिति सुवर्णरत्नाद्युत्पत्तिस्थानानि भाण्डागारं चावेक्षेत व्यवहारदर्शनायुक्तोऽपि राजा धर्म्मार्थं परित्यजेदिति दर्शयितुमुक्तस्यापि पुनर्व्वचनम् ॥४१९॥

एवं सर्व्वानिमान् राजा व्यवहारान् समापयन्।
व्यपोह्य किल्बिषं सर्व्वं प्राप्नोति परमां गतिम्॥४२०॥

एवमिति। एवमुक्तप्रकारेण एतान् सर्व्वानृणादानादीन् व्यवहारान् तत्त्वतो निर्णयेन समापयन् राजा पापं सर्व्वमपहाय स्वर्गादिप्राप्तिरूपामुत्कृष्टां गतिं लभते॥४२०॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां अष्टमोऽध्यायः॥०॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यामष्टमोऽध्यायः॥

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिञ्चनम्।
महाकुलीनमार्य्यञ्च राजा संपूजयेत्सदा ॥ ३९५ ॥

श्रोत्रियमिति। विद्याचारवन्तं ब्राह्मणं रोगिणं पुत्रवियोगादिदुःखितं बालवृद्धदरिद्रमहाकुलप्रसूतोदारचरितान् राजा दानमानहितकरणैः संपूजयेत्सदा ॥ ३९५ ॥

शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः। न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ॥ ३९६ ॥

शाल्मलीति। शाल्मल्यादिवृक्षमयश्लक्ष्णफलके अपरुषे रजकः शनैःशनैर्वासांसि प्रक्षालयेत् न च परकीयैर्वस्त्रैरन्यवस्त्राणि नयेत् नचान्यवासांसि अन्यपरिधानार्थं दद्यात् यद्येवं कुर्य्यात्तदासौ दण्ड्यः स्यात् ॥ ३९६ ॥

तन्तुवायो दशपलं दद्यादेकपलाधिकम्। अतोऽन्यथावर्त्तमानो दाप्यो द्वादशकं दमम् ॥ ३९७ ॥

तन्तुवाय इति। तन्तुवायो वस्त्रनिर्माणार्थं दशपलानि सूत्रं गृहीत्वा पिष्टभक्ताद्यनुप्रवेशादेकादशपलं वस्त्रं दद्यात् यदि

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी। मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययं॥ ४००॥

शुल्कमिति। शुल्कमोचनाय उत्पथेन गच्छति अकाले रात्र्यादौ वा क्रयविक्रयं करोति शुल्कलाघवार्थं विक्रेयद्रव्यस्य वा अल्पां संख्यां वक्ति राजदेयमपलपितमष्टगुणन्दण्डरूपतया दाप्यः॥ ४००॥

आगमं निर्गमं स्थानन्तथा वृद्धिक्षयावुभौ। विचार्य्य सर्वपण्यानां कारयेत् क्रयविक्रयौ॥ ४०१॥

आगममिति। कियतो दूरादागतमिति देशान्तरीयद्रव्यस्यागमं कियद्दूरं नीयत इति स्वदेशोद्भवस्य निर्गमं कियत्कालं स्थितं कियन्मूल्यं लभत इति स्थानं तथा कियती वृद्धिरत्र तथा कर्मकाराणां भक्ताच्छादनादिना कियानुपचय इत्येवं विचार्य्य यथा वणिजां क्रेतॄणां च पीडा न भवति तथा सर्व्वपण्यानां क्रयविक्रये कारयेत्॥ ४०१॥

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथ वा गते। कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनन्नृपः॥ ४०२॥

पञ्चरात्र इति। आगमनिर्गमोपयोगादेः पण्यानाम

नियतत्वात्। अस्थिरार्घाणामर्घं पञ्चरात्रे पञ्चरात्रे गते स्थिर प्रायार्घाणामर्घं पक्षे गते वणिजामर्घविदामध्यक्षं नृपतिराप्त पुरुषैर्व्यवस्थां कुर्य्यात् ॥ ४०२ ॥

तुलामानं प्रतीमानं सर्व्वञ्च स्यात्सुलक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत् ॥ ४०३ ॥

तुलेति। तुलामानं सुवर्णादीनाम्परिच्छेदार्थं यत् क्रियते प्रतिमानं प्रस्थद्रोणादि तत्सर्वं सुनिरूपितं यथा स्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्वं सभ्यपुरुषैर्नृपतिः परीक्षयेत् ॥ ४०२ ॥

पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणन्तरे। पादम्प
शुश्च योषिच्च पादार्द्धं रिक्तकः पुमान् ॥ ४०४ ॥

पणमिति। भाण्डपूर्णानि यानानीति वक्ष्यति तेन रिक्त शकटादियानं तरविषये पणन्दाप्यं एवं पुरुषः सभारोऽर्द्ध पणन्तरपणन्दाप्यः पशुश्च गवादिः पणचतुर्थभागं भाररहि तोमनुष्यः पणाष्टमभागन्दापनीयः ॥ ४०४ ॥

भाण्डपूर्णानि यानानि तार्य्यन्दाप्यानि मारतः। रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः॥४०५॥

भाण्डेति। पण्यद्रव्यपूर्णानि शकटादीनि द्रव्यगतोत्कर्षापेक्षया मारतं दाप्यानि द्रव्यरहितानि च गोणीकण्ठोलादीनि यत्किञ्चित्स्वल्पं तार्य्यन्दाप्यानि अपरिच्छदादरिद्रास्तु नरा दुःस्थतापेक्षया यत्किञ्चिद्दापनीयाः॥ ४०५॥

दीर्घाध्वनि यथादेशं यथाकालन्तरोभवेत्। नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम्॥ ४०६॥

दीर्घेति। पूर्व्वं पारावारतरणार्थमुक्तं इदानीं नदीमार्गेण दूराध्वनि गन्तव्ये प्रबलवेगस्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया तरमूल्यं कल्पनीयं एतच्च नदीतीरेषु बोद्धव्यं समुद्रे तु वाताधीनपोतगमनत्वात् स्थायित्वाभावे तरपण्यविशेषज्ञापकं नदीवच्छास्त्रादिकं नास्ति अतस्तत्कालोचितमेव तरपण्यं ग्राह्यम्॥ ४०६॥

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितोमुनिः। ब्राह्मणालिंगिनश्चैव नदाप्यास्तारिकन्तरे॥ ४०७॥

गर्भिणीति। संजातगर्भा स्त्री मासद्वयादूर्द्धं तथा प्रव्रजितो भिक्षुर्मुनिर्वानप्रस्थोब्राह्मणाश्च लिंगिनोब्रह्मचारिणः तरमूल्यं तरे न दाप्याः॥ ४०७॥

यन्नावि किंचिद्दाशानां विशीर्येतापराधतः। तद्दाशैरेव दातव्यं समागम्य स्वतोंऽशतः॥ ४०८॥

यन्नावीति। नौकारूढानां यत्किंचिद्दाशापराधेन नष्टं द्रव्यं तन्नाविकैरेव मिलित्वा यथाभागं दातव्यम्॥ ४०८॥

एष नौयायिनामुक्तो व्यवहारस्य निर्णयः। दाशापराधतस्तोये दैविके नास्ति निग्रहः॥ ४०९॥

एष नाविति। नाविकापराधात् यदुदके नष्टं तन्नाविकैरेव दातव्यमिति पूर्वोक्तमनूदितं दैविके नास्ति निग्रह इति विधातुं नौयायिनामेव व्यवहारस्य निर्णयकथनः दैवेन वातवात्यादिना नौभङ्गेन धनादिनाशे नाविकानां न दण्डः॥ ४०९॥

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च। पशूनां रक्षणं चैव दास्यं शूद्रं द्विजन्मनाम्॥ ४१०॥

वाणिज्यमिति। वाणिज्यकुसीदकृषिपशुरक्षणानि वैश्यं कारयेत् शूद्रं च राजा द्विजातीनां दास्यं कारयेत्। अकुर्वाणौ वैश्यशूद्रौ राज्ञो दण्ड्यावित्येवमर्थोऽयमिहोपदेशः॥ ४१०॥

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ। बिभृयादानृशंस्येन स्वानि कर्माणि कारयन्॥ ४११॥

क्षत्रियमित्यादि। ब्राह्मणः क्षत्रियवैश्यौ वृत्त्यभावेन पीडितौ

कारयन्वा स्वानि कर्माणि रथवहनादीनि कारयन् राजा स्वाग्रासादिना पोषयेत्। एवं धनवान् ब्राह्मणः तावुपसन्नाव बिभ्रत् राज्ञा दण्डनीय इति प्रकरणसामर्थ्याद्गम्यते ॥ ४११ ॥

दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्
॥ ४१२ ॥

दास्यन्त्विति। प्रभवतोभावः प्राभवत्यं ब्राह्मणः कृतोपनय नान् द्विजातीननिच्छतः प्रभुत्वेन लोभाद्दास्यकर्मपादधाव नादि कारयन् षट् शतानि दण्ड्यः ॥ ४१२ ॥

शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा। दास्या यैव हि सृष्टोसौ ब्राह्मणस्य स्वयम्भुवा ॥ ४१३ ॥

शूद्रंत्विति। शूद्रन्तुभक्तादिभृतमभृतं वा दास्यं कारयेत यस्मादसौ ब्राह्मणस्य दास्यायैव प्रजापतिना सृष्टः ॥ ४१३ ॥

न स्वामिना निसृष्टोपि शूद्रोदास्याद्विमुच्यते।
निसर्गजं हि नत्तस्य कस्तस्मात्तदपोहति ॥ ४१४ ॥

न स्वामिनेति। यस्मादसौ ब्रह्मा चतत्त्वादिना दास्यं मतः स तेन त्यक्तः स्वदास्याभावेपि शूद्रोब्राह्मणस्य दास्याद

विमुच्यते यस्माद्दास्यं शूद्रस्य स्वभावजं अतः शूद्रत्वजातिमिव दास्यमपनयति यद्यपि दास्यमपवर्ग्यं शूद्रेण तथापि ब्राह्मणादिद्विजशुश्रूषा धर्मेभ्यो निवृत्तिपरमेतत् अन्यथा वक्ष्यमाणदासकरणपरिगणनमनर्थकं स्यात् ॥ ४१४ ॥

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥ ४१५ ॥

ध्वजेति । संग्रामे स्वामिजयाज्जितो भक्तलोभाभ्युपगतदासो भक्तदासः तथा गृहदासीपुत्रः मूल्येन क्रीतोऽन्येन दत्तः पित्रादिक्रमागतः दण्डादिधनशुद्ध्यर्थं स्वीकृतदासभावस्त्वेतानि सप्त ध्वजाहृतादीनि दासत्वकारणानि ॥ ४१५ ॥

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ४१६ ॥

भार्येति । भार्यापुत्रदासास्त्रयोऽमी निर्धना एव मन्वादिभिः स्मृता यस्मात् यद्धनमेतेऽर्जयन्ति यस्य ते भार्यादयस्तस्य तद्धनमर्जयन्ति एतच्च भार्यादीनामस्वातन्त्र्यप्रदर्शनार्थं

परं त्वध्ययनादेः षड्विधस्य जीवनस्य सम्भवात् धन साध्यादृष्टार्थकर्मोपदेशाच्च भार्य्यादीनामप्यधिकारे पत्न्या अपि यागाधिकारस्य उक्तत्वात् स्त्रीपुंसयोर्मध्य एकधने चानुमतिद्वारेण स्त्रियामपि कर्तृत्वात् ॥ ४१६ ॥

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् । न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्य्यधनो हि सः ॥४१७॥

विस्रब्धमिति । निर्विचिकित्समेव ब्राह्मणो दासशूद्राद्धन ग्रहणं कुर्य्यात् ब्राह्मणः यतस्तस्य किञ्चिदपि स्वं नास्ति यस्मा द्भर्तृग्राह्यधनोऽसौ । एवञ्चापदि बलादपि दासात् ब्राह्मणो धनं गृह्णन्न राज्ञा दण्डनीय इत्येवमर्थमेतदुच्यते ॥ ४१७ ॥

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् । तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदञ्जगत् ॥ ४१८ ॥

वैश्येति । वैश्यं कृष्यादीनि शूद्रञ्च द्विजातिशुश्रूषादीनि कर्माणि यत्नतो राजा कारयेत् यस्मात्तौ स्वकर्मभ्रष्टावन्या न्यायोपार्ज्जितधनमदादिना जगदाकुलीकुर्य्याताम् ॥ ४१८ ॥

अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च ।
आयव्ययौ च नियतावाकरान्कोषमेव च ॥ ४१९ ॥

अहनीति । प्रत्यहमधिकृतद्वारेण प्रारब्धदृष्टादृष्टार्थकर्म्मणां निष्पत्तिं नृपतिर्निरूपयेत्तथा हस्त्यश्वादीनि कियत्प्रविष्टं किं निःसृतमिति सुवर्णरत्नाद्युत्पत्तिस्थानानि भाण्डागारं चावेक्षेत व्यवहारदर्शनाशक्तोऽपि राजा धर्म्मार्थ परित्यजेदिति दर्शयितुमुक्तस्यापि पुनर्व्वचनम् ॥ ४१८ ॥

एवं सर्व्वानिमान्राजा व्यवहारान्समापयन् ।
व्यपोह्य किल्बिषं सर्व्वम्प्राप्नोति परमां गतिम् ॥ ४२० ॥

एवमिति । एवमुक्तप्रकारेण एतान्सर्व्वानृणादानादीन् व्यवहारान् तत्त्वतो निर्णयेनान्तयन् राजा पापं सर्व्वमपहाय स्वर्गादिप्राप्तिरूपामुत्कृष्टां गतिं लभते ॥ ४२० ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां अष्टमोऽध्यायः ॥ ० ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यामष्टमोऽध्यायः ॥

## ॥ ९ नवमोऽध्यायः ॥

---

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।
संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि शाश्वतान्॥ १ ॥

पुरुषस्येति। पुरुषस्य पत्न्याश्च धर्म्माय हितेऽन्योन्याऽव्यभिचारूलक्षणे वर्त्मनि वर्त्तमानयोः संयुक्तयोर्वियुक्तयोश्च धर्म्मान् पारम्पर्य्यागतत्वेन नित्यान्वक्ष्यामि दम्पत्योः परस्परधर्म्मव्यतिक्रमे सत्यन्यतरज्ञापितेन राज्ञा दण्डेनापि स्वधर्म्मव्यवस्थापनं कर्त्तव्यमिति व्यवहारमध्येऽस्योपदेशः॥ १ ॥

अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥ २ ॥

अस्वतन्त्रा इति। स्वीयैर्भर्त्रादिभिः सदा स्त्रियः स्वाधीनाः कार्य्या अनिषिद्धेष्वपि रूपरसादिविषयेषु प्रसज्जन्त्यः प्रसङ्गं कुर्वाणा आत्मवशाः कार्य्याः॥ २ ॥

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥ ३॥

पितेति। पिता विवाहात्पूर्व्वं स्त्रियं रक्षेत्पश्चाद्भर्त्ता तदभावे पुत्राः तस्मान्न स्त्री कस्याञ्चिदप्यवस्थायां स्वातन्त्र्यभजेत्। भर्त्ता रक्षति यौवनइत्यादिप्रायिकं भर्त्रपुत्राद्यसन्निहितायाः पित्रादिभिरपि रक्षणात्॥ ३॥

कालेऽदाता पिता वाच्योवाच्यश्चानुपयन् पतिः।
मृते भर्त्तरि पुत्रस्तु वाच्योमातुररक्षिता॥ ४॥

काल इति। प्रदानकाले पिता तामददत् गर्ह्योभवति प्रदानंप्रागृतोरिति गौतमवचनात् ऋतोः प्राक् प्रदानकालः पतिश्च ऋतुकाले पत्नीमगच्छन् गर्हणीयोभवति पत्यौ मृते मातरमरक्षन् पुत्रोनिन्द्यःस्यात्॥ ४॥

सूक्ष्मेभ्योपि प्रसङ्गेभ्यः स्त्रियोरक्ष्याविशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥ ५॥

सूक्ष्मेभ्यइति। स्वल्पेभ्योपि दुःसङ्गेभ्योदौःशील्यसम्पादकेभ्योविशेषेण स्त्रियोरक्षणीयाः किंपुनर्महद्भ्यः यस्मादुपेक्षितरक्षाद्वयोः पितृभर्त्तृकुलयोः सन्तापमुत्पादयेयुः॥ ५॥

इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम्।
यतन्ते रक्षितुम्भार्य्याम्भर्त्तारो दुर्ब्बला अपि ॥ ६ ॥

इममिति। सर्व्वेषां ब्राह्मणादिवर्णानामार्य्यारक्षणलक्षणं धर्म्मं वक्ष्यमाणलोकरीत्या सर्व्वधर्म्मेभ्य उत्कृष्टं जानन्तोऽन्धपंग्वादयोऽपि भार्य्यां रक्षितुं यतेरन् ॥ ६ ॥

स्वां प्रसूतिञ्चरित्रञ्च कुलमात्मानमेव च। स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥ ७ ॥

स्वामिति। यस्माद्भार्य्यां यत्नतो रक्षते असंकीर्णविशुद्धापत्योत्पादनेन स्वसन्ततिं तथा शिष्टसमाचारं पितृपितामहाद्यन्वयं आत्मानं विशुद्धसन्तानानिमित्तौर्द्धदेहिकलाभेन स्वधर्म्मञ्च विशुद्धभार्य्यसाधानादावप्यधिकाराद्रक्षति तस्मात्स्त्रियो रक्षितुं यतेतेति पूर्व्वस्य विशेषः ॥ ७ ॥

पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ८ ॥

पतिरिति। पतिः शुक्ररूपेण भार्य्यां संप्रविश्य गर्भतामापाद्य तस्यां भार्य्यायां पुत्ररूपेण जायते। तथा च श्रुतिः। आत्मा वै पुत्रनामासीति। जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुन र्जायते। तथा च बह्वृचब्राह्मणं पतिर्जायां प्रविशति गर्भो भूत्वेह

मातरं। तस्यां पुनर्नवोभूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः। ततश्चासौ रक्षणीयेत्येतदर्थं जायानिर्वचनम्॥ ८॥

यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः॥ ९॥

यादृशमिति। यस्माद्यादृशं पुरुषं शास्त्रेण विहितं प्रति षिद्धं वा स्त्री तादृशं शास्त्रोक्तपुरुषसेवनेनोत्कृष्टं निषिद्धपुरुष सेवनेन च निकृष्टं पुत्रं जनयति तस्मादपत्यविशुद्ध्यर्थं पत्नीं यत्नतो रक्षेत्॥ ९॥

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्॥ १०॥

कथं रक्षणीयेत्यत आह नेति। कश्चिद्बलात्संरोधादिनापि स्त्रियो रक्षितुं शक्तस्तथापि व्यभिचारदर्शनात्। किन्त्वेतैर्वक्ष्य माणैरुपायोपाययोगैस्ता रक्षितुं शक्याः॥ १०॥

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे॥ ११॥

तानुपायानाह अर्थस्येति। धनस्य संग्रहणे विनियोगे च

द्रव्यशरीरशुद्धौ भर्त्रग्निशुश्रूषादिकेऽन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणएनां नियोजयेत् वेक्षणे अवस्यादिलोपः ॥ ११ ॥

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः॥ १२॥

अरक्षिताइति। आप्ताश्च ते आज्ञाकारिणश्च तैः पुरुषै गृहे रुद्धा अप्यरक्षिताभवन्ति यादुःशीलतया नात्मानं रक्षन्ति यास्तु धर्मज्ञतया आत्मानमात्मना रक्षन्ति ताएव सुरक्षिताभवन्ति अतोधर्माधर्मफलस्वर्गनरकप्राप्त्याद्युपदेशेन आसां संयमः कार्यइति मुख्यरक्षणोपायकथनपरमिदम् ॥१२॥

पानं दुर्जनसंसर्गः पत्या च विरहोटनम्।
स्वप्नोन्यगेहवासश्च नारीसंदूषणानि षट्॥ १३॥

पानमिति। मद्यपानं असत्पुरुषसंसर्गः भर्त्रा सह विरहः इतस्ततश्च भ्रमणं अकालस्वापः परगृहनिवासश्चेत्येतानि षट् स्त्रिया व्यभिचाराख्यदोषजनकानि तस्मादेतेभ्य एता रक्षणीयाः ॥१३॥

नैता रूपम्परीक्षन्ते नासां वयसि संस्थितिः।
सुरूपम्वा विरूपम्वा पुमानित्येव भुञ्जते॥१४॥

नैता इति। नैताः कमनीयं रूपं विचारयन्ति न चासां यौवनादिके वयसि आदरो भवति किन्तु सुरूपं कुरूपं वा पुमानित्येतावतैव तमुपभुञ्जते॥ १४॥

पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः।
रक्षिता यत्नतोपीह भर्त्तृष्वेता विकुर्व्वते॥ १५॥

पौंश्चल्यादिति। पुंसो दर्शनेन सम्भोगाद्यभिलाषशीलत्वात् चित्तस्थैर्य्याभावात्स्वभावतः स्नेहरहितत्वाच्च एता यत्नेनापि लोके रक्षिताः सत्यो व्यभिचाराश्रयणेन भर्त्तृषु विक्रियाङ्कुर्व्वन्ति॥ १५॥

एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम्।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणम्प्रति॥ १६॥

एवमिति। एवं लोकद्वयोक्तमासां स्वभावं हिरण्यगर्भसृष्टिकालजनितं ज्ञात्वा रक्षणार्थं प्रकृष्टं यत्नं पुरुषः कुर्य्यात् ॥ १६॥

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम्।
द्रोहभावं कुचर्य्यां च स्त्रीभ्यो मनुरकल्पयत्॥१७॥

शय्येति। शयनोपवेशनालङ्करणशीलत्वकामक्रोधानार्ज्जव परहिंसाकुत्सिताचारत्वानि सर्गादौ मनुः स्त्रीभ्यः कल्पितवान् तस्माद्यत्नतो रक्षणीयाः॥१७॥

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥१८॥

नास्तीति। जातकर्मादिक्रिया स्त्रीणां मन्त्रैर्नास्ति इत्येषा शास्त्रमर्य्यादा व्यवस्थिता ततश्च मन्त्रवत्संस्कारगणाभावाच्च निष्पापान्तःकरणादिन्द्रियमप्रमाणं धर्मप्रमाणश्रुतिस्मृतिरहित त्वाच्च धर्मज्ञा अमन्त्राः पापापनोदनमन्त्रजपरहितत्वात् जातेपि पापे तन्निर्णेजनाक्षमाः अनृतवदशुभाः स्थिता इति शास्त्रमर्य्यादा तस्माद्यत्नतो रक्षणीया इत्यत्र तात्पर्य्यम्॥१८॥

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः॥१९॥

व्यभिचारशीलत्वं स्त्रीणां स्वभाव इत्युक्तं तत्र श्रुतिं प्रमाण तयोपन्यस्यति तथा चेति। बह्व्यः श्रुतयो बहूनि श्रुतिवा क्यानि यच्चैतद्विप्रो माताप्रलुभाः सोऽग्राह्यापावेत्येवमादीनि निग

मेषु चावचनं स्त्रीणां व्यभिचारशीलत्वं तत्परिज्ञानार्थं पठि
तान्यपि तासां श्रुतीनां मध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्त
भूतास्ताः श्रुतीः शृणुत एकस्याः श्रुतेर्बहुत्वाभावात् श्रुतिं शृणुते
त्यर्थः सुपांसुपोभवन्तीति द्वितीयैकवचने बहुवचनम् ॥ १९ ॥

यन्मे माता प्रलुलुभे विचरन्त्यऽपतिव्रता। तन्मे
रेतःपिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥

यदिति। कश्चित्पुत्रो मातुर्मानसव्यभिचारमवगम्य ब्रूते मनो
वाक्कायकर्मभिः पतिव्यतिरिक्तपुरुषं या न कामयते सा पति
व्रता ततोऽन्या अपतिव्रता मम माता अपतिव्रता सती परगृ
हान् गच्छन्ती यत्प्रलुलुभे परपुरुषं प्रति सञ्जातलोभा ऽभूत्त
त्परपुरुषसङ्कल्पदुष्टं मातृरजोरूपं रेतो मम पिता शोधयत्वि
त्यस्य मन्त्रस्य स्त्रियाव्यभिचारशीलत्वे तदिति करणान्तं
मन्त्रपाठरूपं ज्ञापकं यश्च मन्त्रस्यातुर्मानसादिषु विनियुक्तः
॥ २० ॥

ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा।
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥

ध्यायतीति मानसव्यभिचारप्रायश्चित्तरूपतामस्य मन्त्रस्य
ज्ञापयतीति। भर्तुरप्रियं यत्किञ्चित्पुरुषान्तरगमनं स्त्री मन
सापि चिन्तयति तस्य मानसस्य व्यभिचारस्य एष प्रशस्तो मन्त्रः

शय्यासनमलङ्कारं कामं क्रोधमनार्ज्जवम्।
द्रोहभावं कुचर्य्यां च स्त्रीभ्यो मनुरकल्पयत्॥१७॥

शय्येति। शयनोपवेशनालङ्करणशीलत्वकामक्रोधानार्ज्जवं परहिंसाकुत्सिताचारत्वानि सर्गादौ मनुः स्त्रीभ्यः कल्पितवान् तस्माद्यत्नतो रक्षणीयाः॥१७॥

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥१८॥

नास्तीति। जातकर्मादिक्रिया स्त्रीणां मन्त्रैर्नास्ति इत्येषा शास्त्रमर्य्यादा व्यवस्थिता ततश्च मन्त्रवत्संस्कारगणाभावाच्च निष्पापान्तःकरणादिन्द्रियप्रमाणं धर्मप्रमाणश्रुतिस्मृतिरहित त्वाच्च धर्मज्ञा अमन्त्राः पापापनोदनमन्त्रजपरहितत्वात् जातेपि पापे तन्निर्णेजनाक्षमाः अनृतवदशुभाः स्थितिरिति शास्त्रमर्य्यादा तस्माद्यत्नतो रक्षणीया इत्यत्र तात्पर्य्यम्॥१८॥

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः॥१९॥

व्यभिचारशीलत्वं स्त्रीणां स्वभाव इत्युक्तं तत्र श्रुतिं प्रमाण तयोपन्यस्यति तथा चेति। बह्व्यः श्रुतयो बहूनि श्रुतिवा क्यानि यच्चैतद्विप्रो माता स्वपा: सोऽस्माकं पावेत्येवमादीनि निग

मेषु व्यावश्यकं स्त्रीणां व्यभिचारशीलत्वं तत्परिज्ञानार्थं पठि तान्यपि तासां श्रुतीनां मध्ये या निह्नुतिरूपा व्यभिचारप्रायश्चित्त भूतास्याः श्रुतीः शृणुत एकस्याः श्रुतेर्बहुत्वाभावात् श्रुतिं शृणुते त्यर्थः सुपांसुपोभवन्तीति द्वितीयैकवचने बहुवचनम्॥ १९ ॥

यन्मे माता प्रलुलुभे विचरन्त्यऽपतिव्रता। तन्मे रेतःपिता वृङ्क्तामित्यस्यैतन्निदर्शनम्॥ २० ॥

यदिति। कश्चित्पुत्रो मातुर्मानसव्यभिचारमवगम्य ब्रूते मनो वाक्कायकर्मभिः पतिव्यतिरिक्तपुरुषं या न कामयते सा पति व्रता ततोऽन्या अपतिव्रता मम माता अपतिव्रता सती परगृ हान् गच्छन्ती यत्प्रलुलुभे परपुरुषंप्रति यज्जातलोभा ऽभूत्त त्परपुरुषसङ्कल्पदुष्टं मातृरजोरूपं रेतोमम पिता शोधयति अस्य मन्त्रस्य स्त्रियाव्यभिचारशीलत्वेतदितिकरणान्तं मन्त्रपादरूपं ज्ञापकं यश्च मन्त्रस्यान्तर्मात्रादिषु विनियुक्तः ॥ २० ॥

ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा। तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥

ध्यायति मानसव्यभिचारप्रायश्चित्तरूपतामस्य मन्त्रस्य आचष्टेति। भर्तुरप्रियं यत्किंचित्पुरुषान्तरगमनं स्त्री मन सापि चिन्तयति तस्य मानसस्य व्यभिचारस्य एष प्रक्षालकः

मध्यकृमो मदोमनमारिमिरच्यते मातेति अवसात्पुनर्लौकार्य प्रायश्चित्तरूपोमन्त्रोन मातुः ॥ २१ ॥

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥

यादृग्गुणेनेति। यथारूपेण भर्त्रा साधुनाऽसाधुना वा स्त्री विवाहविधिना संयुज्यते सा भर्तृसदृशगुणा भवति यथा समुद्रेण संयुज्यमाना नदी स्वादूदकापि क्षारजला जायते भर्त्तुरा त्मसंयमनाच्च स्त्रीरक्षणोपायान्तरोपदेशार्थमिदं ॥ २२ ॥

अक्षमाला वशिष्ठेन संयुक्ताऽधमयोनिजा।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥

अस्योत्कर्षे दृष्टान्तमाह अक्षेति। अक्षमालाख्या निकृ ष्टयोनिजा वशिष्ठेन परिणीता तथा चटका मन्दपालाख्येन ऋषिणा संयुता पूज्यतां गता ॥ २३ ॥

एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः। उत्कर्षं योषितः प्राप्ताः स्वैःस्वैर्भर्तृगुणैः शुभैः ॥ २४ ॥

एतादृति। यद्यपि द्वे प्रकृते तथापि प्रदर्शनार्थत्वमनयो क्त्वा एतादृति बहुवचनं कृतं एताश्चान्याश्च सत्यवत्यादयो

निकृष्टप्रसूतयः स्वभर्तृगुणैः प्रकृष्टैरस्मिन् लोके उत्कृष्टता प्राप्ताः ॥ २४ ॥

एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ।
प्रेत्येह च सुखोदर्कान् प्रजाधर्मान्निबोधत ॥ २५ ॥

एषेति । एष लोकाचारो जायापतिविषयः सदा शुभ उक्तः इदानीमिह लोके परलोके च उत्तरकालसुखहेतून् किं चेमिनोऽपत्यमुत बीजिन इत्यादीन्प्रजाधर्मान् शृणुत ॥ २५ ॥

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ २६ ॥

प्रजेति । यद्यप्यासां रक्षार्थं दोषा उक्तास्तथापि प्रक्ष प्रतीकारत्वादिह दोषाभावः एतास्त्रियो महोपकारगर्भोत्पादनार्थं बहुकल्याणभाजनभूताः वस्त्रालङ्कारादिदानेन पूजार्हाः स्वगृहशोभाकारिण्यः । स्त्रियः श्रियश्च गेहेषु तुल्यरूपा नानयोर्विशेषो विद्यते यथा निःश्रीकं गृहं न राजते एवं निःस्त्रीकमिति ॥ २६ ॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ २७ ॥

अपिच उत्पादनमिति । अपत्यस्य जननं जातस्य परिपालनं

प्रतिदिनमातिथिमित्रभोजनादेर्लोकव्यवहारस्य प्रत्यक्षं भार्य्यैव निदानम् ॥ २७ ॥

अपत्यं धर्म्मकार्य्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ २८ ॥

अपत्यमिति। अपत्योत्पादनमुक्तमप्येतदर्थादितस्य स्थापनार्थं पुनरभिधानं धर्म्मकार्य्याणि अग्निहोत्रादीनि परिचर्य्या उत्कृष्टा रतिः पितॄणामात्मनश्चापत्यजननादिना स्वर्ग इत्येतत्सर्व्वं भार्य्याधीनम् ॥ २८ ॥

पतिं या नाभिचरति मनोवाग्देहसंयता। सा भर्त्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥२९ ॥

पतिमिति। या स्त्री मनोवाग्देहसंयता सती त्रिभिर्व्यापारैर्मनसाप्यमनोवाग्देहैरेव न व्यभिचरति सा भर्त्रा सहार्ज्जितान्स्वर्गादिलोकानाप्नोति इह लोके विशिष्टैः साध्वी त्युच्यते ॥ २९ ॥

व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।
शृगालयोनिञ्चाप्नोति पापरोगैश्च पीड्यते ॥ ३० ॥

व्यभिचारादिति। पुरुषान्तरसम्पर्कात् स्त्री लोके निन्द्यतां जन्मान्तरे च शृगालजातिमाप्नोति क्षयरोगादिभिश्च पीड्यते

प्रसङ्गमात्रार्थे स्त्रीधर्म्मप्रक्रमेप्येतत् लोकद्वये सदपत्यसम्पत्त्यर्थं तेन महाप्रयोजनतया पुनः पठितम् ॥ ३० ॥

पुत्रं प्रत्युदितं सद्भिः पूर्व्वजैश्च महर्षिभिः।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥ ३१ ॥

पुत्रमिति। पुत्रमधिकृत्य शिष्टैर्मन्वादिभिः पूर्व्वोत्पन्नैश्च महर्षिभिः अभिहितमिमं वक्ष्यमाणं सर्व्वजनहितं विचारं शृणुत ॥ ३१ ॥

भर्त्तुः पुत्रं विजानन्ति श्रुतिद्वैधन्तु भर्त्तरि।
आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः ॥ ३२ ॥

भर्त्तुरिति। भर्त्तुः पुत्रो भवतीति मुनयो मन्यन्ते भर्त्तरि द्विःप्रकारा श्रुतिर्व्वर्त्तते केचिदुत्पादकमवोढारमपि भर्त्तारं तेन पुत्रेण पुत्रिणमाहुः अन्ये तु वोढारं भर्त्तारमनुत्पादकमपि अन्यजनितेन पुत्रेण पुत्रिणमाहुः ॥ ३२ ॥

क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्।
क्षेत्रबीजसमायोगात्सम्भवः सर्व्वदेहिनां ॥ ३३ ॥

क्षेत्रेति। ब्रीह्याद्युत्पत्तिस्थानं क्षेत्रं तत्तुल्या स्त्री मुनिभिः स्मृता पुरुषश्च ब्रीह्यादिबीजतुल्यः स्मृतः यद्यपि रेतोबीजं तथापि तदधिकरणत्वात् पुरुषोबीजमिति व्यपदिश्यते

क्षेत्रवीजसमायोगात्सर्व्वप्राणिनामुत्पत्तिः एवञ्चोभयोः कारणत्वाविशिष्टत्वात् युक्ता विप्रतिपत्तिः ॥ ३३ ॥

विशिष्टं कुत्रचिद्वीजं स्त्रीयोनिस्त्वेव कुत्रचित्।
उभयन्तु समं यत्र सा प्रसूतिः प्रशस्यते॥ ३४ ॥

किं यत्सम्बन्धिक्षेत्रं तस्यापत्यं उत यदीयं वीजन्तस्येति विशिष्टमिति। क्वचिद्वीजप्रधानं जाता ये त्वनियुक्तायामिति न्यायेनोत्पन्नोवीजिनोबुधइव सोमस्य तथा व्यासऋष्यशृङ्गा दयोवीजिनामेव सुताः क्वचित् क्षेत्रस्य प्रधान्यं यथा यस्तल्पजः प्रमीतस्य इति वक्ष्यति अतएव विचित्रवीर्य्यक्षेत्रे क्षत्रियायां ब्राह्मणोत्पादिता अपि धृतराष्ट्रादयः क्षेत्रियाः क्षत्रियइव पुत्रावभूवुः यत्र पुनर्वीजयोन्योः साम्यन्तत्र क्रोडैव जनयिता तदपत्यञ्च तस्य भवति ॥ ३४ ॥

वीजस्य चैव योन्याश्च वीजमुत्कृष्टमुच्यते।
सर्व्वभूतप्रसूतिर्हि वीजलक्षणलक्षिता॥ ३५ ॥

तत्र वीजप्रधान्यापेक्षन्तावदाह वीजस्येति। वीजक्षेत्रयोर्वीजं प्रधानमभिधीयते यस्मात्सर्व्वेषां भूतारम्भाणां उत्पत्तिर्वीजगतवर्णरूपादिचिह्नैः उपलक्षिता दृश्यते ॥ ३५ ॥

यादृशन्तूप्यते बीजं क्षेत्रे कालोपपादिते ।
तादृग्रोहति तत्तस्मिन्बीजं स्वैर्व्यञ्जितं गुणैः ॥ ३६ ॥

यादृशमिति । यज्जातीयं बीजं व्रीह्यादि ग्रीष्मादिकाले कर्षणादिना संस्कृते क्षेत्रे उप्यते तज्जातीयमेव तद्बीजमात्मीयैर्वर्णादिभिरुपव्यञ्जितन्तस्मिन् क्षेत्रे जायते ॥ ३६ ॥

इयम्भूमिर्हि भूतानां शाश्वती योनिरुच्यते । न च योनिगुणान् कांश्चिद्बीजम्पुष्यति पुष्टिषु ॥ ३७ ॥

एवमन्यप्रकारेण बीजप्राधान्यं प्रदर्श्य व्यतिरेकमुखेन दर्शयितुमाह इयमिति । हिरवधारणे इयमेव भूमिर्भूतार भागान्तरगुल्मलतादीनां नित्या योनिः कारणं क्षेत्रात्मकं सर्व्व योनिरुच्यते न च भूम्याख्ययोनिधर्मान् कांश्चिदपि मधुरत्वरूप मादीन् बीजं स्वविकारेषु अङ्कुरकाण्डपत्रादिषु भजते अत वर्णनात् पुष्यतेः सकर्मता तस्माद्योनिगुणानुवर्त्तनाभावाद्बीजस्यैव प्राधान्यं ॥ ३७ ॥

भूमावप्येककेदारे कालोप्तानि कृषीवलैः ।
नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥ ३८ ॥

अपि च भूमाविति । भूमावेकस्मिन्नपि केदारे कर्षकैर्वप्न

कालोप्तानि व्रीहिमुद्गादीनि नानारूपाण्येव बीजस्वभावान्ना यन्ते नतु भूमेरेकत्वादेकरूपाणि भवन्ति ॥ ३८ ॥

व्रीहयः शालयोमुद्गास्तिलामाषास्तथा यवाः।
यथाबीजम्प्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥

तथाहि व्रीहीति। व्रीहयः षष्टिकाः शालयः कलमाद्याः तथा मुद्गादयोबीजस्वभावानतिक्रमेण नानारूपाणि जायन्ते ॥ ३९ ॥

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते। उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ४० ॥

एवञ्चसति अन्यदिति। व्रीहिरुप्तोमुद्गादिर्जायते इत्येतन्न सम्भवति यस्माद्यदेव बीजं उप्यते तत्तदेव जायते एवं बीजगु णानुवर्त्तनात् क्षेत्रधर्माननुवृत्तेश्च व्रीह्यादौ मनुष्येष्वपि बीज प्राधान्यं ॥ ४० ॥

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना। आयु ष्कामेन वप्तव्यं न जातु परयोषिति ॥ ४१ ॥

यस्मात् क्षेत्रप्राधान्यमाह तदिति। तद्बीजं सहजप्रज्ञावता पित्रादिभिरनुशिष्टेन ज्ञायतेऽनेनेति ज्ञानं वेदः एवं विज्ञान

अपि तदुत्पादिशास्त्राणि तदेहिकमायुरिच्छता न कदाचित् परजायायां वपनीयम्॥ ४१ ॥

अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः।
यथा बीजं न वप्तव्यं पुंसा परपरिग्रहे॥ ४२ ॥

अत्रेति। अतीतकल्पजा अस्मिन्नर्थे वायुप्रोक्ता गाथाः छन्दोविशेषयुक्तानि वाक्यानि कथयन्ति यथा परपुरुषेण परपत्न्यां बीजं न वप्तव्यमिति॥ ४२॥

नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः। तथा नश्यति वै क्षिप्रं बीजम्परपरिग्रहे॥ ४३ ॥

नश्यतीति। यथान्येन विद्धं मृगं कृष्णसारं तस्मिन्नेव छिद्रे पश्चादन्यस्य विध्यतः आविद्धः क्षिप्तः शरो निष्फलो भवति पूर्व्व वधेनैव हतत्वात् तस्यैव तन्मृगत्वाभावात् एवं परपत्न्यां उप्तं बीजं बीजिन एव निष्फलं भवति गर्भग्रहणानन्तरं क्षेत्रिणः अपत्य फलत्वाभावात्॥ ४३ ॥

पृथोरपीमां पृथिवीं भार्य्यां पूर्व्वविदो विदुः।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम्॥ ४४॥

पृथोरिति। इमामपि पृथ्वीं पृथुना पूर्व्वं परिगृहीतत्वात् अनेकराजगमनेऽपि पृथोर्भार्य्यामितिहासज्ञा जानन्ति तथा

स्वाणुं छिन्दन्ति स्थाणुछेदः कर्षकस्य येन स्थाणुमुत्पाद्य क्षेत्रं कृतं तस्यैव तत्क्षेत्रं वदन्ति तथा शरादियुक्तं येन पूर्व्वं मृगे क्षिप्तं तस्यैव तं मृगमाहुः एवञ्च पूर्व्वपरिगृहीतुः स्वामित्वाद्वोढुरेवापत्यम्भवति न बलयितुः ॥ ४४ ॥

एतावानेव पुरुषोयज्जायात्मा प्रजेति च ।
विप्राः प्राहुस्तथा चैतद्योभर्त्ता सा स्मृताङ्गना ॥४५॥

एतावानिति । नैकः पुरुषोभवति अपितु भार्य्यास्वदेहमपत्यानीत्येतत्परिमाणएव पुरुषः तथाच वाजसनेयब्राह्मणं । अर्द्धोह वा एष आत्मनो यज्जाया तस्मात् यावज्जायां न विन्दते नैतावत्प्रजायते असर्व्वोहि तावद्भवति अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि सर्व्वोभवति । तथाचैतद्वेदविदो विप्रावदन्ति योभर्त्ता सैव भार्य्या स्मृतेति एवञ्च तस्यामुत्पादितं भर्त्तुरेवापत्यम्भवतीति ॥ ४५ ॥

न निष्क्रयविसर्गाभ्याम्भर्त्तुर्भार्य्या विमुच्यते ।
एवं धर्म्मं विजानीमः प्राक्प्रजापतिनिर्मितं ॥ ४६ ॥

कुतश्च दम्पत्योरैकमतः नेति । निष्क्रयो विक्रयः विसर्गस्त्यागः न ताभ्यां स्त्री भर्त्तुर्भार्य्यात्वादपैत्येवं पूर्व्वं प्रजापतिना

कृतं नित्यं धर्म्यं मन्यामहे एवञ्च क्रयादिनापि परस्त्रियमाश्र यादुत्पन्नं तदुत्पादितापत्यं क्षेत्रिण एव भवति न बीजिनः ॥४६॥

सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ४७ ॥

सकृदित्यादि । पित्रादिधनविभागो भ्रातृणां धर्म्मतः कृतः सकृदेव भवति न पुनरन्यथा क्रियत इति तथा कन्या पित्रादिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते एवञ्च धर्म्मेण पूर्व्व मन्यस्मै दत्तायां पश्चात्पित्रादिभिः प्राप्तायामपि जनितमपत्यं न बीजिनो भवतीत्येतदर्थमत्रोपन्यासः तथा कन्यातोऽन्यत्रापि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीयत इति त्रीण्येतानि साधूनां सकृद्भवन्ति। यद्यपि कन्यादानस्य सकृत्करणं प्रकृतोपयुक्तं तथापि अंशप्रदानयोरपि सकृत्ताभिधानं सकृदाह ददानीत्यनेनैव कन्यादानस्यापि सकृत्करणसिद्धौ प्रकृतोपयोगित्वादेव पृथगभिधानम् ॥ ४७ ॥

यथा गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च। नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥ ४८ ॥

यथेति । यथा गवादिषु परकीयेष्वात्मवृषभादिकं नियुज्य वत्सोत्पादकस्य न तद्भागो तथा परकीयभार्य्यास्वपि नोत्पादकः प्रजाभागी भवति ॥ ४८ ॥

येऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः। ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित्॥ ४९॥

य इति। क्षेत्रस्वामिनो ये न भवन्ति अथच बीजस्वामिनः सन्तः परक्षेत्रे बीजं वपन्ति ते तत्र क्षेत्रजातस्य धान्यादेः फलं क्वचिदपि देशे न लभन्त इति प्रकृतस्य दृष्टान्तः॥ ४९॥

यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्। गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्॥ ५०॥

यदन्येति। यदन्यदीयगवीषु वृषभो वत्सशतमपि जनयेत्सर्वे ते वत्साः स्त्रीगवीस्वामिनो भवन्त्येव न वृषभस्वामिनः वृषभस्य यत् शुक्रसेचनं तद्वृषभस्वामिनो निष्फलमेव भवति यथा गोश्वोष्ट्रेत्यनेनोत्पादकस्य प्रजाभागित्वं न भवतीत्येतत्परत्वेन दृष्टान्तउक्तः अयन्तु क्षेत्रस्वामिनः प्रजाभागित्वभवतीत्येतत्परत्वेन अतो न पुनरुक्तिः॥ ५०॥

तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः। कुर्व्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥ ५१॥

तथैवेति। यथा गवादिगर्भेषु तथैव स्वापत्यस्वाम्यरहिताः सन्तः परकीयभार्य्यायां ये बीजं वपन्ति ते क्षेत्रस्वामिनामेवापत्यलक्षणमर्थं कुर्व्वन्ति बीजसेक्ता त्वपत्याख्यं फलं न लभते॥ ५१॥

फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥ ५२ ॥

फलमिति । यदस्यामुत्पत्स्यतेऽपत्यं तदावयोरुभयोरेवेति यत्र नियमो न कृतस्तत्र निःसन्दिग्धमेव क्षेत्रिणोऽपत्यं यतः रीत्या बीजाद्योनिर्बलवत् ॥ ५२ ॥

क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ ५३ ॥

क्रियेति । यदस्यापत्यं भविष्यति तदावयोरेवेति नियमे तत्क्षेत्रं स्वामिना बीजवपनार्थं यद्बीजिनो दीयते तस्यापत्यस्य लोके बीजिक्षेत्रिणौ द्वावपि भागिनौ दृष्टौ ॥ ५३ ॥

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥ ५४ ॥

ओघेति । यद्बीजं जलवेगवाताभ्यामन्यदीयक्षेत्रादानीतं यस्य क्षेत्रे जायते तत्क्षेत्रस्वामिन एव तद्बीजं भवति न तु येन बीजमुप्तं स तत्फलं लभते एवञ्च स्वभार्याभ्रमेण परभार्यायां जनने मम पुत्रो भवितेत्यज्ञानेऽपि क्षेत्रिण एवापत्यमित्यनेन दर्शितम् ॥ ५४ ॥

एष धर्म्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च ।
विहङ्ग महिषीणाञ्च विज्ञेयः प्रसवम्प्रति ॥ ५५ ॥

एष इति । एषैव व्यवस्था गवाश्वादीनां सन्ततिम्प्रति ज्ञातव्या यस्यैव स्वाम्येव गवाश्वादिसन्ततिस्वामी नतु वृषभादिस्वामी नियमे तु क्षते यत्येतयोरेव सन्ततिस्वाम्यम् ॥ ५५ ॥

एतद्वः सारफल्गुत्वं वीजयोन्योः प्रकीर्त्तितं । अतः परम्प्रवक्ष्यामि योषितान्धर्म्ममापदि ॥ ५६ ॥

एतदिति । एतद्वीजयोन्योः प्राधान्याप्राधन्यं युष्माकमुक्तं अतोऽनन्तरं स्त्रीणां सन्तानाभावे यत्कर्त्तव्यं तद्वक्ष्यामि ॥५६॥

भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य सा ।
यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा स्मृता ॥५७॥

भ्रातुरिति । ज्येष्ठस्य भ्रातुर्या भार्य्या सा कनिष्ठस्य भ्रातुर्गुरुपत्नी भवति कनिष्ठस्य च भ्रातुर्या भार्य्या सा ज्येष्ठभ्रातुः स्नुषा मुनिभिः स्मृता ॥ ५७ ॥

ज्येष्ठोयवीयसो भार्य्यां यवीयान्वाग्रजस्त्रियं।
पतितौभवतोगत्वा नियुक्तावप्यनापदि ॥ ५८ ॥

ज्येष्ठ इति। ज्येष्ठकनिष्ठभ्रातरावितरेतरभार्य्यां गत्वा अप
त्याभावं विना नियुक्तावपि पतितौ स्याताम् ॥ ५८ ॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ ५९ ॥

देवरादिति। सन्तानाभावे स्त्रिया पत्यादिगुरुनियुक्तया
देवराद्वान्यस्माद्वा सपिण्डात् वक्ष्यमाणघृताक्तादिनियम
वत्पुरुषसमवेतेष्टा प्रजा उत्पादयितव्या ईप्सितेत्यभिधान
मर्थात्कार्य्यांश्चमपुत्रोत्पत्तौ पुनर्गमनार्थम् ॥ ५९ ॥

विधवायांनियुक्तस्तु घृताक्तोवाग्यतोनिशि। एक
मुत्पादयेत्पुत्रन्न द्वितीयं कथञ्चन ॥ ६० ॥

विधवायामिति। विधवायामित्यपत्योत्पादनयोग्यपत्यभाव
परमिदं जीवत्यपि पत्यौ तद्योग्यपत्यादिगुरुनियुक्तो घृताक्तसर्व्व
गात्रो मौनी रात्रावेकं पुत्रं जनयेत् न कदाचिद्द्वितीयम् ॥ ६० ॥

द्वितीयमेके प्रजनम्मन्यन्ते स्त्रीषु तद्विदः। अनिर्वृत्तन्नियोगार्थम्पश्यन्तो धर्म्मतस्तयोः ॥ ६१ ।

द्वितीयेति। अन्ये पुनराचार्य्यानियोगात्पुत्रोत्पादनविधिज्ञा अपुत्र एकपुत्र इति शिष्टप्रवादादनिष्पन्नं नियोगप्रयोजनं मन्यमानाः स्त्रीषु पुत्रोत्पादनं द्वितीयं धर्म्मतो मन्यन्ते॥ ६१ ॥

विधवायान्नियोगार्थे निर्वृत्ते तु यथाविधि। गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्॥ ६२ ॥

विधवायामिति। विधवादिकाया नियोगप्रयोजने गर्भधारणे यथाशास्त्रं सम्पन्ने सति ज्येष्ठो भ्राता कनिष्ठभ्रातृभार्य्या च परस्परं गुरुवत् स्नुषावच व्यवहरेताम्॥ ६२ ॥

नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥६३॥

नियुक्ताविति। ज्येष्ठकनिष्ठभ्रातरौ परस्परभार्य्यायामियुक्तौ घृताक्तादिविधानमुक्त्वा स्वेच्छातो वर्त्तेयातान्ता स्नुषागमनगुरुदारगौ पतितौ भवेतां॥ ६३ ॥

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनं॥६४॥

एवं नियोगमभिधाय दूषयितुमाह नान्यस्मिन्निति। ब्राह्मणादिभिर्विधवा स्त्री भर्त्तुरन्यस्मिन् देवरादौ न नियोक्तव्या यस्मात् स्त्रियमन्यस्मिन्नियुञ्जानाः ते स्त्रीणामेकपतित्व धर्म्ममनादिसिद्धं नाशयेयुः ॥ ६४ ॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनम्पुनः ॥ ६५ ॥

नोद्वाहिकेष्विति। अर्य्यमणं नु देवमित्येवमादिषु विवाह प्रयोजनकेषु मन्त्रेषु क्वचिदपि शाखायाम नियोगः कथ्यते नच विवाहविधायकशास्त्रेऽन्येन पुरुषेण सह पुनर्व्विवाह उक्तः॥६५॥

अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेणे राज्यम्प्रशासति ॥ ६६ ॥

अयमिति। यस्मादयं पशुधर्म्मो मनुष्याणामपि व्यवहारो विद्वद्भिर्न्निन्दितः योयमधार्म्मिके वेणाख्ये राज्ञि राज्यं कुर्व्वति

तेन कर्त्तव्यतया प्रोक्तः अतोवेणादारभ्य प्रवृत्तोयमादिमा

निति निन्द्यते ॥ ६६ ॥

स महीमखिलाम्भुञ्जन्राजर्षिप्रवरः पुरा। वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः ॥ ६७॥

स महीमिति। स वेणो महीं समग्रां पूर्व्वम्पालयन् अतएव राजर्षिश्रेष्ठो न तु धार्मिकत्वात्कामोपहतबुद्धिर्भ्रातृभार्य्यादि गमनरूपं वर्णसङ्करं प्रावर्त्तयत् ॥ ६७॥

ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥ ६८ ॥

ततइति। वेणकालात्प्रभृति यो मृतभर्तृकादिस्त्रियं मोहा थीं अज्ञानादपत्यनिमित्तं देवरादौ नियोजयति तं साधवो नियतं गर्हयन्ते यश्च स्रोक्तनियोगनिषेधः कलियुगविषयः तदाह वृहस्पतिः। उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युग ह्रासादशक्योयं कर्त्तुमन्यैर्व्विधानतः।तपोज्ञानसमायुक्ताः कृत त्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्म्मिता। अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः। अतो यद्गोविन्दराजेन युगविशेष व्यवस्थामज्ञात्वा सर्व्वदैव सन्तानाभावे नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितं तन्मुनिव्याख्याविरोधादश्रद्धेया

नरे। प्रायशो मनुवाक्येषु मुनिव्याख्यामहं स्थितम्। नापरा योक्तिविदुषां क्रमं धर्मविदः सुधीः ॥ ६८ ॥

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः ॥ ६९ ॥

नियोगप्रकरणात्कन्यागतं विशेषमाह यस्या इति। यस्याः कन्याया वाग्दाने कृते सति भर्ता म्रियते तामनेन वक्ष्यमाणेन भर्तुः सोदरभ्राता परिणयेत् ॥ ६९ ॥

यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥ ७० ॥

यथेति। स देवरो विवाहविधिना एनां स्वीकृत्य शुक्लवस्त्रां कायवाङ्मनःशौचशालिनीमागर्भग्रहणात् रहसि ऋतावृता वेकैकवारङ्गच्छेत्। एवं कन्यायानियोगप्रकारणात् विवाह विधानाच नमम्भोपदेशायसे वाग्दत्ता तस्यैव तदपत्यं भवति ॥ ७० ॥

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः। दत्त्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषानृतम् ॥ ७१ ॥

न दत्त्वेति। कस्मैचिद्वाचा कन्यां दत्त्वा तस्मिन्मृते दानगुण दोषज्ञानमन्यस्मै न दद्यात्। यस्मादेकस्मै दत्त्वाऽन्यस्मै दद

तेन कर्त्तव्यतया प्रोक्तः अतोवेणादारभ्य प्रवृत्तोयमाहिमा मिति निन्द्यते ॥ ६६ ॥

स महीमखिलाम्भुञ्जन्राजर्षिप्रवरः पुरा। वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः ॥ ६७ ॥

स महीमिति। स वेणो महीं समग्रां पूर्व्वम्पालयन् अतएव राजर्षिश्रेष्ठो न तु धार्म्मिकत्वात्कामोपहतबुद्धिर्भ्रातृभार्य्यादि गमनरूपं वर्णसङ्करं प्रावर्त्तयत् ॥ ६७ ॥

ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥ ६८ ॥

ततइति। वेणकालात्प्रभृति यो मृतभर्तृकादिस्त्रियं मोहा यो मोहादपत्यनिमित्तं देवरादौ नियोजयति तं साधवो नियतं गर्हयन्ते अयञ्च प्रोक्तनियोगनिषेधः कलियुगविषयः तदाह बृहस्पतिः। उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युग ह्रासादशक्योयं कर्त्तुमन्यैर्विधानतः। तपोज्ञानसमायुक्ताः कृत त्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता। अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः। अतो यद्गोविन्दराजेन युगविशेष व्यवस्थामज्ञात्वा सर्व्वदैव सन्तानाभावे नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितं तन्मुनिव्याख्याविरोधादश्रद्धेया

न्दे। प्रायशो मनुवाक्येषु मुनिव्याख्यामहं लिखन्। नापरा बोधिविदुषां कुर्वे सर्वविदः सुधीः ॥ ६८ ॥

यस्याम्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजोविन्देत देवरः ॥ ६९ ॥

नियोगप्रकरणात्कन्यागतं विशेषमाह यस्यादिति। यस्याः कन्याया वाग्दाने कृते पति भर्त्ता म्रियते तामनेन वक्ष्यमाणेनानुष्ठानेन भर्त्तुः सोदरभ्राता परिणयेत् ॥ ६९ ॥

यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥ ७० ॥

यथेति। स देवरो विवाहविधिना एनां स्वीकृत्य शुक्लवस्त्रां कायवाङ्मनःशौचयुक्तां नियोगागमर्भग्रहणात् रहसि ऋतावृतावेकैकवारं गच्छेत्। एवं कन्यानियोगप्रकारमात् विवाहव्यवहार ममत्वोपदेशाय सैव वाग्दत्ता तस्यैव तद्पत्नी भवति ॥ ७० ॥

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः। दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतं ॥ ७१ ॥

न दत्त्वेति। कस्मैचिद्वाचा कन्यां दत्त्वा तस्मिन्मृते दाननुषदोषज्ञानमन्यस्मै न दद्यात्। यस्मादेकस्मै दत्त्वाऽन्यस्मै दद

त्युदपानृतं सहस्रं पुरुषानृतश्चेत्युक्तदोषमाप्नोति सप्तपदी करणस्याजातत्वात् भार्य्यात्वानिष्पत्तेः पुनर्दानाभ्यनुज्ञार्थमिदं वचनम् ॥ ७१ ॥

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हितां।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥७२॥

विधिवदिति। अद्भिरेव द्विजाग्र्याणामित्येवमादिविधिना प्रतिगृह्यापि कन्यां वैधव्यादिलक्षणोपेतां रोगिणीं क्षतयोनित्वाद्यभिशापवतीमधिकाङ्गादिगोपनच्छद्मोपपादितां सप्तपदीकरणात्प्राक् ज्ञातां त्यजेत्ततश्च तत्त्यागे दोषाभावश्चेतदर्थं नतु त्यागार्थम् ॥ ७२ ॥

यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्।
तस्य तद्वितथं कुर्य्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥

यस्त्विति। यः पुनर्दोषवतीं कन्यां दोषाननभिधाय ददाति तस्य कन्यादातुर्दुरात्मनो दानं तत्प्रत्यर्पणेन व्यर्थं कुर्य्यात्। एतदपि त्यागे दोषाभावकथनार्थम् ॥ ७३ ॥

विधाय वृत्तिं भार्य्यायाः प्रवसेत्कार्य्यवान्नरः।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥७४॥

विधायेति। कार्य्ये सति मनुष्यः पत्न्याग्रासाच्छादनादि

प्रवसन् देशान्तरं गच्छेत्। यस्मादन्नाद्यभावपीडिता स्त्री शीलवत्यपि पुरुषान्तरसम्पर्कं भजेत्॥ ७४॥

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता। प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः॥ ७५॥

विधायेति। भक्ताच्छादनादि दत्त्वा पत्यौ देशान्तरगते देहप्रसाधनपरगृहगमनरहिता जीवेत् अदत्त्वा पुनर्गते सूत्रनिर्माणादिभिरनिन्दितशिल्पेन जीवेत्॥ ७५॥

प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः।विद्यार्थं षट् यशोऽर्थं वा कामार्थंस्त्रींस्तु वत्सरान्॥७६॥

प्रोषित इति। गुर्वाज्ञासंपादनादिधर्मकार्यनिमित्तं प्रोषितः पतिरष्टौ वर्षाणि पत्न्या प्रतीक्षणीयः ऊर्द्ध्वं पतिसन्निधिं गच्छेत्। तदाह वसिष्ठः। प्रोषितपत्नी अष्टवर्षाण्युपासीत ऊर्द्ध्वं पतिसकाशं गच्छेदिति। विद्यार्थं प्रोषितः षड्वर्षाणि प्रतीक्ष्यः निजविद्यादिविभावनेन यशोर्थमपि प्रोषितः पतिः षडेव भार्यान्तरोपभोगार्थं गतस्त्रीणि वर्षाणि॥ ७६॥

संवत्सरं प्रतीक्षेत द्विषन्तीं योषितम्पतिः। ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत्॥ ७७॥

संवत्सरमिति। पतिविषये जातद्वेषां स्त्रियं वर्षं यावत्

प्रतीक्षेत ततऊर्द्धमपि द्विषन्तीं स्वदत्तमलङ्कारादिधनं हृत्वा नोपगच्छेत् ग्रासाच्छादनमात्रन्तु देयमेव ॥ ७७ ॥

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा। सा त्रीन् मासान् परित्याज्याऽविभूषणपरिच्छदा ॥७८॥

अतीति। या स्त्री द्यूतादिप्रमादयुक्तं मद्यपानादिना मत्तं व्याधितं वा शुश्रूषाकरणेनावजानाति सा विगतालङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्या ॥ ७८ ॥

उन्मत्तम्पतितं क्लीवमवीजम्पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च नच दायापवर्त्तनं ॥ ७९ ॥

उन्मत्तमिति। वातादिक्षोभादप्रकृतिस्थं पतितमेकादशाध्याये वक्ष्यमाणं नपुंसकमवीजं बाध्यरेतस्त्वादिना वीजरहितं कुष्ठाद्युपेतञ्च पतिमपरिचरन्त्यास्त्यागो न करणीयो नच धनमपहरणीयम् ॥ ७९ ॥

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता वाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा ॥८०॥

मद्येति। निषिद्धमद्यपानरता असाध्वाचारा भर्त्तुः प्रतिकूलाचरणशीला कुष्ठादिव्याधियुक्ता भृत्यादिताडनशीला

सततमप्रियकारिणी वा भार्या भवेत्साधिवेत्तव्या तस्यां सत्यामन्योविवाहः कार्य्यः ॥ ८० ॥

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ८१ ॥

वन्ध्येति। प्रथमर्तुमारभ्याविद्यमानप्रसूता अष्टमे वर्षे ऽधिवेदनीया मृतापत्या दशमे वर्षे स्त्रीजनन्येकादशेऽप्रियवादिनी तु सद्य एव यद्यपुत्रा भवति पुत्रवत्यास्तु तस्या धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीतान्यतरापाये तु कुर्वीतेत्यापस्तम्बनिषेधादधिवेदनमकार्य्यम् ॥ ८१ ॥

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥ ८२ ॥

येति। या पुनर्व्याधिता सती पत्युरनुकूला भवति शीलवती च तामनुज्ञाप्यान्योविवाहः कार्य्यः कदाचिच्चासौ नावमाननीया ॥ ८२ ॥

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ ८३ ॥

अधीति। या पुनः कृताधिवेदना स्त्री कुपिता गृहात्

निर्गच्छति सा तदहरेव रज्ज्वादिना बद्ध्वा स्थापनीया आकोपनिवृत्तेः पित्रादिकुलसन्निधौ वा त्याज्या ॥ ८३ ॥

प्रतिषिद्धापि चेद्या तु मद्यमभ्युदयेष्वपि। प्रेक्षा समाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥८४॥

प्रतीति। या पुनः क्षत्रियादिस्त्री भर्त्रादिनिवारिता विवाहाद्युत्सवेष्वपि निषिद्धमद्यम्पिबेत् नृत्यादिस्थानजनस मूहं वा गच्छेत् सा सुवर्णकृष्णलानि षट् व्यवहारप्रकरणो क्ता दण्डनीया ॥ ८४ ॥

यदि स्वाश्चापराश्चैव विन्देरन् योषितो द्विजाः। तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥८५॥

यदीति। यदि द्विजातयः स्वजातीयाविजातीयाश्च भार्या उद्वहेयुस्तदा तासां द्विजातिक्रमेण वाक्सम्मानदायविभा गोत्कर्षार्थं ज्येष्ठत्वम्पूजा च वस्त्रालङ्कारादिदानेन गृहञ्च प्रधानं स्यात् ॥ ८५ ॥

भर्त्तुः शरीरशुश्रूषान्धर्म्मकार्य्यञ्च नैत्यिकम्। स्वा चैव कुर्य्यात्सर्व्वेषां नास्वजातिः कथञ्चन ॥८६॥

भर्त्तुरिति। भर्त्तुर्देहपरिचर्य्यामन्नदानादिरूपान्धर्म्मका र्य्यञ्च भिक्षादानातिथिपरिवेशनहोमीयद्रव्योपकल्पनादिमात्य

दिकं सर्व्वेषां द्विजातीनां सजातिभार्य्यैव कुर्य्यात् नतु कदाचि द्विजातीयेति ॥ ८६ ॥

यस्तु तत्कारयेन्मोहात्सजात्या स्थितयान्यया।
यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः॥ ८७॥

यस्त्विति। यः पुनः सजातीयया सन्निहितया देहशुश्रूषा दिकं कार्य्यं विजातीयया मौर्ख्यात् कारयेत् स यथा ब्राह्मण्यां शूद्राज्जातो ब्राह्मणचाण्डालः तथैव पूर्व्वैर्ऋषिभिर्दृष्ट इति पूर्व्वानुवादः॥ ८७॥

उत्कृष्टायाभिरूपाय वराय सदृशाय च। अप्रा प्तामपि तां तस्मै कन्यां दद्याद्यथाविधि॥ ८८॥

उत्कृष्टेति। कुलाचारादिभिरुत्कृष्टाय सुरूपाय समान जातीयाय वरायाप्राप्तकालामपि विवाहयेदष्टवर्षा मेवं धर्म्मो न हीयते इति दर्शनात् तस्मादपि कालात्प्रागपि कन्यां ब्राह्मविवाहविधिना दद्यात्॥ ८८॥

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥ ८९॥

काममिति। संजातार्त्तवापि कन्या वरं मरणपर्य्यन्तं पितृ

गृहे तिष्ठेत् न पुनरेनां विद्यागुणरहिताय कदाचिदपि चाहि दद्यात् ॥ ८९ ॥

त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती। ऊर्द्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९० ॥

त्रीणीति। पित्रादिभिर्गुणवद्वरायादीयमाना कन्या संजातार्त्तवा सती त्रीणि वर्षाणि प्रतीक्षेत वर्षत्रयात् पुनःऊर्द्धमधिकगुणवरालाभे समानजातिगुणं वरं स्वयं वृणीत ॥ ९० ॥

अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम्। नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥ ९१ ॥

अदीयमानेति। पित्रादिभिरदीयमाना कुमारी यथोक्तकाले यदि भर्त्तारं स्वयं वृणुते तदा सा न किञ्चित्पापमाप्नोति न च तत्पतिः पापं प्राप्नोति ॥ ९१ ॥

अलङ्कारं नाददीत पित्र्यं कन्या स्वयम्बरा। मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥ ९२ ॥

अलङ्कारमिति। स्वयंवृतपतिका कन्या वरस्वीकरणात्पूर्वं पितृमातृभ्रातृभिर्दत्तमलङ्कारं तेभ्यः समर्पयेत् यदा नार्पयेत्तदा चौरी स्यात् ॥ ९२ ॥

पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्।
स हि स्वाम्यादतिक्रामेदृतूनाम्प्रतिरोधनात्॥९३॥

पित्रे नेति। ऋतुमतीं कन्यां वरः परिणयन् पित्रे शुल्कं न दद्यात्। यस्मात्स पिता ऋतुकार्य्यापत्योत्पत्तिनिरोधात् कन्यायाः स्वामित्वाद्धीयते॥९३॥

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः॥९४॥

त्रिंशदिति। त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कां मनोहारिणीं कन्यामुद्वहेत् चतुर्विंशतिवर्षो वाऽष्टवर्षां गार्हस्थ्यधर्म्मेऽवसादमृच्छति त्वरावान् एतच्च योग्यकालप्रदर्शनपरं न तु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदो भवति त्रिभागवयस्का च कन्या वोढुर्योग्येति गृहीतवेदस्यापकुर्वाणस्य गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वर इत्यस्यार्थः॥९४॥

देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्॥९५॥

देवेति। भगोऽर्य्यमा सविता पुरन्ध्रिर्मह्यं त्वाऽदुर्गार्हपत्याय देवा इत्यादिमन्त्रलिङ्गात् यां देवैर्दत्तां भार्य्यां तां पतिर्लभते न तु

स्वेच्छया तां यतीं देवानाम्प्रियं कुर्व्वन् ग्रासाच्छादनादिना सदा दोषाद्युपेतामपि पोषयेत् ॥ ९५ ॥

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः।
तस्मात्साधारणोधर्म्मः श्रुतौ पत्न्या सहोदितः॥९६॥

प्रजनेति। यस्माद्गर्भग्रहणार्थं स्त्रियः सृष्टागर्भाधानार्थञ्च मनुष्याः तस्माद्गर्भोत्पादनमिवाग्न्याधानादिरपि धर्म्मः पत्न्या सह साधारणः सोमे वसानावग्नीनादधीयातामित्यादिं वेदेऽविहितः तस्माद्भार्यां बिभृयादिति पूर्व्वोक्तस्य शेषः ॥ ९६ ॥

कन्यायान्दत्तशुल्कायां म्रियेत यदि शुल्कदः।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥ ९७ ॥

कन्येति। कन्यायां दत्तशुल्कायां सत्यामसंजातविवाहायां यदि शुल्कदो वरो म्रियते तदा देवराय पित्रादिभिरसौ कन्या दातव्या यदि सा स्वीकरोति यस्याम्रियेतेति प्रागुक्तं नियोगरूपं इदन्तु शुल्कग्रहणविषयम् ॥ ९७ ॥

आददीत न शूद्रोपि शुल्कं दुहितरन्ददत्।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयं ॥ ९८ ॥

आददीतेति। शास्त्रानभिज्ञः शूद्रोपिपुत्रीं ददत् शुल्कं न गृह्णीयात्। किम्पुनः शास्त्रविद्द्विजातिः यस्मात् शुल्कं

गृह्णन् शुल्कं दुहितृविक्रयं कुरुते। न कन्यायाः पितेत्यनेन निषिद्ध
मपि शुल्कग्रहणं कन्यायामिति गृहीतशुल्कायां शास्त्रीयनियम
दर्शनात् शुल्कग्रहणे शास्त्रीयत्वशङ्कायां पुनस्तन्निषिध्यते॥९८॥

एतत्तु न परे चक्रुर्नापरे जातु साधवः। यद
न्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते॥ ९९ ॥

एतदिति। एतत्पुनः पूर्व्वे शिष्टा न कदाचित्कृतवन्तो ना
प्यपरे वर्त्तमानकालीनाः कुर्व्वन्ति यदन्यस्य कन्यामङ्गीकृत्य
पुनरन्यस्मै दीयत इति एतच्च गृहीतशुल्ककन्याविषयं नहत्वा
कथचित्कन्यात्वमिति गृहीतशुल्कविषयम्॥ ९९ ॥

नानुशुश्रुम जात्वेतत्पूर्व्वेष्वपि हि जन्मसु। शुल्क
संज्ञेन मूल्येन छन्नं दुहितृविक्रयम्॥ १०० ॥

नेति। पूर्व्वकल्पेष्वप्येतद्वृत्तमिति कदाचित् वयम श्रुत
वन्तो यत् शुल्काभिधानेन मूल्येन कश्चित्साधुर्गूढं दुहितृविक्रय
मकार्षीदिति शुल्कनिषेधानुवादः॥ १०० ॥

अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः। एष
धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः॥ १०१ ॥

अन्योन्यस्येति। भार्य्यापत्योर्मरणान्तं यावत् धर्म्मार्थकामेषु

परस्पराव्यभिचारः स्वादिशेषसंक्षेपतः स्त्रीपुंसयोः मुख्यो धर्मो ज्ञातव्यः ॥ १०१ ॥

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ।
यथानाभिचरेतान्तौ वियुक्ताविरेतरम्॥ १०२॥

तथाच सति तथेति। स्त्रीपुंसौ कृतविवाहौ तथा सदा यत्नं कुर्य्यातां यथा धर्म्मार्थकामविषये वियुक्तौ परस्परम् अभिचरेतां ॥ १०२ ॥

एषस्त्रीपुंसयोरुक्तो धर्म्मो वोरतिसंहितः। आपद्य पत्यप्राप्तिश्च दायभागन्निबोधत॥ १०३॥

एष इति। एषभार्य्यापत्योरन्योन्यानुरागयुक्तो धर्म्मो युष्माक मुक्तः सन्तानाभावे चापत्यप्राप्तिरुक्ता। इदानीं दोषतइति दायः पित्रादिधनं तस्य विभागव्यवस्थां शृणुत ॥ १०२ ॥

ऊर्द्धम्पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजे रन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥ १०४॥

ऊर्द्धमिति। भ्रातरोमिलिता पितृमरणादूर्द्धं पैतृकं मातृमरणादूर्द्धं मातृकं धनं समं कृत्वा विभजेरन् ज्येष्ठगोचर तयोद्धारस्य वक्ष्यमाणत्वात् समभागोऽयं ज्येष्ठजातरि

परस्पराव्यभिचारः स्यादित्येष संक्षेपतः स्त्रीपुंसयोः मकृष्टो धर्मो ज्ञातव्यः ॥ १०१ ॥

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ।
यथानाभिचरेतान्तौ वियुक्ताविंतरेतरम्॥ १०२॥

तथाच यति तथेति। स्त्रीपुंसौ कृतविवाहौ तथा सदा यत्नं कुर्य्यातां यथा धर्मार्थकामविषये वियुक्तौ परस्परन्न व्यभिचरेतां ॥ १०२ ॥

एषस्त्रीपुंसयोरुक्तो धर्म्मो वोरतिसंहितः। आपद्य पत्यप्राप्तिश्च दायभागन्निबोधत ॥ १०३॥

एषइति। एषभार्य्यापत्योरन्योन्यानुरागयुक्तो धर्म्मो युष्माकमुक्तः सन्तानाभावे चापत्यप्राप्तिरुक्ता। इदानीं दोषतइति दायः पित्रादिधनं तस्य विभागव्यवस्थां शृणुत ॥ १०२ ॥

ऊर्द्धम्पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजे रन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥ १०४ ॥

ऊर्द्धमिति। भ्रातरोमिलित्वा पितृमरणादूर्द्धं पैतृकं मातृमरणादूर्द्धं मातृकं धनं समं कृत्वा विभजेरन् ज्येष्ठगोचरतयोद्धारस्य वक्ष्यमाणत्वात् समभागोऽयं ज्येष्ठव्यतिरि

भ्रातरमनिच्छति येऽत्र्यः पित्रोर्मरणादूर्द्धं विभजेरन्नाह। यस्मात्ते पुत्रा जीवतोः पित्रोस्तद्धनस्य स्वामिनो न भवन्ति मातुरपि प्रकृतत्वात्पैतृकमित्यनेन मातृकस्यापि ग्रहणं एतच्च पितृमरणानन्तरं विभागो जीवतः पितुरिच्छाभावे द्रष्टव्यः। पितुरिच्छया जीवत्यपि तस्मिन्विभागः। तदाह याज्ञवल्क्यः। विभागञ्चेत्पिता कुर्यादिच्छया विभजेत्सुतानिति॥१०४॥

ज्येष्ठ एव तु गृह्णीयात् पित्र्यन्धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरन्तथा॥१०५॥

यदा पुनर्ज्येष्ठो धार्मिको भवति तदा ज्येष्ठ इति। ज्येष्ठ एव पितृधनमखिलं सर्वं गृह्णीयात्कनिष्ठाः पुनर्ज्येष्ठं भक्ताच्छादनार्थं पितरमिव उपजीवेयुः एवञ्च सर्वेषां सदैवावस्थानम्॥१०५॥

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति॥१०६॥

ज्येष्ठेनेति। उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति ततश्च नापुत्रस्य लोकोऽस्तीति श्रुतेः पुत्रलोका भावपरिहारो भवति तथा प्रजया पितृभ्य इति श्रुतेः पुत्रेण जातमात्रेण पितॄणामनृणश्च भवति यतो ज्येष्ठ एव सर्वं धन मर्हतीति पूर्वस्य शेषः॥१०६॥

यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते। स एव धर्म्मजः पुत्रः काममजानितरान् विदुः ॥ १०७ ॥

यस्मिन्निति। यस्मिन् जाते ऋणं शोधयति येन जातेना मृतत्वमाप्नोति। तथा च श्रुतिः ऋणमस्मिन्सन्नयत्यमृतत्वञ्च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतोमुखमिति। स एव पितुर्ऋणापनयनकर्म्मेच हेतुना जातः पुत्रोभवति तेनैकेन एव ऋणापनयनाद्युपकारस्य कृतत्वात्। इतरांस्तु काममात्रहेतुकजन्मनो मुनयोजानन्ति ततश्च स एव सर्व्वन्धनं गृह्णीयादित्यस्यैवायमपि शेषः ॥ १०७ ॥

पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः। पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥ १०८ ॥

पितेवेति। ज्येष्ठोभ्राता विभागाभावे अनुजान् भ्रातॄन् भक्ताच्छादनादिभिः पितेव बिभृयात् अनुजाश्च भ्रातरः पुत्रा इव ज्येष्ठे भ्रातरि धर्म्माय वर्त्तेरन् ॥ १०८ ॥

ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः। ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥ १०९ ॥

ज्येष्ठ इति। अकृतविभागोज्येष्ठो यदि धार्म्मिकोभवति तदा नुजानामपि तदनुयायित्वेन धार्म्मिकत्वात् ज्येष्ठः कुलंवर्द्धय

यदि यथार्थिकोभवति तदाऽनुजानामपि तदनुपालित्वात् ज्येष्ठः कुलजोभवति तथा गुणवान् ज्येष्ठोलोके पूज्यतमः साधुभिश्चागर्हितोभवति ॥ १०९ ॥

योऽज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।
अज्येष्ठवृत्तिर्यस्तु स्यात्स सम्पूज्यस्तु बन्धुवत् ॥ ११० ॥

योज्येष्ठइति। योज्येष्ठोऽनुजेषु भ्रातृषु पितृवद्वर्त्तेत स पितेव मातेवाऽगर्हणीयोभवति यः पुनस्तथा न वर्त्तेत स मातुलादिबन्धुवद्वर्त्तनीयः ॥ ११० ॥

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया । पृथग्विवर्द्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥ १११ ॥

एवमिति। एवमविभक्ता भ्रातरः सह संवसेयुः यदि वा धर्मकामतया कृतविभागाः पृथग्वसेयुः यस्मात्पृथग्वसतामेव ति पृथक् पृथक् पञ्चमहायज्ञाद्यनुष्ठानात्तेषां वर्द्धते तस्माद्विभागक्रिया धर्म्या। तथाच बृहस्पतिः। एकपाकेन वसतां पितृदेवद्विजार्चनम्। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥ १११ ॥

ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम्। ततो ऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥ ११२॥

ज्येष्ठस्येति। उद्ध्रियत इत्युद्धारः ज्येष्ठस्याविभक्तपाधारण धनादुद्धृत्य विंशतितमोभागः सर्व्वद्रव्येभ्यश्च यत् श्रेष्ठन्तद्दातव्यम्। मध्यमस्य चत्वारिंशत्तमोभागोदेयः कनिष्ठस्य पुनरशीतितमोभागोदातव्यः अवशिष्टन्धनं समं कृत्वा विभजनीयम्। ॥ ११२॥

ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम्। येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमन्धनं॥११३॥

ज्येष्ठस्येति। ज्येष्ठकनिष्ठौ पूर्व्वश्लोके यथोक्तमुद्धारं गृह्णीयातां ज्येष्ठकनिष्ठव्यतिरिक्ताये मध्यमास्तेषामवान्तरज्येष्ठकनिष्ठतामनपेक्ष्य मध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकन्दातव्यः मध्यमानामवान्तरज्येष्ठकनिष्ठताभागे वैषम्यवारणार्थमिदम् ॥ ११३॥

सर्व्वेषान्धनजातानामाददीताग्र्यमग्रजः। यच्च सातिशयं किञ्चिद्दशतश्चाप्नुयाद्वरम्॥ ११४॥

सर्व्वेषामिति। सर्व्वेषान्धनप्रकाराणां मध्यात् यत् श्रेष्ठन्धनं ज्येष्ठस्तद्धनं गृह्णीयात् सर्व्वद्रव्याच्च यद्वरमित्युक्तमनूदितं यमु

सर्व्वधनाच्च यदेकमपि प्रकृष्टं द्रव्यं विद्यते तदपि ज्येष्ठ एव गृह्णीयात्तथा दशतः पशूनामिति गौतमस्मरणात्। दशभ्यो गवादिपशुभ्य एवैकं श्रेष्ठं ज्येष्ठो लभते दशसु यदि ज्येष्ठो गुणवानितरे निर्गुणास्तद्विषयं॥११४॥

उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्म्मसु।
यत्किञ्चिदेव देयन्तु ज्यायसे मानवर्द्धनं॥११५॥

सर्व्वेषां समगुणत्वे तु उद्धारइति। दशतः प्राप्नुयाद्वरमिति गौतमसुद्धारस्तत्रः शौचमध्ययनादिकर्म्मसम्पन्नानां भ्रातॄणां ज्येष्ठस्य नास्ति तथापि यत्किञ्चिदल्पमपि द्रव्यं पूजाबुद्धि करं ज्येष्ठाय देयं एवञ्च समगुणेषूद्धारप्रतिषेधदर्शनात्पूर्व्वोक्त गुणोत्कर्षापेक्षयोद्धारवैषम्यं बोद्धव्यम्॥११५॥

एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना॥११६॥

एवमिति। एवमुक्तप्रकारेण समुद्धृतविंशांशादिके धने समान् भागान् भ्रातॄणां कल्पयेत्। विंशतितमभागादौ पुनरनुद्धृत इयं वक्ष्यमाणभागकल्पना भवेत्॥११६॥

एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धन्ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्म्मो व्यवस्थितः ॥ ११७ ॥

एकेति । एकाधिकमंशं द्वावंशावितियावत् ज्येष्ठपुत्रो गृह्णी यात् । अधिकमर्द्धं यस्यांशे सार्द्धमंशं ज्येष्ठादनन्तरजातो गृह्णी यात्कनिष्ठाः पुनरेकैकमंशं गृह्णीयुरिति व्यवस्थितोधर्म्मः इदन्तु ज्येष्ठतदनुजयोर्विद्यादिगुणवत्त्वापेक्षया कनिष्ठानाञ्च निर्गुणत्वे बोद्धव्यं ज्येष्ठतदनुजयोरधिकदानदर्शनात् ॥ ११७ ॥

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागम्पतिताः स्युरदित्सवः ॥ ११८ ॥

स्वेभ्य इति । ब्राह्मणक्षत्रियवैश्यशूद्राः सवर्णा भ्रातरः स्वजात्यपेक्षया स्वेभ्यश्चतुरोंऽशान् हरेद्विप्र इत्यादिना वक्ष्यमाणेभ्यो भागेभ्य आत्मीयादात्मीयादंशाच्चतुर्थभागम्पृथक्पृथक् कन्याभ्योऽनूढाभ्यो भगिनीभ्यः या यस्य सोदर्या भगिनी तस्या एव संस्कारार्थमित्येवन्दद्युः सोदर्याभावे विमातृजैरन्त्यकृष्टैरपकृष्टैरपि संस्कार्य्या एव तथाच याज्ञवल्क्यः । असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम् । यदि भगिनीसंस्कारार्थञ्चतुर्भागन्दातुनेच्छन्ति तदा पतिताभवेयुः एतेनैकजातीयवैमात्रेयभ्रातृपुत्र

भजिनोवद्भावेपि योद्धर्षभगिनीभ्यश्चतुर्थभागदानमवगन्तव्यम् ॥ ११८ ॥

अजाविकं सैकशफन्न जातु विषमम्भजेत्। अजा
विकन्तु विषमं ज्येष्ठस्यैव विधीयते ॥ ११९ ॥

अजेति। एकशफाश्वादयः छागमेषादि एकशफसहितं विभागकाले समं कृत्वा विभक्तुमशक्यञ्च विभजेत्किन्तु ज्येष्ठ स्यैव तस्मात् नतु तत्तुल्यद्रव्यान्तरदानेन समीकृत्य विक्रीय वा तन्मूल्यं विभजेत्। अजाविकमिति पश्वादिभागवैक ल्पभावः ॥ ११९ ॥

यवीयान् ज्येष्ठभार्य्यायाम्पुत्त्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्म्मो व्यवस्थितः ॥१२०॥

यवीयानिति। कनिष्ठोयदि ज्येष्ठभ्रातृभार्य्यायान्नियोगेन पुत्रमुत्पादयेत्तदा तेन पितृव्येण सह तस्य क्षेत्रजस्य समोवि भागः स्यान्नतु पितृव्योद्धारी भवति इतिभागव्यवस्था नियता धर्म्मोऽयमध्यवसायनिश्चितं गच्छति यद्यपि समेत्य तातः समभिव्युक्तन्यायादेव विप्रात्योपचारेण बहुपितृकस्य पैतामहधने पितृवद्भागोऽस्तीति गम्यते ॥ १२० ॥

उपसर्ज्जनप्रधानस्य धर्म्मतो नोपपद्यते। पिता प्रधानम्प्रजने तस्माद्धर्म्मेण तम्भजेत्॥ १२१॥

उपेति। ज्येष्ठयातुः क्षेत्रजः पुत्रोपि पितेव सोद्धार विभागी युक्तइतीमां शङ्कां निराकृत्य पूर्व्वोक्तमेव द्रढयति अप्रधानं क्षेत्रजः पुत्रः प्रधानस्य क्षेत्रिणः पितुर्द्धर्मेण सोद्धारविभाग ग्रहणरूपेण न सम्बध्यते क्षेत्र्यपि पिता क्षेत्रदारेणापत्योत्पादने प्रधानं स्यात्तस्मात्पूर्व्वोक्तेनैव धर्म्मेण विभागव्यवस्थारूपेण पितृ व्येण सह तं क्षेत्रजं विभजेदिति पूर्व्वस्यैव शेषः॥ १२१॥

पुत्रः कनिष्ठोज्येष्ठायां कनिष्ठायाञ्च पर्व्वजः। कथन्तत्र विभागः स्यादितिचेत्संशयोभवेत्॥ १२२॥

पुत्रइति। यदि प्रथमोढायां कनीयान् पुत्रोजातः पश्चादूढायाञ्च ज्येष्ठस्तदा तत्र कथं विभागोभवेदिति संशयो यदि स्यात्किं मातृद्वारकक्रमेण पुत्रस्य ज्येष्ठत्वमुत स्वजन्मक्रमे णेति तदा॥ १२२॥

एकं वृषभमुद्धारं संहरेत स पूर्व्वजः। ततोऽप रेऽज्येष्ठवृषास्तदूनानां स्वमातृतः॥ १२३॥

एकमिति। पूर्व्वस्यां जातः पूर्व्वजः ख्यापो संग्राहकत्वयोर्व ऊकमिति द्रष्टव्यं यः कनिष्ठोप्येकं वृषभमुद्धारं गृह्णीयात्ततः

श्रेष्ठवृषभाद्न्ये ये पञ्चदश वृषभाः ते तथाऽज्येष्ठिनेयात्
मातृतजनानां कनिष्ठिनेयानां प्रत्येकं एकैकशोभवन्तीति
मातुराद्क्रमेण ज्येष्ठं ॥ १२३ ॥

ज्येष्ठस्तु जातोज्येष्ठायां हरेद्वृषभषोडशाः। ततः
स्वमातृतः शेषाभजेरन्निति धारणा ॥ १२४ ॥

ज्येष्ठइति। प्रथमोढायामुत्पन्नोजातोऽल्पजना च भ्रातृभ्यो
ज्येष्ठः स वृषभः षोडशोयस्यां गवाम्नागृह्णीयात् पञ्चदशगा
एकं वृषभमित्यर्थः ततोऽनन्तरं येऽन्ये स्त्रीभ्योमातृभ्यो
जातास्ते स्वमातृगतोढाज्येष्ठतापेक्षया शेषानाविभजेरन्निति
निश्चयः ॥ १२४ ॥

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः। न
मातृतोज्यैष्ठमस्ति जन्मतोज्यैष्ठमुच्यते ॥ १२५ ॥

सदृशेति। समानजातीयस्त्रीषु जातानां पुत्राणां जातिगत
विशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्यविभिदयाते किन्तुजन्म
क्रमेणैवातः कनिष्ठजोपि पूर्वोक्तमेव विंशभागमुद्धारादिकं
गृह्णीयात् एवञ्च मातृज्येष्ठस्य विहितप्रतिषिद्धत्वात् षोडशी
षडभागवत्वदिकल्पः सच गुणवन्निर्गुणतया भ्रातृणां गुरु

उपसर्ज्जनम्प्रधानस्य धर्म्मतो नोपपद्यते। पिता प्रधानम्प्रजने तस्माद्धर्म्मेण तम्भजेत् ॥ १२१ ॥

उपेति। ज्येष्ठभ्रातुः क्षेत्रजः पुत्रोपि पितेव सोद्धारविभागी युक्त इतीमां शङ्कां निराकृत्य पूर्व्वोक्तमेव द्रढयति अप्रधानं क्षेत्रजः पुत्रः प्रधानस्य क्षेत्रिणः पितुर्द्धर्म्मेण सोद्धारविभागग्रहणरूपेण न सम्बध्यते क्षेत्र्यपि पिता क्षेत्रदारेष्वपत्योत्पादने प्रधानं स्यात्तस्मात्पूर्व्वोक्तेनैव धर्म्मेण विभागव्यवस्थारूपेण पितृव्येण सह तं क्षेत्रजं विभजेदिति पूर्व्वस्यैव शेषः ॥ १२१ ॥

पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पर्व्वजः। कथन्तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥ १२२ ॥

पुत्र इति। यदि प्रथमोढायां कनीयान् पुत्रो जातः पश्चादूढायाञ्च ज्येष्ठस्तदा तत्र कथं विभागो भवेदिति संशयो यदि स्यात्किं मातृपराक्रमेण पुत्रस्य ज्येष्ठत्वमुत स्वजन्मक्रमेणेति तदा ॥ १२२ ॥

एकं वृषभमुद्धारं संहरेत स पूर्व्वजः। ततोऽपरे ज्येष्ठवृषास्तदूनानां स्वमातृतः ॥ १२३ ॥

एकमिति। पूर्व्वस्यां जातः पूर्व्वजः ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वं यः कनिष्ठोप्येकं वृषभमुद्धारं गृह्णीयात्ततः

श्रेष्ठवृषभादन्ये ये मध्यमश्रेष्ठवृषभाः ते तस्माज्ज्यैष्ठिनेयात् मातृतऊनानां कनिष्ठिनेयानां प्रत्येकं एकैकशो भवन्तीति मातुरुद्वाहक्रमेण ज्यैष्ठ्यं ॥ १२२ ॥

ज्येष्ठस्तु जातो ज्येष्ठायां हरेद्वृषभषोडशाः । ततः स्वमातृतः शेषा भजेरन्निति धारणा ॥ १२४ ॥

ज्येष्ठ इति । प्रथमोढायामुत्पन्नो जातोऽग्रजश्च भ्रातृभ्यो ज्येष्ठः स वृषभः षोडशगावाश्च गवामानृशंस्यात् पञ्चदशगा एकं वृषभमित्यर्थः ततोऽनन्तरं येऽन्ये स्त्रीभ्यो मातृभ्यो जातास्ते स्वमातृगतोद्वाहज्येष्ठतापेक्षया शेषानाविभजेरन्निति निश्चयः ॥ १२४ ॥

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः । न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥ १२५ ॥

सदृशेति । समानजातीयस्त्रीषु जातानां पुत्राणां जातिगत विशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्यमभिधीयते किन्तु जन्मक्रमेणैवातः कनिष्ठायामपि पूर्वोत्पन्नमेव विंशमात्रमुद्धारिकं गृह्णीयात् एवञ्च मातृज्येष्ठस्य विहितप्रतिषिद्धत्वात् षोडशी ग्रहणाग्रहणवद्विकल्पः स च गुणवन्निर्गुणतया भ्रातॄणां गुरु

च

सपुत्रावगमाद्यवस्थितः। अतएव अन्यविद्यागुणज्येष्ठोऽप्युद्धारं दायादवाप्नुयात् इति वृहस्पत्यादिभिर्जन्मज्येष्ठस्य विद्या गुणोत्कर्षेणोद्धारोत्कर्षउक्तः। एवञ्च निर्गुणस्यैकवृषभमिति मन्दगुणस्य वृषभषोडशा इति मातृज्यैष्ठ्यात्मयत्नेन उद्धारो बोद्धव्यः। मातृज्यैष्ठ्यविधिरर्थवादं मेधातिथिर्वदन्। न सम्य गाह गोविन्दराजस्त्वन्यमतं जगौ॥ १२५॥

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतोज्येष्ठता स्मृता॥ १२६॥

न केवलं विभागे जन्मज्यैष्ठ्यं किन्तु अन्यत्रेति। सुब्रह्मण्याख्यो मन्त्रोज्योतिष्टोमे इन्द्रस्याह्वानार्थं प्रयुज्यते तत्र प्रथम पुत्रेण पितरमुद्दिश्याह्वानं क्रियते अमुकस्य पिता यजते इत्येव ऋषिभिः स्मृतं तथा यमयोर्गर्भएककालं निषिक्तयोरपि जन्मक्रमेणैव ज्येष्ठता स्मृता गर्भेष्विति बहुवचनं स्त्रीबहुता पेक्षया॥ १२६॥

अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकाम्।
यदपत्यम्भवेदस्यां तन्मम स्यात्स्वधाकरम्॥ १२७॥

अपुत्रइति। अविद्यमानपुत्रोयदस्यामपत्यं जायेत तन्मम आद्धाद्योर्द्ध्वदेहिककरं स्यादिति कन्यादानकाले जामात्रा सह स्त्रअतिपत्तिरूपेण विधानेन दुहितरं पुत्रिकां कुर्य्यात्॥ १२७॥

अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥ १२८॥

अथ परकृतिरूपमर्थवादमाह अनेनेति। दक्षः प्रजापतिः पुत्रोत्पादनविधिज्ञः स्ववंशवृद्ध्यर्थमनेनोक्तविधानेन कन्यादुहितॄः पूर्वं पुत्रिकाः स्वयं कृतवान् कार्येऽथ शब्दः ॥ १२८॥

ददौ स दश धर्माय कश्यपाय त्रयोदश। सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्॥ १२९॥

ददाविति। स दक्षो भाविपुत्रिकापुत्रलाभेन प्रीतात्मा वस्त्रालङ्कारादिना सत्कृत्य दश पुत्रिका धर्माय त्रयोदश कश्यपाय सप्तविंशतिचन्द्राय द्विजानामीषधीनाञ्च राज्ञे दत्तवान् सत्कारवचनमन्येषामपि पुत्रिकाकरणे सत्कारे चिह्नं दशे त्यादि च बह्वीनामपि पुत्रिकाकरणज्ञापकम्॥ १२९॥

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा। तस्या मात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥ १३०॥

यथैवेति। आत्मत्वात्मीयः पुत्रः आत्मा वै पुत्रनामासीति श्रुतिविज्ञानात् तत्समा च दुहिता तथा चाङ्गेभ्यउत्पादनात्। अत

तस्यां पुत्रिकायां पितुरात्मसदृश्यां विद्यमानायामपुत्रस्य मृतस्य पितुर्धनं पुत्रिकाव्यतिरिक्तः कथमन्यो हरेत्॥ १३० ॥

मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः। दौहित्र एव च हरेदपुत्रस्याखिलन्धनम्॥ १३१ ॥

मातुरिति। मातुर्यद्धनं तत्तस्यां मृतायां कुमारीभाग एव स्यात् न पुत्राणां तत्र भागः। कुमारी चानूढाभिप्रेता तथाच गौतमः। स्त्रीधनं दुहितृणामदत्तानामप्रतिष्ठितानाञ्च। अपुत्रस्य च मातामहस्य मृतस्य दौहित्र एव प्रकृतत्वात्पौत्रिकेयः समग्रधनं गृह्णीयात्॥ १३१ ॥

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्। स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥ १३२ ॥

दौहित्र इति। दौहित्रः प्रकृतत्वात्पौत्रिकेय एव तस्य मातामहधनग्रहणं अनन्तरोक्तजनकधनग्रहणपिण्डदानार्थोऽयमारम्भः पितृसम्बन्धस्य तत्रैव प्रसिद्धत्वात् अन्यस्य पौत्रिकेयः पुत्रान्तररहितस्य जनकस्य समग्रधनं गृह्णीयात् स एव पितृमातामहाभ्यां द्वौ पिण्डौ दद्यात् पिण्डदानं श्राद्धोपचयार्थं पौत्रिकेयत्वेन जनकधनग्रहणपिण्डदानव्यामोहनिरासार्थं वचनम्॥ १३२ ॥

पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥१३३॥

पौत्रेति। पौत्रदौहित्रयोर्लोके धर्मकृत्ये च न कश्चिद्विशेषोऽस्ति यस्मात्तयोर्मातापितरौ तस्य देहादुत्पन्नाविति पूर्व्वस्यानुवादः ॥१३३॥

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥१३४॥

पुत्रिकायामिति। कृतायाम्पुत्रिकायां यदि तत्कर्त्तुः पुत्रोऽनन्तरं जायते तदा तयोर्विभागकाले समोविभागोभवेत् नोद्धारः पुत्रिकायै देयः यस्माज्ज्येष्ठाया अपि तस्या उद्धारविषये ज्येष्ठता नादरणीया ॥१३४॥

अपुत्रायां मृतायान्तु पुत्रिकायां कथञ्चन।
धनन्तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन्॥१३५॥

अपुत्रेति। अपुत्रायाम्पुत्रिकायां कथञ्चन मृतायां तदीयधनं तद्भर्त्तैवाविचारयन् गृह्णीयात्पुत्रिकायाः पुत्रकामनेयाम् अस्य च पत्नीरक्षितस्य मृतपुत्रस्य पितृधनमपहरयतो नविचारणार्थमिदं वचनम्॥१३५॥

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥१३६॥

अकृतेति। अकृता वा कृतावेति पुत्रिकाया एव द्वैविध्यं तत्र यदपत्यं भवेदस्माकं तत्स्यादित्यभिधाय कन्या दानकाले वरानुमत्या या क्रियते सा कृता अभिसन्धिमात्र कृता वाक्यव्यवहारेण न कृता। तथाच गोतमः अभिसन्धि मात्रात्पुत्रिकेत्येकेषामिति अतएव पुत्रिकाधर्मशङ्कयेति प्राग विवाह्यत्वमुक्तम्। पुत्रिकैव कृता अकृता वा यं पुत्रं समानजाती यादेोढुरुत्पादयेत्तेन दौहित्रेण पौत्रकार्य्यकरणात्पौत्रिकेयथा मातामहः पौत्री तथाचासौ तस्मै पिण्डं दद्यात्। गोविन्दराज स्त्वकृता वेत्यपुत्रिकैव दुहिता तत्पुत्रोपि मातामहधने पौत्रि केयइव मातामहस्यादिसर्वेष्वधिकारीत्याह तन्न पुत्रिकाया एव पुत्रतुल्यत्वेन अपुत्रिकातत्पुत्रयोस्तुल्यत्वायोगादिति ॥१३६॥

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम् ॥१३७॥

पुत्रेणेति। पुत्रेण जातेन स्वर्गादिलोकान् प्राप्नोति पौत्रेण तेष्वेव चिरकालमवतिष्ठते तदनन्तरं पुत्रस्य पौत्रेणादित्यलो कमाप्नोति अस्य च दायभागप्रकरणे अभिधानं पितृर्द्धने

यज्ञादिश्राद्धेष्वपि पुत्रस्य तदभावे पौत्रस्य इत्येवं पुंसन्तानाधिकारबोधनार्थम् ॥ १३७ ॥

पुन्नाम्नोनरकाद्यस्मात्त्रायते पितरं सुतः। तस्मा त्पुत्रइति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ १३८ ॥

पुन्नाम्न इति। यस्मात्पुन्नामधेयनरकात्सुतः पितरन्त्रायते तस्मात् त्राणात् स्वात्मनैव ब्रह्मणा पुत्र इति प्रोक्तः तस्मान्महोपकारकत्वात्पुत्रस्य युक्तं तदीयपुंसन्तानस्य दायभागित्वमिति पूर्व्वदार्ढ्यार्थमिदम् ॥ १३८ ॥

पौत्रदौहित्रयोर्लोके विशेषोनोपपद्यते। दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ १३९ ॥

पौत्रेति। दौहित्रः पुत्रिकापुत्रः पौत्रदौहित्रयोर्लोके कश्चिद्विशेषो न ज्ञायते यस्माद्दौहित्रोपि मातामहं परलोके निस्तारयति एतच्च पौत्रिकेयस्य पौत्रेण साम्यप्रतिपादनं पुत्रिकाकरणानन्तरजातपौत्रेण सह धने तुल्यभागबोधनार्थं ॥ १३९ ॥

मातुः प्रथमतः पिण्डं निर्व्वपेत्पुत्रिकासुतः। द्वितीयन्तु पितुस्तस्यास्तृतीयन्तत्पितुः पितुः ॥ १४० ॥

मातुरित्यादि। पौत्रिकेयः प्रथमं मात्रे पिण्डं द्वितीयं मातुः पित्रे तृतीयं मातुः पितामहाय दद्यात्। पित्रादीनान्तु पित्रे मातामहाय चेत्युक्रमात्पितृक्रमेणैव पिण्डदानम् ॥ १४० ॥

उपपन्नो गुणैः सर्व्वैः पुत्रो यस्य तु दत्त्रिमः। स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः ॥ १४१ ॥

उपपन्न इति। पुत्राऋक्थहराः पितुरिति द्वादशपुत्राणामेव ऋक्थहरत्वं वक्ष्यति इमापरे तु क्रमशइति औरसक्षेत्रजा भावे दत्तकस्य पितुर्ऋक्थहरत्वं प्राप्तमेव अतः सत्यौरसपुत्रे दत्तकस्य सर्व्वगुणोपपन्नस्य पितृऋक्थभागप्राप्त्यर्थमिदं वचनं यस्य दत्तकः पुत्रोऽध्ययनादिसर्व्वगुणोपपन्नोभवति सोऽन्य गोत्रादागतोपि सत्यौरसे पितृरिक्थभागं गृह्णीयात्। अत एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरिति औरसस्य सर्व्वा त्वर्थाभिधानात्तेन नास्य समभागित्वं किन्तु षष्ठोक्तषष्ठभा गित्वमेवास्य न्याय्यं। गोविन्दराजस्तु औरसक्षेत्रजाभावे सर्व्वगुणोपपन्नस्यैव दत्तकस्य पितृऋक्थभागित्वार्थमिदं वचनमित्यवोचत्तन्न कृत्रिमादीनान्निर्गुणानामपि पितृऋक्थ भागित्वाद्दत्तकस्य तु तत्पूर्व्वपठितस्यापि सर्व्वगुणोपपन्नस्यैव न निर्गुणस्येत्यन्याय्यत्वात् ॥ १४१ ॥

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्वचित्। गोत्र ऋक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ १४२ ॥

गोत्रेति। गोत्रधने जनकसम्बन्धिनी दत्तको न कदाचि

आमुष्यात्। पिण्डश्च गोत्ररिक्थानुगामी यश्च गोत्ररिक्थे भजते तस्यैव स्वपिण्डोदीयते तस्मात्पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि तत्पुत्रकर्तृकं निवर्त्तते ॥ १४२ ॥

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥१४३॥

अनियुक्तेति। गुर्व्वादिनियोगं विना जातोयश्च सपुत्रायां नियोगेनापि देवरादेः कामादुत्पादितस्तावुभौ क्रमेण जारो त्पन्नकामाभिलाषजौ धनभागं नार्हतः ॥ १४२ ॥

नियुक्तायामपि पुमान्नार्य्यां जातोऽविधानतः।
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः॥१४४॥

नियुक्तायामिति। नियुक्तायामपि स्त्रियां घृताभ्यङ्गादि नियोगेतिकर्त्तव्यतां विना पुत्रोजातः स क्षेत्रिकस्य पितुर्धनं नार्हति यस्मादसौ पतितेनोत्पादितः नियुक्तो यो विधिं हित्वेत्यनेन पतितत्वाभिधानात् ॥ १४४ ॥

हरेत्तत्र नियुक्तायां जातः पुत्रोयथौरसः। क्षेत्रिकस्य तु तद्बीजं धर्म्मतः प्रसवश्च सः ॥ १४५ ॥

हरेदिति। तत्र नियुक्तायां योजातः क्षेत्रजः पुत्रऔरस

इव धनं हरेत् यस्मात्तस्य कारणभूतं बीजन्तत्क्षेत्रस्वामिन एव तत्कार्य्यकरणत्वात्। अपत्यमपि धर्म्मतस्तद्धर्मेव। यवीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद्यदीत्यनेन क्षेत्रजस्य पितामह धने पितृव्येन सह समभागस्य प्रोक्तत्वात्। गुणवतः क्षेत्र जस्य औरसवत्तोद्धारभागप्राप्त्यर्थमिदं औरसतुल्यत्वाविधानं ॥ १४५ ॥

धनं योबिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च। सोऽ पत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्॥ १४६ ॥

धनमिति। योमृतस्य भ्रातुः स्थावरजङ्गमन्धनं पत्न्या रक्षणक्षमया समर्पितं रक्षेत् तां पुष्णीयात् स नियोग धर्म्मेण तस्यां भ्रातुरपत्यमुत्पाद्य तस्यापत्यस्य दद्यात् एतच्च धनं योबिभृयात् भ्रातुरित्यभिधानात् विभक्तभ्रातृविषयं यवीयान् ज्येष्ठभार्य्यायामिति तु अविभक्तविषयं समभागाभि धानात्॥ १४६ ॥

या नियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयात्। तं कामजमरिक्थीयं वृथोत्पन्नं प्रचक्षते ॥ १४७॥

येति। या स्त्री गुर्व्वादिभिरननुज्ञाता देवराद्वाऽन्यतोवा सपिण्डात्पुत्रमुत्पादयेत् स यदि कामजो भवति तदा तम रिक्थभाजं मन्वादयोवदन्ति अकामजएव रिक्थभागी सच

धात्र्तोऽसारदेन। मृतात् मृतस्परिहरन् गार्थेर्गा चाक्षर्य रसुम्। कृते तदवशेषे च धनाभावे न कामतइति ॥१४७॥

एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु। बह्वीषु चैकजातानां नानास्त्रीषु निबोधत॥ १४८॥

एतदिति॥ समानजातीयासु भार्य्यासु एकेन भर्त्रा जातानामेव विभागविधिर्बोद्धव्यः। इदानीं नानाजातीयासु स्त्रीषु बह्वीषु उत्पन्नानां पुत्राणां विभागं शृणुत॥ १४८॥

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः। तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः॥ १४९॥

ब्राह्मणस्येति। ब्राह्मणस्य यदि क्रमेण ब्राह्मण्याद्याश्चतस्रो भार्य्या भवेयुः तदा तासां पुत्रेषूत्पन्नेषु अयं वक्ष्यमाणो विभागविधिर्मन्वादिभिः स्मृतः॥ १४९॥

कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च। विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः॥ १५०॥

कीनाशइति। कीनाशः कर्षकः गवां सेक्ता वृषो यानमश्वादि अलङ्कारो अङ्गुरीयकादिः वेश्म गृहञ्च प्रधानं चावमध्यस्था

योऽधिकः प्रधानभूतोंऽशस्तस्यैतद्ब्राह्मणीपुत्रस्योद्धारार्थं इदं त्ववशिष्टं वक्ष्यमाणरीत्या विभजनीयम् ॥ १५० ॥

त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः।
वैश्याजः सार्द्धमेवांशमंशं शूद्रासुतो हरेत् ॥ १५१ ॥

त्र्यंशमित्यादि। त्रीनंशान् ब्राह्मणीपुत्रो धनाद्गृह्णीयात् द्वौ क्षत्रियापुत्रः सार्द्धं वैश्यापुत्रः अंशं शूद्रासुतः एवञ्च यत्र ब्राह्मणीक्षत्रियापुत्रौ द्वावेव विद्येते तत्र पञ्चधाकृते धने त्रयो भागा ब्राह्मणस्य द्वौ क्षत्रियापुत्रस्य अनयैव दिशा ब्राह्मणी वैश्यापुत्रादौ द्विजशूद्रपुत्रादौ च कल्पना कार्य्या ॥ १५१ ॥

सर्व्वम्वा रिक्थजातन्तु दशधा परिकल्प्य च।
धर्म्यं विभागं कुर्व्वीत विधिनानेन धर्म्मवित् ॥ १५२ ॥

सर्व्वमिति। यद्वा सर्व्वन्धनप्रकारमनुद्धृतोद्धारं दशधा कृत्वा विभागधर्म्माद्धर्म्मादनपेतं विभागं अनेन वक्ष्यमाण विधिना कुर्व्वीत ॥ १५२ ॥

चतुरोंऽशान्हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः।
वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरेत् ॥ १५३ ॥

चतुर इति। चतुरो भागान् ब्राह्मणो गृह्णीयात् त्रीन्

क्षत्रियापुत्रो द्वौ वैश्यापुत्रः एकं शूद्राजः अत्रापि ब्राह्मणी क्षत्रियापुत्रसद्भावे सप्तधा कृते धने चत्वारो भागा ब्राह्मणस्य त्रयः क्षत्रियापुत्रस्य एवं ब्राह्मणीवैश्यापुत्रादौ द्विवर्णपुत्रेषु च कल्पना कार्य्या॥१५३॥

यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्म्मतः॥१५४॥

यद्यपीति। यदि ब्राह्मणो द्विजातिस्त्रीषु सवर्णासु विद्यमानपुत्रः स्यात् अविद्यमानपुत्रो वा तथापि शूद्रापुत्रायानन्तराधिकारी यस्तेषु दशमभागादधिकं धर्म्मतो न दद्यात्। एवञ्च शूद्रापुत्रविषये निषेधादविद्यमानसजातिपुत्रस्य क्षत्रियावैश्यापुत्रौ सर्व्वधनहरौ स्यातां॥१५४॥

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥१५५॥

ब्राह्मणेति। ब्राह्मणक्षत्रियवैश्यानां शूद्रापुत्रो धनभाङ् न भवति किन्तु यदेव धनमस्मै पिता दद्यात्तदेव तस्य भवेत् एवञ्च पूर्व्वोक्तविभागनिषेधात् विकल्पः स च गुणवदगुणापेक्षः अथवा अनूढशूद्रापुत्रविषयोऽयन्दशमभागनिषेधः॥१५५॥

समवर्णासु ये जाताः सर्व्वे पुत्राद्विजन्मनाम् ।
उद्धारं ज्यायसे दत्वा भजेरन्नितरे समम् ॥ १५६ ॥

समवर्णास्विति। द्विजातीनां समानजातिभार्य्यासु ये पुत्राजाता स्ते सर्व्वे ज्येष्ठायोद्धारन्दत्वा अवशिष्टं समभागं कृत्वा ज्येष्ठेन सहान्ये विभजेरन् ॥ १५६ ॥

शूद्रस्य तु सवर्णैव नान्या भार्य्या विधीयते । तस्या ज्जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् ॥ १५७ ॥

शूद्रस्येति । शूद्रस्य पुनः समानजातीयैव भार्य्योपदिश्यते नोत्कृष्टा अपकृष्टा वा तस्याञ्च ये जातास्ते यदि पुत्रशतमपि तदा समभागाएव भवेयुः तेनोद्धारः कस्यचिन्न देयः ॥१५७ ॥

पुत्रान् द्वादश यानाह नृणां स्वायम्भुवोमनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥१५८॥

पुत्रानिति। यान् द्वादश पुत्रान् हैरण्यगर्भोमनुराह तेषां मध्यादाद्याः षड्बान्धवाः गोत्रदायादाश्च तस्माद्बान्धवत्वेन सपिण्डसमानोदकानां पिण्डोदकदानादि कुर्य्युरनन्तरा भावे च गोत्रदायं गृह्णन्ति पितृचक्षभाक्त्वाच पुत्राचक्षदराः

विद्युरिति द्वादशविधपुत्राणामेव वक्ष्यमाणत्वात्। उत्तरे षट् न गोत्रधनहरा भवन्ति बान्धवास्तु भवन्ति ततश्च बन्धुकार्य्यमुदकक्रियादि कुर्व्वन्ति। मेधातिथिस्तु षडदायादबान्धवा इत्युत्तरषट्कस्यादायादत्वमबान्धवत्वञ्चाह तन्न बौधायनेन बन्धुत्वस्याभिहितत्वात् तदाह। कानीनश्च सहोढश्च क्रीतं पौनर्भवन्तथा। स्वयन्दत्तनिषादश्च गोत्रभाजः प्रचक्षते ॥ १५८ ॥

औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएव च। गूढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट् ॥ १५९ ॥

औरसइति। औरसादयो वक्ष्यमाण लक्षणाः षट् पुत्रा दायादाबान्धवाश्च भवन्ति ॥ १५९ ॥

कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ १६० ॥

कानीनश्चेति। कानीनादयो वक्ष्यमाणलक्षणाः षट् गोत्रधनहरा न भवन्ति बान्धवाश्च भवन्तीति ॥ १६० ॥

याडशम्फलमाप्नोति कुप्लवैः सन्तरन् जलम्।
ताडशम्फलमाप्नोति कुपुत्त्रैः सन्तरंस्तमः॥ १६१॥

औरसेन सह क्षेत्रजादीनाम्पाठात्तुल्यत्वाशङ्कायां तन्निरा सार्थमाह याडशमिति। तृणादिनिर्मितकुत्सितोडुपादिभिरु दकन्तरन् यथाविधम्फलं प्राप्नोति तथाविधमेव कुपुत्त्रैः क्षेत्र जादिभिः पारलौकिकं दुःखं दुस्तरं प्राप्नोति इत्यनेन क्षेत्र जादीनां मुख्यौरसपुत्त्रवत्सम्पूर्णकार्य्यकरणक्षमत्वं न भवतीति दर्शितम्॥ १६१॥

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥ १६२॥

यदीति। अपुत्त्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयो रप्यसौ रिक्थी पिण्डदाता च धर्मत इति याज्ञवल्क्योक्तविषये यदा क्षेत्रिकस्य पितुः क्षेत्रजानन्तरमौरसः पुत्त्रोभवति तदा तावौरसक्षेत्रजौ एकस्य रिक्थिनौ एकस्य पितुर्द्व्यावपि रिक्थार्हौ भवतः तथापि यद्यस्य जनकसम्बन्धि धनं तदेव स गृह्णीयात् न क्षेत्रजः क्षेत्रिकपितुः। यत्तु वक्ष्यति षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पै तृकाद्धनात्। औरसोविभजन् दायमिति तत्पुत्रवदीजिविषयं। यत्तु याज्ञवल्क्येन। उभयसम्बन्धिरिक्थहरत्वमुक्तन्तत्क्षेत्रिक पितुरौरसपुत्त्राभावे बोद्धव्यं। मेधातिथिगोविन्दराजौ तु

औरसमनियुक्तापुत्रञ्च विवक्षीकृत्येमं श्लोकं व्याचष्टे। तत्र चानियुक्तापुत्रस्य क्षेत्रजत्वादनियुक्तासुतश्चेत्यनेन तस्य क्षेत्रजत्वनिषेधात् स्वोक्तव्याख्यानविरोध्यन्यथाच ॥ १६२ ॥

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥ १६३ ॥

एक इति। व्याध्यादिना प्रथममौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरसे उत्पन्ने सतीदमुच्यते औरस एवैकः पुत्रः पितृधनस्वामी शेषाणां क्षेत्रजव्यतिरिक्तानां तत्र षष्ठांशादेर्वक्ष्यमाणत्वात् पापसम्बन्धपरिहारार्थं ग्रासाच्छादनन्दद्यात् ॥ १६३ ॥

षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। औरसो विभजन्दायम्पित्र्यं पञ्चममेव वा ॥ १६४ ॥

षष्ठमिति। औरसः पुत्रः पितृधनमभिदायं विभजन् क्षेत्रजस्य ततः षष्ठमंशं पञ्चमं वा दद्यात् निर्गुणसगुणापेक्षश्चायं विकल्पः ॥ १६४ ॥

औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ १६५ ॥

औरसेति। औरसक्षेत्रजौ पुत्रावुक्तप्रकारेण पितृधनहरौ

ख्याता अन्ये पुनरेत्र दत्तकादयः पुत्रागोत्रभाजोभवन्ति पूर्व्वाभावेपरः परइत्येवं क्रमेण धनांशहरास्य ॥ १६५ ॥

स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात्पुत्रम्प्रथमकल्पितम् ॥ १६६ ॥

स्वइति । स्वभार्य्यायां कन्यावस्थायामेव कृतविवाह संस्कारायां यं स्वयमुत्पादयेत् तम्पुत्रं औरसं मुख्यं विद्यात् । सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसपुत्रं विद्यादिति बौधायनदर्शनात् सजातीयायामेव स्वयमुत्पादितऔरसो ज्ञेयः ॥ १६६ ॥

यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥ १६७ ॥

यइति । मोक्षतस्य नपुंसकस्य प्रसवविरोधिव्याध्युपेतस्य वा भार्य्यायां घृताभ्यक्तत्वादिनियोगधर्म्मेण गुरुनियुक्तायां जातः स क्षेत्रजः पुत्रोमन्वादिभिः स्मृतः ॥ १६७ ॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशम्प्रीतिसंयुक्तं स ज्ञेयोदत्रिमः सुतः ॥ १६८ ॥

मातेति । शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकः

तत्र प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति वसिष्ठ स्मरणात् माता पिता वा परस्परानुज्ञया यं पुत्रं परिग्रहीतुः समानजातीयं तत्रैव पुत्राभावनिमित्तायामापदि प्रीतियुक्तं न तु भयादिना उदकपूर्वं दद्यात् स दत्रिमाख्यः पुत्रो विज्ञेयः ॥१६८॥

सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥१६९॥

सदृशमिति। यम्पुनः समानजातीयम्पित्रोः पारलौकिक श्राद्धादिकरणाकरणाभ्यां गुणदोषौ भवत इत्येवमादिज्ञं पुत्रगुणैश्च मातापित्रोराराधनादियुक्तं पुत्रं कुर्यात् स कृत्रिमाख्यः पुत्रो बोद्धव्यः ॥१६९॥

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥१७०॥

उत्पद्यत इति। यस्य गृहे सवर्णितायाभार्य्यायां पुत्र उत्प द्यते सजातीयोऽयमस्तीति ज्ञानेपि कस्मात्पुरुषविशेषाज्जातो ऽयमिति न ज्ञायते स गृहे प्रच्छन्नमुत्पन्नस्तस्य पुत्रः यस्यैत स्याभार्य्यायां जातः ॥१७०॥

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ १७१ ॥

मातेति। मातापितृभ्यां त्यक्तं तयोरन्यतरमरणे अन्यतरेण वा त्यक्तं पुत्रं स्वीकुर्य्यात् सोपविद्धाख्यः पुत्र उच्यते॥१७१॥

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ १७२ ॥

पित्रिति। पितृगृहे कन्या यं पुत्रं अप्रकाशं जनयेत् तं कन्यापरिणेतुः पुत्रं नाम्ना कानीनं वदेत् ॥ १७२ ॥

या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ १७३ ॥

येति। या गर्भवती अज्ञातगर्भा ज्ञातगर्भा वा परिणीयते स गर्भस्तस्यां जातः परिणेतुः पुत्रो भवति सहोढ इति व्यपदिश्यते ॥ १७३ ॥

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा ॥ १७४ ॥

क्रीणीयादिति। यः पुत्रार्थं मातापित्रोः सकाशात् यं क्रीणीयात् स क्रीतकस्तस्य पुत्रो भवति क्रेतुर्गुणैस्तुल्यो हीनोवा भवेत्

न तस्य जातितः सादृश्यमपेक्षणीयम्। सजातीयेष्वयमौरसक्षेत्रजेषु मयाविधिरिति शास्त्रवचनेन सर्वेषामेव पुत्राणां सजातीयत्वाभिधानात् तेन मानवेऽपि क्रीतव्यतिरिक्ताः सर्वे पुत्राः सजातीया बोद्धव्याः ॥१७४॥

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥१७५॥

येति। या भर्त्रा परित्यक्ता मृतभर्तृका वा स्वेच्छया अन्यस्य पुनर्भार्या भूत्वा यमुत्पादयेत्स उत्पादकस्य पौनर्भवः पुत्र उच्यते ॥१७५॥

सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥१७६॥

साचेदिति। सा स्त्री यद्यक्षतयोनिः सत्यन्याश्रयेत्तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति यदा कौमारम्पतिमुत्सृज्यान्यमाश्रित्य पुनस्तमेव प्रत्यागता भवति तदा तेन कौमारेण भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति॥१७६॥

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥ १७७ ॥

मातेति। यो मृतमातापितृकस्त्यागोचितकारणं विना द्वेषादिना ताभ्यां त्यक्तो वा आत्मानं यस्मै ददाति स स्वयन्दत्ताख्यः तस्य पुत्रो मन्वादिभिः स्मृतः ॥ १७७ ॥

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्। स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७८ ॥

यमिति। विन्नास्वेषविधिः स्मृत इति याज्ञवल्क्यदर्शनात् परिणीतायामेव शूद्रायां ब्राह्मणः कामाद्यं पुत्रं जनयेत्स जीवन्नेव शवतुल्य इति पारशवः स्मृतः यद्यप्ययं पितुपकारार्थं श्राद्धादिकं करोति तथाप्यसंपूर्णोपकारकत्वात् शवव्यपदेशः ॥ १७८ ॥

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ १७९ ॥

दास्यामिति। ध्वजाहृतादिरूपायान्दास्यां दासपत्न्यां वा दास्यां शूद्रस्य यः पुत्रो जायते स पित्रा अनुज्ञात परिणीता पुत्रैः समानभागभाग्भवेदिति तुल्यभागं लभत इति शास्त्रव्यवस्था नियता ॥ १७९ ॥

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥१८०॥

क्षेत्रजेति। एतान् क्षेत्रजादीन् एकादश पुत्रान्पुत्रोत्पादन विधिलोपः पुत्रकर्त्तव्यश्राद्धादिलोपश्च माभूदित्येवमर्थं पुत्र प्रतिद्वन्द्वकान्मुनय आहुः ॥ १८० ॥

य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः।
यस्य ते बीजतोजातास्तस्य ते नेतरस्य तु ॥ १८१ ॥

यइति। य एते क्षेत्रजादयोऽन्यबीजोत्पन्नाः पुत्रा औरस पुत्रप्रसङ्गेनोक्ताः ते यद्बीजोत्पन्नास्तस्यैव पुत्रा भवन्ति न क्षेत्रिका देरिति सत्यौरसे पुत्रे पुत्रिकायाञ्च सत्यां न ते कर्त्तव्या इत्येव परमिदं अन्यबीजजादयेकादशपुत्रोपन्यासार्थं स्वबीजजाता अपि पौनर्भवगौढौ न कर्त्तव्यौ अतएव वृहस्पतिः। आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतं। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना ॥ १८१ ॥

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वां स्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ १८२ ॥

भ्रातॄणामिति। भ्रातॄणामेकमातापितृकाणां मध्ये यद्येकः

पुत्रवान् स्यात् अन्येच पुत्ररहितास्तदा तेनैकपुत्रेण सर्व्वाम्
भ्रातृव्यपुत्रानमनुरा ह ततश्च तस्मिन्सति अन्ये पुत्रप्रतिनिधयोन
कर्त्तव्याः सएव पिण्डदोंशहरश्च भवतीत्यनेनोक्तं एतच्च पत्नी
दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतइति याज्ञवल्क्य
वचनाद्भ्रातृपर्य्यन्ताभावे बोद्धव्यं॥ १८२॥

सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्म्मनुः॥ १८३॥

सर्वासामिति। एकपतिकानां सर्व्वासां स्त्रीणां मध्ये यद्येका
पुत्रवती स्यात्। तदा तेन पुत्रेण सर्व्वास्ताः पुत्रयुक्तामनुराह
ततश्च सपत्नीपुत्रे सति स्त्रिया न दत्तकादिपुत्राः कर्त्तव्या इत्येत
दर्थमिदं॥ १८३॥

श्रेयसः श्रेयसोभावे पापीयान्रिक्थमर्हति। बह
वश्चेत्तु सदृशाः सर्व्वे रिक्थस्य भागिनः॥ १८४॥

श्रेयसइति। औरसादीनां सर्वेषां पुत्राणामुक्तत्वात् औरस
सादीनुपक्रम्य तेषां पूर्वः पूर्वः श्रेयान्स एव दायहरः सचान्या
न्बिभृयादिति विष्णुवचनात्। औरसादीनां पुत्राणां पूर्वपूर्वा
भावे परःपरश्चरिक्थमर्हति पूर्व्वसद्भावे परसंवर्द्धनं सएव
कुर्य्यात्। एवञ्च विद्धे पुत्रत्वे शूद्रापुत्रस्य दायदपुत्रमध्ये पाठः

क्षेत्रजादिसद्भावे समानवर्णत्वापन्नवर्णमिदं वाचकः अन्यथा तु कृत्रिमादेरपुत्रवदौरसत्वात् क्षेत्रजादिसद्भावेऽपि धनं लभेत। पूर्वोक्तं परत्वबङ्गनमाचक्षापवादेतरविषये द्रष्टव्यं क्षेत्रजपुत्रद त्तकपुत्रयोः पञ्चमं षष्ठं वा भागं औरसो दद्यादिति विहित त्वात्। यदि तु समानरूपाः पौनर्भवादयो बहवः पुत्रास्तदा सर्वेऽप्य विभज्य रिक्थं गृह्णीयुः ॥१८४॥

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च ॥१८५॥

नेति। न सोदरभ्रातरो न पितरः किन्तु औरसाभावे क्षेत्र जादयो गौणपुत्राः पितृरिक्थहरा भवन्तीति अर्थेनोक्ते औरस स्य तु एकस्यैवौरसः पुत्रस्त्वेनैव सिद्धत्वात्। अविद्यमान मुख्यामुख्यपुत्रस्य पत्नीदुहितृरहितस्य च पिता धनं गृह्णीयात् तेषां मातृपित्रभावे भ्रातरो धनं गृह्णीयुः एतच्चानन्तरं स्पष्टयि ष्यामः ॥१८५॥

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते। चतुर्थः
सम्प्रदातैषां पञ्चमो नोपपद्यते ॥१८६॥

इदानीं क्षेत्रजादीनामपुत्रपितामहादिधनेष्वधिकारं दर्शयितुमाह त्रयाणामिति। त्रयाणां पित्रादीनां उदकदान

च

कार्यं त्रिभ्य एव च तेभ्यः पिण्डोऽदेयः चतुर्थश्च पिण्डोदकदा
तॄणां पञ्चमश्चात्र सम्बन्धो नास्ति तथाप्यपुत्रपितामहादि
धने पौत्रप्रपौत्राणामधिकारः औरसपुत्रपौत्रयोश्च पुत्रेण
लोकान् जयतीत्यनेनैव पितामहादिधनभागित्वमुक्तम् ॥१८६॥

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् । अत
ऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्य एव वा ॥१८७॥

अनन्तर इति । अस्य सामान्यवचनस्यौरसादिसपिण्ड
मात्रविषयत्वे वैयर्थ्यात्तत्पत्न्यादिदायप्राप्त्यर्थमिदं ।
सपिण्डमध्यात्सन्निकृष्टतरो यः सपिण्डः पुमान् स्त्री वा तस्य
मृतधनं भवति तत्रैक एवौरसः पुत्र इत्युक्तत्वात्स एव मृतधने
ऽधिकारी क्षेत्रजगुणवद्दत्तकयोस्तु यथोक्तं पञ्चमं षष्ठं वा
भागं दद्यात् कृत्रिमादिपुत्राणां संवर्द्धनमात्रं कुर्य्यात्। औरसा
भावे पुत्रिकातत्पुत्रयोः। दौहित्र एव च हरेदपुत्रस्याखिलन्धन
मित्युक्तत्वादौरसपुत्रसहित एव तत्पुत्रो विवक्षितः तदभावे
क्षेत्रजादय एकादशपुत्राः क्रमेण पितृधनाधिकारिणः। परि
णीतशूद्रापुत्रस्तु दशमभागमात्राधिकारी नाधिकन्दशमाद्
यात् शूद्रापुत्राय नेत्याद्युक्तत्वात् दशमभागावशिष्टन्धनं सन्नि
कृष्टसपिण्डो गृह्णीयात् त्रयोदशविधपुत्राभावे पत्नी सर्व्वभर्तृ
धनभागिनी। यदाह याज्ञवल्क्यः। पत्नी दुहितरश्चैव पितरौ

हरेद्धनं इति वचनमप्यस्मात् विज्ञायते । तदभावे सगोत्रोऽपि सपिण्डसपिण्डोऽमृतधनं गृह्णीयात् । तथाच पितामहसन्ताने ऽविद्यमाने प्रपितामहसन्तानएव एवमन्यदप्यूह्यं अतऊर्द्ध्वं सपिण्डसन्तानाभावे समानोदकआचार्य्यः शिष्यस्य क्रमेण धनं गृह्णीयात् ॥ १८७ ॥

सर्व्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते ॥ १८८ ॥

सर्व्वेषामिति । एषामभावइति वक्तव्ये सर्व्वेषामभावइति वचनमन्तरोक्ताचार्य्यादेरपि धनहारित्वार्थं सर्व्वेषामभावे ब्राह्मणा वेदत्रयाध्यायिनो वाह्याभ्यन्तरशौचयुक्ताजितेन्द्रियाधनहारिणो भवन्ति तएव च पिण्डदाः तथासति धनिनोमृतस्य श्राद्धादिधर्म्महानिर्न भवति ॥ १८८ ॥

अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।
इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः ॥ १८९ ॥

अहार्य्यमिति । ब्राह्मणस्वामिकधनं न राज्ञा कदाचिद्ग्राह्य मिति शास्त्रमर्य्यादा किन्तूक्तसर्वब्राह्मणाभावे ब्राह्मण

न्यायेऽपि इदं यतिव्यादिधनं पुनः पूर्वोक्तधनहराभावे राजा गृह्णीयात्॥१८९॥

संस्थितस्यानपत्यस्य सगोत्रात्पुत्रमाहरेत्। तत्र यद्रिक्थजातं स्यात्तत्तस्मिन् प्रतिपादयेत्॥१९०॥

संस्थितस्येति। अनपत्यस्य मृतस्य भार्या समानगोत्रात् पुंसो गुरुनियुक्ता सती नियोगधर्मेण पुत्रमुत्पादयेत् तस्मिन् मृतविषये यत् धनजातं भवेत्तत्तस्मिन् पुत्रे समर्पयेत्। इदं राज्ञा सपिण्डाद्वा इत्युक्तत्वात् सगोत्राभियोगप्राप्त्यर्थं तस्य च धनभागित्वार्थमिदम्॥१९०॥

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने। तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः॥१९१॥

द्वाविति। यद्येकस्त्रियां जातास्त्रियोरन्यतरस्यैकस्यौरस सिद्धयोरन्यपौनर्भवविषयं यद्दोत्तयोरन्यभर्त्तुर्धनत्वात् याज्ञा पत्नतया स्वामिधनं नीतस्य पौनर्भवभर्त्तुः सकाशात्पुत्रान्तरं जनयेत् तथापि च पौनर्भवस्य भर्त्तुर्धनत्वात् धनहरान्तरा भावात् धनं गृहीतवती यथा नौ द्वाभ्यां जातौ यदि विवदे

यातां स्त्रीहस्तगतधनं तदा तयोर्वंश्यजनकसम्बन्धि धनं स तदेव गृह्णीयात् नत्वन्यपितृकोऽन्यजनकस्य ॥ १९१ ॥

जनन्यां संस्थितायान्तु समं सर्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ १९२ ॥

जनन्यामिति । मातरि मृतायां सोदर्य्यभ्रातरो भगिन्यश्च सोदर्य्या अनूढाः मातृधनं समं कृत्वा गृह्णीयुः ऊढास्तु धनानुरूपं सम्मानं लभन्ते । तदाह वृहस्पतिः । स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी । अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् । ततश्चानूढानाम्पितृधनदवोढानां मातृधनं भ्रात्रा स्वांशं चतुर्थभागोदेयः ॥ १९२ ॥

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात् किञ्चित्प्रदेयं प्रीतिपूर्व्वकं ॥ १९३ ॥

यास्तिति । तासां दुहितॄणां या अनूढा दुहितरः ताभ्योऽपि मातामहीधनाद्यथा तासां पूजा भवति तथा प्रीत्या किञ्चिद्दातव्यम् ॥ १९२ ॥

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ १९४ ॥

अध्यग्नीति । अध्यग्नीत्यव्ययं विभक्तिसमीपेत्यादिना समीपार्थे अव्ययीभावः विवाहकाले अग्निसन्निधौ यत्पित्रादिदत्तं तदध्यग्नि स्त्रीधनं तदाह कात्यायनः । विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् । यत्तु पितृगृहाद्भर्तृगृहं नीयमानया लब्धं तदध्यावाहनिकम् । तथाच कात्यायनः । यत्पुनर्लभते नारी नीयमाना तु पैतृकात् । अध्यावाहनिकन्नाम तत् स्त्रीधनमुदाहृतम् । यत्तु प्रीतिहेतुकर्मणि भर्त्रादिदत्तं तथा भ्राता पित्रा मात्रा वा यद्दत्तं एवं षट्प्रकारकं स्त्रीधनं स्मृतम् ॥ १९४ ॥

अन्वाधेयञ्च यद्दत्तम्पत्या प्रीतेन चैव यत् । पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनमभ्यवेत् ॥ १९५ ॥

अन्वाधेयमिति । अन्वाधेयं व्याख्यातं कात्यायनेन । विवाहात्परतो यत्तु लब्धं भर्तृकुले स्त्रिया । अन्वाधेयन्तदुक्तन्तु लब्धं बन्धुकुले तथा । विवाहादूर्द्ध्वं भर्तृकुले पितृकुले वा यत् स्त्रिया लब्धं भर्त्रा च प्रीतेन दत्तं यत् तदन्वाधेयादि पूर्वोक्तषट्प्रकारं भर्तरि जीवति मृतायाः स्त्रियाः सर्वधनं तदपत्यानां भवति ॥ १९५ ॥

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु। अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ १९६ ॥

ब्राह्मेति। ब्राह्मादिषु पञ्चसु विवाहेषूक्तलक्षणेषु यत्स्त्रियः षड्विधन्धनं तदनपत्यायां मृतायां भर्तुरेव मन्वादिभिरिष्यते ॥ १९६ ॥

यत्त्वस्याः स्याद्धनन्दत्तं विवाहेष्वासुरादिषु। अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥ १९७ ॥

यदिति। यत्पुनः स्त्रिया आसुरराक्षसपैशाचेषूक्तलक्षणेषु विवाहेषु यत्स्त्रियाः षड्विधमपिधनं तदनपत्यायां मृतायां मातापित्रोरिष्यते ॥ १९७ ॥

स्त्रियान्तु यद्भवेद्वित्तम्पित्रा दत्तं कथञ्चन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥ १९८ ॥

स्त्रियामिति। ब्राह्मणस्य नानाजातीयासु स्त्रीषु क्षत्रियादिस्त्रियामनपत्यपतिकायां मृतायां तस्याः पितृदत्तं धनं सजातिविजातिसापत्न्यकन्यापुत्रसद्भावेऽपि ब्राह्मणी सापत्नेयी कन्या गृह्णीयात्तदभावे तदपत्यस्य तद्धनम्भवेत् ॥ १९८ ॥

न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया ॥ १९९ ॥

नेति । बहुसाधारणात्कुटुम्बधनात् भार्य्यादिभिः स्त्रीभिरलङ्कारार्थं धनसञ्चयनं कर्त्तव्यं नापि च भर्त्तुराज्ञां विना भर्त्तृधनादपि कार्य्यं ततश्च नेदं स्त्रीधनम् ॥ १९९ ॥

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ २०० ॥

पत्याविस्यादि । भर्त्तरि जीवति तदनुज्ञया योऽलङ्कारः स्त्रीभिर्धृतः तस्मिन्मृते विभागकाले तं पुत्रादयो न भजेरन् । भजमानाः पापिनोभवन्ति ॥ २०० ॥

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥ २०१ ॥

अनंशाविति । नपुंसकपतितजात्यन्धजन्मबधिरोन्मत्तजड मूकाः ये च कुणिपंग्वादयोविकलेन्द्रियास्ते पित्रादिधनहरा न भवन्ति किन्तु ग्रासाच्छादनभागिनः ॥ २०१ ॥

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तम्पतितो ह्यददद्भवेत् ॥ २०२ ॥

तदेवाह सर्व्वेषामिति। सर्व्वेषामेषां क्लीवादीनां शास्त्रज्ञेन धनव्यवहारिणा यावज्जीवं दातव्यम् ग्रासाच्छादनमददत् महद्त्पापी स्यात् ॥ २०२ ॥

यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥ २०३ ॥

यदीति। कथञ्चनेत्यभिधानात् क्लीवादयोविवाहानर्हा इति सूचितं यदि कथञ्चिदेषां विवाहेच्छा भवेत् तदा क्लीवस्य क्षेत्रज उत्पन्ने तेषामुत्पन्नापत्यानामपत्यं धनभाग्भवति ॥२०३॥

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागोयवीयसान्तत्र यदि विद्यानुपालिनः ॥ २०४ ॥

यत्किञ्चिदिति। पितरि मृते सति भ्रातृभिः सहाविभक्तो ज्येष्ठः यत्किञ्चित् स्वेन पौरुषेण धनं लभते ततोधनात् विद्याभ्यासवतां कनिष्ठभ्रातॄणां भागो भवति नेतरेषाम् ॥ २०४ ॥

अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनं भवेत्। सम स्तत्र विभागः स्यादपित्र्य इति धारणा॥ २०५॥

अविद्यानामिति। सर्व्वेषां भ्रातॄणां कृषिवाणिज्यादि चेष्टया यदि धनं स्यात् तदा पित्र्यवर्ज्जिते तस्मिन् धने स्वार्ज्जिते समो विभागः स्यात् नद्ध्युद्धार इति निश्चयः॥ २०५॥

विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्। मैत्र्य मौद्वाहिकञ्चैव माधुपर्किकमेव च॥ २०६॥

विद्येति। विद्यामैत्रीविवाहार्जितं माधुपर्किकं मधुपर्क दानकाले पूज्यतया यल्लब्धं तस्यैव स्यात् यत्किञ्चित् पितरी त्यस्यायमपवादः। विद्याधनञ्च व्याहृतं कात्यायनेन। पर भक्तप्रदानेन प्राप्ता विद्या यदान्यतः। तया प्राप्तञ्च विधिना विद्याप्राप्तन्तदुच्यते। उपन्यस्ते च यल्लब्धं विद्यया पणपूर्व कम्। विद्याधनन्तु तद्विद्यात् विभागे न विभज्यते। शिष्यादा र्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादा ल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत्प्राहुर्विभागे न विभज्यते॥ मैत्रौद्वाहिकयोर्विद्याविरहेऽपि माधुपर्किक मविभाज्यत्वं व्याख्यातं तदप्युक्तं विद्याधनत्वात्॥ २०६॥

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा। स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम्॥२०७॥

भ्रातॄणामिति। राजानुगमनादिकर्मणा यो धनमर्जितुं शक्तो भ्रातॄणां साधारणं धनं नेच्छति स स्वीयादंशात् किञ्चिदुपजीवनन्दत्त्वा भ्रातृभिः पृथक्कार्य्यः तेन तत्पुत्रास्तत्र धने कालान्तरे न विवदन्ते॥२०७॥

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेत्। स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥२०८॥

अनुपघ्नन्निति। पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्ज्जयेत् तत् स्वचेष्टाप्राप्तमनिच्छन् भ्रातृभ्यो दातुं नार्हति॥२०८॥

पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्। न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्ज्जितम्॥२०९॥

पैतृकमिति। यत्पुनः पितृसम्बन्धिधनं तेनासामर्थ्येनोपेक्षितत्वादनवाप्तं पुनः स्वशक्त्या प्राप्नुयात्तत्स्वयमर्जितमनिच्छन् पुत्रैः सह न विभजेत्॥२०९॥

विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि । सम
स्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥ २१० ॥

विभक्ता इति । पूर्वं सोद्धारं निरुद्धारं वा विभक्ता भ्रातरः पश्चादेकीकृत्य धनं सहजीवन्तो यदि पुनर्विभागं कुर्वन्ति तदा तत्र समो विभागः कार्यः ज्येष्ठस्योद्धारो न देयः ॥ २१० ॥

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ २११ ॥

येषामिति । येषां भ्रातॄणां मध्ये कश्चिद्विभागकाले प्रव्रज्यादिना स्वांशाद्धीयेत मृतो वा भवेत्तस्य भागो न लुप्येत ॥ २११ ॥

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥ २१२ ॥

किन्तु सोदर्या इत्यादि । सोदर्या भ्रातरः समागम्य सहिताः भगिन्यश्च सोदर्यास्तमंशं समं कृत्वा विभजेरन् सोदर्याणां संसृष्टानामपि मध्यात् ये भिन्नोदरसंसृष्टास्तेऽपि तमंशं विभजेयुः न सर्वे सोदर्याः संसृष्टाश्च । एतच्च पुत्रपत्नीपितृमात्रभावे द्रष्टव्यम् ॥ २१२ ॥

यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥२१३॥

योज्येष्ठ इति। यो ज्येष्ठो भ्राता लोभात्कनीयसो भ्रातॄन् वञ्चयेत्स ज्येष्ठभ्रातृपूजाशून्यः सोद्धारभागरहितश्च राजदण्ड्यश्च स्यात्॥२१३॥

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्। न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम्॥२१४॥

सर्व एवेति। अपतिता अपि ये भ्रातरो द्यूतवेश्यासेवादिविकर्मासक्तास्ते धनं नार्हन्ति न च कनिष्ठेभ्योऽननुदत्त्वा ज्येष्ठः साधारणधनादात्मार्थमसाधारणधनं कुर्यात्॥२१४॥

भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह। न पुत्रभागं विषमं पिता दद्यात्कथञ्चन॥२१५॥

भ्रातॄणामिति। भ्रातॄणां पितृधनसहितानां अविभक्तानां यदि सह धनार्जनेऽनुत्थानं भवेत्तदा विभागकाले न कस्यचित्पुत्राधिकम्पिता कदाचिद्दद्यात्॥२१५॥

ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह॥२१६॥

ऊर्द्धमिति। यदा जीवतैव पित्रा पुत्राणामिच्छया विभागः कृतः तदा विभागादूर्द्धं जातः पुत्रः पितरि मृते पितृधन मेव गृह्णीयात्। ये कृतविभागाः पित्रा सह पुनर्विमिश्रीकृतध नास्तैः सहासौ पितरि मृते विभजेत्॥२१६॥

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥२१७॥

अनपत्यस्येति। अनपत्यस्य पुत्रस्य धनं माता गृह्णीयात् पूर्वं पिता हरेत्पुत्रस्य धनमित्युक्तत्वात् इह माता हरेदित्यनेन याज्ञवल्क्येन पितरावित्येकशेषकरणात्। विष्णुना च अपुत्र धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामी त्येकशेषेणैव कृतत्वात् मातापितरौ विभज्य गृह्णीयातां। मातरि मृतायां पत्नीपितृभ्रातृभ्रातृव्याभावे पितुर्माता धनं गृह्णीयात्॥२१७॥

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किंचित्तत्सर्वं समतां नयेत्॥२१८॥

ऋणइति। ऋणे पित्रादिधार्यमाणे धने च तदीये सर्वस्मिन्

यथाशास्त्रं विभक्ते सति पश्चाद्यत्किञ्चित्पैतृकं ऋणमृणं वा विभागकालेऽज्ञातमुपलभेत तत्सर्वं समं कृत्वा विभजनीयं न तु शोध्यं दाप्यं न वा ज्येष्ठस्योद्धारो देयः ॥ २१८ ॥

वस्त्रम्पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः। योगक्षेमम्प्रचारञ्च न विभाज्यं प्रचक्षते ॥ २१९ ॥

वस्त्रमिति। वस्त्रं वाहनमाभरणं यदविभागकाले येनोप भुक्तं तत्तस्यैव न विभाज्यं एतच्च नातिन्यूनाधिकमूल्यविषयं यत्तु बहुमूल्यमाभरणादिकन्तद्विभाज्यमेव तद्विषयमेव विक्रीय वस्त्राभरणमिति बृहस्पतेर्व्विभागवचनं कृतान्नमोदन मण्डकादि तन्न विभजनीयं तथातिप्रचुरतरमूल्यं मण्डकादि ताव न्मात्रमूल्यधनेन कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यत इति बृहस्पतिवचनाद्विभजनीयमेव उदकं कूपादिगतं पर्य्यायेणोपभो ग्यमविभजनीयं स्त्रियो दास्याद्यायास्तुल्यभागा न भवन्ति ता न विभाज्याः किन्तु तुल्यं कर्म्म कारयितव्याः योगक्षेमं मन्त्रि पुरोहितादि योगक्षेमहेतुत्वात् प्रचारो गवादीनां प्रचारमार्गः एतत्सर्व्वं मन्वादयोऽविभाज्यमाहुः ॥ २१९ ॥

अयमुक्तो विभागो वः पुत्राणाञ्च क्रियाविधिः। क्रमशः क्षेत्रजादीनां द्यूतधर्मं निबोधत ॥ २२० ॥

अयमिति। एष दायभागः पुत्राणां क्षेत्रजादीनां क्रमेण

विभागकरणप्रकारो यथाक्रममुक्तः। इदानीं द्यूतसमाह्वयौ शृणुत ॥ २२० ॥

द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवारयेत्। राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ २२१ ॥

द्यूतमिति। द्यूतसमाह्वयौ वक्ष्यमाणलक्षणौ राजा स्वराष्ट्रान्निवर्त्तयेत् यस्मादेतौ द्वौ दोषौ राज्ञां राज्यविनाशकारिणौ ॥ २२१ ॥

प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ। तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥ २२२ ॥

प्रकाशमिति। प्रकटमेतच्चौर्यं यत् द्यूतसमाह्वयौ तस्मात्तन्निवारणे राजा नित्यं यत्नयुक्तः स्यात् ॥ २२२ ॥

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥ २२३ ॥

अप्राणिभिरिति। अक्षशलाकादिभिरप्राणिभिर्यत्क्रियते तल्लोके द्यूतं कथ्यते यः पुनः प्राणिभिः मेषकुक्कुटादिभिः पणपूर्वकं क्रियते स समाह्वयो ज्ञेयः लोकप्रसिद्धयोरप्यनयोर्लक्षणकथनं परिहारार्थम् ॥ २२३ ॥

द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा। तान्स
र्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः॥ २२४॥

द्यूतमिति। द्यूतसमाह्वयौ यः कुर्य्यात् योवा सभिकः कारयेत्तेषामपराधापेक्षया राजा हस्तच्छेदादिवधं कुर्य्यात्। यज्ञोपवीतादिद्विजचिह्नधारिणः शूद्रान् हन्यात्॥ २२४॥

कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान्।
विकर्म्मस्थान् शौण्डिकांश्च क्षिप्रं निर्व्वासयेत्पुरात्॥२२५॥

कितवानिति। द्यूतादिसेविनोनर्त्तकगायनान्वेदविद्विषः श्रुतिस्मृतिवाह्यव्रतधारिणः अनापदि परकर्म्मजीविनः शौण्डिकान् मद्यकरान् मनुष्यान् क्षिप्रं राजा राष्ट्रान्निर्व्वासयेदिति कितवप्रसङ्गेनान्येषामप्यभिधानं॥ २२५॥

एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः।
विकर्म्मक्रियया नित्यम्वाधन्ते भद्रिकाः प्रजाः॥२२६॥

अत्र हेतुमाह एतइति। एते कितवादयोगूढचौरारराज्ञो राष्ट्रे वसन्तो नित्यं वञ्चनात्मकक्रियया सज्जनान् पीडयन्ति ॥ २२६॥

द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत्। तस्मा
द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्॥ २२७॥

द्यूतमिति। नेदानीमेवेदं किन्तु पूर्व्वस्मिन्नपि कल्पे द्यूत
मेतदतिशयेन वैरकरं दृष्टं अतः प्राज्ञः परिहासार्थमपि तन्न
सेवेत॥२२७॥

प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः।
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा॥ २२८॥

प्रच्छन्नमिति। यो मनुष्यः तत् द्यूतं गूढमप्रकटं वा कृत्वा
सेवेत तस्य यथा नृपतेरिच्छा भवति तथाविधो दण्डो भवति।
॥२२८॥

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।
आनृण्यं कर्म्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥२२९॥

इदानीं पराजितानां धनाभावे प्रतीकारमाह क्षत्रेति। क्षत्र
वैश्यशूद्रजातीयो निर्द्धनत्वेन धनं दातुमसमर्थः तदुचितकर्म्म
करणेन धनशोधनं कुर्य्यात्। ब्राह्मणः पुनः यथालाभं क्रमेण
दद्यात् कर्म्मकारयितव्यः॥२२९॥

स्त्रीबालोन्मत्तवृद्धानान्दरिद्राणाञ्च रोगिणां ।
शिफाविदलरज्ज्वाद्यैर्व्विदध्यान्नृपतिर्दमम्॥ २३०॥

स्त्रीति। स्त्रीबालादीनां पुनः शिफावेणुदलप्रहाररज्जुबन्धनादिभिर्द्दमनं राजा कुर्य्यात्॥ २३०॥

येनियुक्तास्तु कार्य्येषु हन्युः कार्य्याणि कार्य्यिणां।
धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः॥२३१॥

ये नियुक्तास्त्विति। ये व्यवहारावेक्षणादिषु कार्य्येषु राज्ञा नियुक्ता उत्कोचधनतेजसा विकारं भजन्तः अर्थ्यादीनां कार्य्याणि नाशयेयुः तान् गृहीतसर्व्वस्वान् राजा कारयेत् ॥ २३१॥

कूटशासनकर्तॄंश्च प्रकृतीनाञ्च दूषकान्। स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥ २३२॥

कूटेति। कूटराजशासनलेखकान् अमात्यानाञ्च भेदकान् स्त्रीबालब्राह्मणघातिनः शत्रुसेविनश्च राजा हन्यात्॥ २३२॥

तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्।
कृतन्तद्धर्म्मतोविद्यान्न तद्भूयोनिवर्त्तयेत्॥ २३३॥

तीरितमिति। यत्र क्वचिदृणादानादिव्यवहारे सत्कार्य्यं

धर्मेणेति तीरितं पारं नीतं कार्यमाप्तावधि पुरादौ पाठात् यत्र व्यवहारनिर्णीतं अनुशिष्टं दण्डपर्यन्ततां नीतं स्यात् तत्कृतमङ्गीकुर्यात् न पुनर्निवर्तयेत्। एतच्चाकारणात् अतः कारणवशात् निवर्तयेदेव॥२३३॥

अमात्याः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथा।
तत्स्वयं नृपतिः कुर्यात्तान्सहस्रं च दण्डयेत्॥२३४॥

अमात्या इति। राजामात्याः प्राड्विवाको वा व्यवहारेक्षणे नियुक्ता यदन्यथा व्यवहारनिर्णयं कुर्युः तत्स्वयं राजा कुर्यात् पणसहस्रञ्च तान् दण्डयेत्। इदञ्चोत्कोचधनग्रहणेतर विषयं उत्कोचग्रहणे ये नियुक्तास्त्वित्युक्तत्वात्॥२३४॥

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः। एते
सर्वे पृथग्ज्ञेया महापातकिनो नराः॥२३५॥

ब्रह्महेति। यो मनुष्यो ब्राह्मणं हतवान् स ब्रह्महा सुरापो द्विजातिः पैष्ट्याः पाता ब्राह्मणश्च पैष्टीमाध्वीगौडीनां तस्करो ब्राह्मणसुवर्णहारी मनुष्यश्च कश्चिद्गुरुपत्नीगामी एते सर्वे प्रत्येकं महापातकिनो ज्ञेयाः॥२३५॥

चतुर्णामपि चैतेषामप्रायश्चित्तमकुर्व्वताम्।
शारीरं धनसंयुक्तन्दण्डं धर्म्यम्प्रकल्पयेत्॥ २३६ ॥

चतुर्णामिति। चतुर्णामप्येषां महापातकिनां प्रायश्चित्तम कुर्व्वतां शारीरं धनग्रहणेन च धनसम्बन्धं अपराधानुसारेण धर्मादनपेतं वक्ष्यमाणदण्डं कुर्य्यात्॥ २३६ ॥

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्॥२३७॥

गुरुतल्पइति। नांक्या राज्ञा ललाटे स्युः इतिवक्ष्यमाणत्वात् ललाटमेवाङ्कनस्थानमवगम्यते तत्र गुरुपत्नीगमने यावज्जीवस्थायि तप्तलोहेन ललाटे भगाकृतिं गुरुपत्नीगमनचिह्नं कार्य्यं एवं सुरापाने कृते पातुर्दीर्घं सुराध्वजाकारं सुवर्णापहारे सत्यपहर्त्तुः कुक्कुरपादरूपं कार्य्यं ब्रह्महणि कबन्धः पुमान् कर्त्तव्यः॥ २३७ ॥

असम्भोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः।
चरेयुः पृथिवीं दीनाः सर्व्वधर्म्मबहिष्कृताः॥२३८॥

असंभोज्याइति। ब्राह्मणादिकेनैते भोजयितव्या न चैतेषामनीयाः

नाध्येते नाध्यापनीया नाध्येतैः कन्यादानसम्बन्धः कर्त्तव्यः एते च निर्धनत्वात् याचनादिदैन्ययुक्ताः सर्वश्रौतादिकर्मवर्जिताः पृथ्वीमटेयुः ॥ २३८ ॥

ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनं ॥ २३९ ॥

ज्ञातीति। ज्ञातिभिः सम्बन्धिभिर्मातुलाद्यैरेते कृतलाञ्छनास्त्यजनीयाः नचैषां दया कार्या नाप्येते नमस्कार्या इतीदं मनोराज्ञा ॥ २३९ ॥

प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितम्।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसं ॥ २४० ॥

प्रायश्चित्तमिति। शास्त्रविहितं प्रायश्चित्तम्पुनः कुर्व्वाणा ब्राह्मणादयस्त्रयो वर्णा राज्ञा ललाटे अङ्कनीया न भवेयुः उत्तमसाहसं पुनर्दण्डनीयाः ॥ २४० ॥

आगःसु ब्राह्मणस्यैव कार्य्यो मध्यमसाहसः।
विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः ॥ २४१ ॥

आगःस्विति। इतरे ब्रह्मवधादिष्वित्युत्तरश्लोके श्रूयमाणाऽ

कामतइति अत्रापि योजनीयं तेनाकामतइति इत्यपराधेषु गुणवतो ब्राह्मणस्य मध्यमसाहसो दण्डः कार्य्यः पूर्व्वोक्तस्तूत्तम साहसो निर्गुणस्य द्रष्टव्यः कामतस्त्वेष्वपराधेषु धनधान्यादि परिच्छदसहितो ब्राह्मणो देशान्निर्व्वास्यः॥ २४१ ॥

इतरे कृतवन्तस्तु पापान्येतान्यकामतः। सर्व्वस्व हारमर्हन्ति कामतस्तु प्रवासनम्॥ २४२ ॥

इतरइति। ब्राह्मणादन्ये पुनः क्षत्रियादयः एतानि पापानि अनिच्छन्तः कृतवन्तः सर्व्वस्वहरणमर्हन्ति इदञ्च सर्व्वस्वहरणं पूर्व्वोक्तेनोत्तमसाहसेन सह वृत्तापेक्षया व्यवस्थापनीयं इच्छया पुनरेषामेतेष्वपराधेषु प्रवासनमर्होंहंति प्रवासनम्मारणम जिस्वहनं निर्हिंसनमिति वधपर्य्यायं प्रवासनशब्दं पठन्त्याभि धानिकाः॥ २४२ ॥

नाददीत नृपः साधुर्म्महापातकिनो धनम्। आद दानस्तु तल्लोभात्तेन दोषेण लिप्यते॥ २४३ ॥

नाददीतेति। धार्म्मिको राजा महापातकिसम्बन्धिधनं दण्डरूपं न गृह्णीयात् लोभात् पुनस्तद्गृह्णन् महापातकदोषेण संयुज्यते॥ २४३ ॥

अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत्। श्रुत
वृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥ २४४॥

का तर्हि दण्डधनस्य प्रतिपत्तिरित्येतदर्थमाह अप्स्विति।
तद्दण्डधनं नद्यादिजले प्रक्षिप्य वरुणाय दद्यात् श्रुतवृत्तसम्पन्नाय
ब्राह्मणाय वा दद्यात्॥ २४४॥

ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः।
ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः॥ २४५॥

ईश इति। महापातकिदण्डधनस्य वरुणः स्वामी यस्मा
द्राज्ञामपि दण्डधारित्वात् प्रभुः तथा ब्राह्मणः समस्तवेद
स्वामी सर्व्वस्य जगतः प्रभुः अतः प्रभुत्वात्तौ दण्डधनमर्हतः
॥ २४५॥

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम्। तत्र
कालेन जायन्ते मानवा दीर्घजीविनः॥ २४६॥
निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक्।
बालाश्च न प्रमीयन्ते विकृतञ्च न जायते॥ २४७॥

यत्रेति। निष्पद्यन्त इति। यत्र देशे प्रकृतं महापातकि
धनं राजा न गृह्णाति तत्र परिपूर्णेन कालेन मनुष्या उत्प

द्य

यन्ते दीर्घायुषश्च भवन्ति। वैश्यानाञ्च यथैव धान्यादिशस्या न्युप्तानि तथैव पृथक् पृथक् आयन्ते अकाले न बाला म्रियन्ते दीर्घजीविनश्च्युत्पत्त्यादराथं बालानां पुनर्वपनं अद्भुतं न किञ्चित् भूतमुत्पद्यते ॥ २४६ ॥ २४७ ॥

ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्।
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८ ॥

ब्राह्मणानिति। शरीरपीडाधनग्रहणादिना शूद्रमिच्छातो ब्राह्मणान् बाधमानं हस्तच्छेदादिभिरुद्वेगकरैर्वधोपायैर्नृपो हन्यात् ॥ २४८ ॥

यावानवध्यस्य वधे तावान् बध्यस्य मोक्षणे।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥ २४९ ॥

यावानिति। अवध्यस्य वधे यावानधर्मो नृपतेः शास्त्रेण ज्ञातः तावानेव बध्यस्य त्यागेपि यथाशास्त्रं दण्डं कुर्वतो धर्मः स्यात्तस्मात् कुर्य्यात् ॥ २४९ ॥

उदितोयं विस्तरशो मिथो विवदमानयोः। अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥

उदितइति। अष्टादश ऋणादानादिषु व्यवहारपदेषु पर

सरं विवदमानयोरर्थिप्रत्यर्थिनोः कार्य्यनिर्णयोयं विस्तरेणोक्तः ॥ १५० ॥

एवं धर्म्याणि कार्य्याणि सम्यक्कुर्व्वन्महीपतिः।
देशानलब्धांल्लिप्सेत लब्धांश्च परिपालयेत् ॥ २५१ ॥

एवमिति। अनेनोक्तप्रकारेण धर्म्मादनपेतान् व्यवहारान् निर्णयन् राजा जनानुरागात् अलब्धान् देशान् लब्धुमिच्छेत् लब्धांश्च सम्यक् पालयेत् एवं सम्यग्व्यवहारदर्शनस्यालभ्यदेशप्राप्तिफलमुक्तम् ॥ २५१ ॥

सम्यग्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः। कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥

सम्यगिति। वास्तुलं ग्रस्यपाद्यं इत्युक्तरीत्या सम्यगाश्रितदेशस्तु यथाशास्त्रोक्तप्रकारेण कृतदुर्गश्चौरसाहसिकादिकण्टकनिराकरणे प्रकृष्टयत्नं सदा कुर्य्यात् ॥ २५२ ॥

रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात्।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥ २५३ ॥

रक्षणादिति। यथाशास्त्राचारिणां रक्षणाच्चौरादीनाञ्च

ग्रामवात् प्रजापालनविमुखो राजाधः स्वर्गं गच्छति। तस्मात्
कण्टकोद्धरणे यत्नं कुर्य्यात् ॥ २५३ ॥

अभयस्य हि यो दाता स पूज्यः सततं नृपः। सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥ २५३ ॥

अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥ २५४ ॥

अशासन्निति। यथापुनर्नृपतिश्चौरादीननिराकुर्व्वन् षड्भा
गाद्युक्तं करं गृह्णाति तस्मै राष्ट्रवासिनो जनाः कुप्यन्ति
कर्मान्तरार्जिताच्च स्वर्गप्राप्तिरनेन दुष्कृतेन प्रतिबध्यते
॥ २५४ ॥

निर्भयन्तु भवेद्यस्य राष्ट्रम्बाहुबलाश्रितम्। तस्य
तद्वर्द्धते नित्यं सिच्यमान इव द्रुमः ॥ २५५ ॥

निर्भयमिति। यस्य राज्ञोबाहुवीर्य्याश्रयेण राष्ट्रं चौरादि
भयरहितम्भवति तस्य नित्यन्तद्वृद्धिं गच्छति उदकसेकेनेव
वृक्षः ॥ २५५ ॥

द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारकान्।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ २५६ ॥

द्विविधानिति। चारा एव चौरज्ञाने हेतुत्वात् चक्षुरिव यस्यासौ

राजा चारैरेव प्रकटमूढतया द्विप्रकारान् परधनग्राहिणो जानीयात् ॥ २५६ ॥

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः ।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः ॥ २५७ ॥

प्रकाशेति । तेषां पुनश्चौरादीनां मध्याद्ये तुलाप्रतिमानोपचयापचयादिना हिरण्यादिपण्यविक्रयिणः परधनमनुचितेन गृह्णन्ति ते प्रकाशवञ्चकाः स्तेनाः चौराः सन्धिच्छेदादिना गुप्ताः अटव्याश्रयाश्च परधनं गृह्णन्ति ते प्रच्छन्नवञ्चकाः ॥ २५७ ॥

उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा ।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥ २५८ ॥
असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः ।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ॥ २५९ ॥
एवमादीन्विजानीयात्प्रकाशाँल्लोककण्टकान् ।
निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः ॥ २६० ॥

किञ्चोत्कोचका इति । असम्यगिति । एवमिति । उत्कोचका ये कार्यिभ्यो धनं गृहीत्वा कार्यमयुक्तं कुर्वन्ति चौपाधिका

भयदर्शनात् ये धनमुपजीवन्ति वञ्चका ये सुवर्णादिद्रव्यं गृहीत्वाऽपद्रव्यप्रक्षेपेण वञ्चयन्ति कितवाः द्यूतसमाह्वयदेविनः धनपुत्रलाभादिमङ्गलममलमादिश्य ये वर्त्तन्ते ते मङ्गला देशवृत्ताः भद्राः कल्याणाचारप्रच्छन्नपापाये धनग्राहिणः ईक्षणिका हस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीविनः महामात्या हस्तिशिक्षाजीविनः चिकित्सकाः चिकित्साजीविनः अयम्यक्षारिण इति महामात्यचिकित्सकविशेषणं शिल्पोपचार युक्ताश्चित्रलेखाद्युपायजीविनः तेप्यनियुज्यमानशिल्पोपाय प्रोत्साहनेन धनं गृह्णन्ति। पण्यस्त्रियश्च परवशीकरणकुशला इत्येवमादीन् प्रकाशलोकवञ्चकान् चारैर्जानीयात्। अन्या नपि प्रच्छन्नचारिणः शूद्रादीन् ब्राह्मणादिवेशधारिणो धन ग्राहिणो जानीयात्॥ २५८॥ २५९॥ २६०॥

तान्विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः।
चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्॥ २६१॥

तानिति। तानुक्तान्वञ्चकान्सभ्यैः प्रच्छन्नैस्तत्कर्म्मकारिभि र्व्वणिजांस्तेये वणिग्भिरित्येवमादिभिः पुरुषैरेतद्व्रतिरिक्तैः चरममात्यायोपदिष्टकापटिकादिभिश्चारैरनेकस्थानस्थैर्ज्ञात्वा प्रोत्साद्य स्ववशान् कुर्य्यात्॥ २६१॥

तेषां दोषानभिख्याप्य स्वे स्वे कर्म्मणि तत्त्वतः।
कुर्वीत शासनं राजा सम्यक् सारापराधतः॥२६२॥

तेषामिति। तेषां प्रकाशाप्रकाशतस्कराणां स्वकर्म्मणि चौर्य्यादौ ये पारमार्थिका दोषाः सन्धिच्छेदादयः तान् लोके प्रख्याप्य तद्गतधनशरीरादिसामर्थ्यापेक्षया अपराधापेक्षया च राजा दण्डं कुर्य्यात्॥२६२॥

न हि दण्डादृते शक्यः कर्त्तुं पापविनिग्रहः। स्तेनानां पापबुद्धीनान्निभृतञ्चरतां क्षितौ॥२६३॥

न हीति। यस्माच्चौराणां पापाचरणबुद्धीनां विनीतवेषेण पृथिव्याञ्चरतां दण्डव्यतिरेकेण पापक्रियायां नियमं कर्त्तुं मशक्यं अतएषां दण्डं कुर्य्यात्॥२६३॥

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः। चतु
ष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च॥२६४॥
जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च।
शून्यानि चाप्यगाराणि वनान्युपवनानि च॥२६५॥
एवं विधान्नृपो देशान् गुल्मैः स्थावरजङ्गमैः।
तस्करप्रतिषेधार्थञ्चारैश्चाप्यनुचारयेत्॥२६६॥

सभेति। जीर्णेति। एवमिति। सभा ग्रामनगरादौ नियतं

जनसमूहस्थानप्रपा जलदानगृहं अपूपविक्रयवेश्म फलस्त्रीगृहं मद्यान्नविक्रयस्थानानि चतुष्पथाः प्रख्यातवृक्षमूलानि जनसमूहस्थानानि जीर्णवाटिका अटव्यः शिल्पगृहाणि शून्यगृहाणि आमादिवनानि कृत्रिमोद्यानानि एवं प्रकारान् देशान् सैन्यैः पदातिसमूहैः स्थावरजंगमैः एकस्थानस्थितैः प्रचारिभिश्चान्यैश्चारैश्च तस्करनिवारणार्थं प्रचारयेत् प्रायेणैवंविधे देशेऽन्नपानस्त्रीसम्भोगाद्यन्वेषणार्थं तस्करा प्रवतिष्ठन्ते ॥ २६४॥२६५॥२६६॥

तत्सहायैरनुगतैर्नानाकर्म्मप्रवेदिभिः। विद्यादुत्सादयेच्चैव निपुणैः पूर्व्वतस्करैः॥ २६७॥

तदिति। तेषां चाराणामतिपापसमागैस्तच्चरितानुवृत्तिभिः सन्धिच्छेदादिकर्म्मानुष्ठानवेदिभिः पूर्व्वचौरैश्चारकृपैश्चैरमाचानिपुणैः तस्करान् अभीयादुत्सादयेच ॥ २६७ ॥

भक्ष्यभोज्योपदेशैश्च ब्राह्मणानाञ्च दर्शनैः। शौर्य्यकर्म्मापदेशैश्च कुर्य्युस्तेषां समागमम्॥ २६८ ॥

भक्ष्येति। ते पूर्व्वचौराश्चारभूता आगच्छत अस्मद्गृहं गच्छामः तत्र मोदकपायसादीन्यश्नीमः इत्येवम्भक्ष्यभोज्यव्याजेनाकार्क

देशे ब्राह्मणोऽपि चौरनिग्रहविचारसिद्धिं जानाति तत्रगच्छाम इत्येवं ब्राह्मणानां दर्शनैः कश्चिदेकएव बहुभिः सह योत्स्यति तमत्रा म इत्येवं शौर्यकर्मव्याजेन तेषां चौराणां राज्ञो रक्षाधिकार पुरुषाः समागमं कुर्युः ग्राहयेयुश्च ॥ २६८ ॥

ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये । तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान् ॥ २६९ ॥

य इति । ये चौराश्च भक्ष्यभोज्यादौ निपुणमत्या नोपसर्पन्ति ये च मूले राजनियुक्तपुरुषचौरवर्गे प्रणिहिताः सावधानभूताः न तैः सह सङ्गतिं भजन्ते तांश्चौरांश्चेष्टयैव ज्ञात्वा सहैव तान्पुत्रमित्रपित्रादिज्ञातिबान्धवसहितान् बलात्प्रसह्य राजा हन्यात् ॥ २६९ ॥

न होढेन विना चौरं घातयेद्धार्मिको नृपः । सहोढं सोपकरणं घातयेदविचारयन् ॥ २७० ॥

न होढेनेति । धार्मिको राजा हृतद्रव्यसन्धिच्छेदोपकरण व्यतिरेकेणानिश्चितचौरभावं न घातयेत् किन्तु हृतद्रव्येण चौर्योपकरणेन च निश्चितचौरभावमविचारयन् घातयेत् ॥ २७० ॥

स

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्व्वांस्तानपि घातयेत् ॥२७१॥

ग्रामेष्विति। ग्रामादिष्वपि ये केचिच्चौराणां चौरत्वं ज्ञात्वा भक्तदाः चौर्य्योपयुक्तभाण्डादिगृहावकाशं ये ददति तानपि चौरकार्य्यापराधगौरवापेक्षया घातयेत् ॥ २७१ ॥

राष्ट्रेषु रक्षाधिकृतान् सामन्तांश्चैव चोदितान् । अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतं ॥ २७२ ॥

राष्ट्रेष्विति। ये राष्ट्रेषु रक्षा नियुक्ताः ये च सीमान्तवासिनोऽङ्कुराः यतः चौर्य्योपद्रवे मध्यस्था भवन्ति तान् चौरवत् क्षिप्रं दण्डयेत् ॥ २७२ ॥

यश्चापि धर्म्मसमयात् प्रच्युतो धर्म्मजीवनः । दण्डेनैव तमप्योषेत् स्वकाद्धर्म्माद्धि विच्युतं ॥ २७३ ॥

यश्चापीति। याजनप्रतिग्रहादिना परस्य यागदानादि धर्म्ममुत्पाद्य यो जीवति स धर्म्मजीवनो ब्राह्मणः सोपि धर्म्ममर्य्यादायाश्च्युतो भवति तमपि स्वधर्म्मात्परिभ्रष्टं दण्डेनोपतापयेत् ॥ २७३ ॥

ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने । शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥२७४॥

ग्रामेति । ग्रामलुण्ठने तस्करादिभिः क्रियमाणे हिताभङ्गे जलसेतुभङ्गे जाते । क्षेत्रसस्यरक्षणार्थे वृत्तिभङ्गे चेति मेधातिथिः । पथि चौरदर्शने तन्निकटवर्त्तिनो यथाशक्तितो ये रक्षां न कुर्वन्ति ते शय्यागवाश्वादिपरिच्छदसहिता देशान्निर्वासनीयाः ॥२७४॥

राज्ञः कोषापहर्त्तॄंश्च प्रतिकूलेषु च स्थितान् । घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥२७५॥

राज्ञ इति । राज्ञो धनहरान् धनापहारिणश्च तथा आज्ञाघातकारिणः प्रभूतांश्च राज्ञा सह वैरवृद्धिकारिणोऽपराधापेक्षया करचरणजिह्वाच्छेदनादिभिर्नानाप्रकारदण्डैर्घातयेत् ॥२७५॥

सन्धिं छित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः । तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥२७६॥

सन्धिमिति । ये रात्रौ सन्धिच्छेदं कृत्वा परधनं तस्करा

मुष्णन्ति तेषां राजा हस्तद्वयं छित्त्वा तीक्ष्णे शूले ताम्रारोपयेत् ॥ २७६ ॥

अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ २७७ ॥

अङ्गुलीरिति । पटप्रान्तादिस्थितं सुवर्णादिकं ग्रन्थिमो चनेन यश्चोरयति स ग्रन्थिभेदः तस्य प्रथमे द्रव्यग्रहणे अङ्गुली च्छेदयेत् ते चाङ्गुष्ठतर्जन्यौ । उत्क्षेपकग्रन्थिभेदौ करसन्दंश हीनकाविति याज्ञवल्क्यवचनात् । द्वितीये ग्रहणे हस्तपादौ छेदयेत्तृतीये ग्रहणे वधार्हो भवति ॥ २७७ ॥

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः ॥ २७८ ॥

अग्निदानिति । ग्रन्थिभेदादिकारिणो विज्ञाय अग्निभक्त शस्त्रावस्थानप्रदान् मुष्यत इति मोषश्चौरधनं तस्यावस्थापकान् चौरवद्राजा निगृह्णीयात् ॥ २७८ ॥

तडागभेदकं हन्यादप्सु शुद्धवधेन वा । तद्वापि
प्रतिसंस्कुर्य्याद्दाप्यस्तूत्तमसाहसम् ॥ २७९ ॥

तडागेति । यः स्नानदानादिना जनोपकारकं तडागं भेद

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यादमेध्यञ्चाशु शोधयेत्॥ २८२॥

समुत्सृजेदिति। अनार्त्तः सन् यो राजपथेषु पुरीषं कुर्य्यात्स कार्षापणद्वयन्दण्डं दद्यात्तञ्चामेध्यं शीघ्रमेवापसारयेत्॥२८२॥

आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव वा। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥ २८३॥

आपद्गत इति। व्याधितवृद्धगर्भिणीबाला न दण्डनीयाः किन्तु ते पुनः किं कृतमिति परिभाषणीयाः तच्चामेध्यं शोधनीयमिति शास्त्रमर्य्यादा॥ २८३॥

चिकित्सकानां सर्व्वेषां मिथ्याप्रचरतां दमः। अमानुषेषु प्रथमो मानुषेषु तु मध्यमः॥ २८४॥

चिकित्सकानामिति। सर्व्वेषां कायशल्यादिभिषजां दुश्चिकित्सां कुर्व्वतान्दण्डः कर्त्तव्यः तत्र गवाश्वादिविषये दुश्चिकित्सायां प्रथमसाहसन्दण्डो मानुषविषये पुनर्मध्यमसाहसः॥ २८४॥

संक्रमध्वजयष्टीनाम्प्रतिमानाञ्च भेदकः। प्रतिकुर्य्याच्च तत्सर्व्वं पञ्च दद्याच्छतानि च॥ २८५॥

संक्रमेति। संक्रमो जलोपरिगमनार्थेष्टकाकाष्ठादिरचितः

ध्वजः चिह्नं राजद्वारादौ यष्टिः पुष्करिण्यादौ प्रतिमाश्च पुरा स्वमयाद्यवस्थानां विनाशकः पञ्चशतपणान् दद्यात् तच्च विनाशितं सर्व्वम्पुनर्नवं कुर्य्यात् ॥ २८५ ॥

अदूषितानां द्रव्याणान्दूषणे भेदने तथा। मणीनामपवेधे च दण्डः प्रथमसाहसः ॥ २८६ ॥

अदूषितानामिति। अदुष्टद्रव्याणां अपद्रव्यप्रक्षेपेण दूषणे मणीनाञ्च माणिक्यादीनां अभेद्यानां विदारणे वेध्यानामपि मुक्तादीनामनवस्थानवेधने प्रथमसाहसो दण्डः कार्य्यः सर्व्वच परकीयद्रव्यनाशे द्रव्याक्तरदानादिना स्वामितुष्टिः कार्य्या ॥ २८६ ॥

समैर्हि विषमं यस्तु चरेद्वै मूल्यतो पि वा। स प्राप्नुयाद्दमम्पूर्व्वन्नरो मध्यममेव वा ॥ २८७ ॥

समैरिति। समैः समभूल्यदातृभिः सहोत्कृष्टापकृष्टद्रव्यदानेन यो विषमं व्यवहरति समभूल्यं द्रव्यन्तरा च कस्यचिदल्पमूल्यं कस्यचिदधिकमूल्यमितिविषमं मूल्यं ददाति सोऽनुबन्धविशेषापेक्षया प्रथमसाहसं मध्यमसाहसं वा दण्डं प्राप्नुयात् ॥ २८७ ॥

बन्धनानि च सर्व्वाणि राजमार्गे निवेशयेत्। दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः ॥ २८८॥ प्राकारस्य च भेत्तारम्परिखाणाञ्च पूरकम्। द्वाराणाञ्चैव भङ्क्तारं चिप्रमेव प्रवासयेत्॥ २८९॥

बन्धनानीति। प्राकारस्येति। बन्धनगृहाणि सर्व्वाणि नहड्डी राजमार्गे कुर्य्यात् यत्र निगडबन्धनाद्युपेताः क्षुत्तृष्णाभिभूता दीर्घकेशनखश्मश्रवः कृशाः पापकारिणोऽन्यैरकार्य्यकारिभिर कार्य्यनिवृत्त्यर्थं दृश्येरन् राजा गृहपुरादिसम्बन्धिनः प्राका रस्य भेदकन्तदीयानामेव परिखाणां पूरयितारं तद्गतानां द्वाराणाञ्च भञ्जकं शीघ्रमेव देशान्निर्व्वासयेत्॥ २८८॥ २८९॥

अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः। मूल कर्म्मणि चानाप्तैः कृत्यासु विविधासु च॥ २९०॥

अभिचारेष्विति। अभिचारहोमादिषु शास्त्रीयेषु मारणो पायेषु लौकिकेषु च मूलखननपदपांश्वग्रहणादिषु कृतेषु अनुत्पन्नमरणफलेषु द्विशतपणपरिमाणो दण्डः कर्त्तव्यः। मरणे तु मानुषमारणदण्डः एवं मातापितृभार्य्यादिव्यतिरिक्तै रनाप्तैर्व्वाशीकरणार्थं वशीकरणे तथा कृत्यास्वचाट नाद्युच्चाटनादिहेतुषु क्रियमाणासु नानाप्रकारासु द्विशतपण दण्ड एव कर्त्तव्यः॥ २९०॥

अबीजविक्रयी चैव बीजोत्कृष्टस्तथैव च । मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम् ॥ २९१ ॥

अबीजेति । अबीजं यदप्ररोहणसमर्थं व्रीह्यादिप्ररोहणसमर्थमिति कृत्वा योविक्रीणीते तथा अपकृष्टमेव कतिपयोत्कृष्टप्रक्षेपेण सर्व्वमिदं बीजोत्कृष्टमिति कृत्वा योविक्रीणीते यश्च ग्रामनगरादिसीमां विनाशयति स विकृतनासाकरचरणकर्णादिरूपं वधमाप्नुयात् ॥ २९१ ॥

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः । प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥ २९२ ॥

सर्व्वेति । सर्व्वकण्टकानां मध्ये अतिशयेन पापतमं सुवर्णकारं तुलाच्छद्मकपरिवर्त्तापह्नवप्रक्षेपादिना हेमादिचौर्य्ये प्रवर्त्तमानं अनुबन्धापेक्षयाङ्गविशेषेषु सर्व्वदेहं लवशः छेदयेत् ॥ २९२ ॥

सीताद्रव्यापहरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥ २९३ ॥

सीतेति । कृष्यमाणभूमिद्रव्याणां हलकुद्दालादीनामपह

ण

रणे वस्त्रादीनाञ्च मन्त्राणां शौचस्य च कल्याणवृतादेः चौर्य्यं वस्तुपयोगकालेतरकालापेक्षया प्रयोजनापेक्षया च राजा दण्डं कुर्य्यात् ॥ २९३ ॥

स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा।
सप्तप्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥ २९४ ॥

स्वामीति। स्वामी राजा अमात्यो मन्त्र्यादिः पुरं राज्ञः कृत दुर्गनिवासनगरं राष्ट्रं देशः कोषो वित्तनिचयः दण्डो हस्त्यश्व रथपादातं मित्रं त्रिविधं सप्तमाध्यायोक्तमित्येताः सप्त प्रकृतयो ऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते ॥ २९४ ॥

सप्तानाम्प्रकृतीनान्तु राज्यस्यासां यथाक्रमम्।
पूर्व्वम्पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत् ॥ २९५ ॥

ततः किमित्याह सप्तानामिति। आसां राज्यस्य प्रकृतीनां सप्तानां क्रमोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याः पूर्व्वस्या विनाशरूपं व्यसनं गरीयो जानीयात्। तथाहि मित्रव्यसनात् बलव्यसनं गरीयः सम्पन्नबलस्यैव मित्रानुग्रहे सामर्थ्यात्। एवम्बलात्कोषो गरीयान् कोषनाशे बलस्यापि नाशात् कोषा द्राष्ट्रं गरीयः राष्ट्रनाशे कुतः कोषोत्पत्तिः एवं राष्ट्राद्दुर्गनाशोऽपि

दुर्गादेव यथोक्तमनादिसम्बन्धाद्राज्यरक्षाविधिः दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्वाङ्गवैकल्यात्। अमात्यादपि आत्मा सर्वचात्मार्थत्वात् तस्मादुत्तरापेक्षया पूर्वं यत्नतो रक्षेत् ॥ २९५ ॥

सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत्।
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ॥ २९६ ॥

सप्तेति। उक्तसप्ताङ्गवतो लोके राज्यस्य त्रिदण्डवदन्योन्य सम्बन्धस्य परस्परविलक्षणोपकरणान्न किञ्चिदङ्गमधिकं भवति यद्यपि पूर्वश्लोके पूर्वपूर्वाङ्गस्याधिक्यमुक्तं तथाप्येतामङ्गानां मध्यादन्याङ्गसम्बन्धिनमपकारमन्यदङ्गं कर्तुं न शक्नोति तस्मादुत्तरोत्तराङ्गमप्यपेक्षणीयमित्येवमतोऽस्माधिक्यनिषेधः अत एवोक्तं यतित्रिदण्डमेव दृष्टान्तः तद्धि चतुरङ्गुलगोवालवेष्टनादन्योन्यसम्बन्धस्य च तस्याश्च त्रिदण्डधारणमात्रार्थे कश्चिद्दण्डोऽधिको भवति ॥ २९६ ॥

तेषु तेषु तु कृत्येषु तत्तदङ्गं विशिष्यते। येन यत्साध्यते कार्यं तत्तस्मिन् श्रेष्ठमुच्यते ॥ २९७ ॥

तेष्विति। यस्मात्तेषु तेषु यत्साध्येषु कार्येषु तत्तदङ्गं वातिशयं भवति तत्कार्यमन्येन कर्तुमशक्तेः एवञ्च येनाङ्गेन

यत्कार्य्यं सम्पाद्यते तस्मिन् कार्य्ये तदेव प्रधानमुच्यते। ततश्चा श्योऽन्यगुणविशेषादिष्वङ्गं तदेवाङ्गेन स्वीकृतम्॥२९७॥

चारेणोत्साहयोगेन क्रिययैव च कर्म्मणां। स्वशक्तिं परशक्तिञ्च नित्यं विद्यान्महीपतिः॥२९८॥

चारेणेति। चरमाध्यायोक्तकापटिकादिना चरणोत्साहयोगेन कर्म्मणाञ्च हविप्लवपणिक्रयादीनामनुष्ठानेन जाता शत्रोरात्मनश्च शक्तिं राजा सदा जानीयात्॥२९८॥

पीडनानि च सर्व्वाणि व्यसनानि तथैव च। आरभेत ततः कार्य्यं सञ्चिन्त्य गुरुलाघवम्॥२९९॥

पीडनानीति। पीडनानि मरकादीनि कामक्रोधोद्भवानि दुःखानि च स्वपरचक्रगतानि तेषाञ्च गुरुलघुभावं पर्य्यालोच्य सन्धिविग्रहादिकार्य्यमारभेत॥२९९॥

आरभेतैव कर्म्माणि श्रान्तः श्रान्तः पुनःपुनः। कर्म्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते॥३००॥

आरभेतेति। राजा स्वराज्यवृद्धिपरापचयनिमित्तानि

कार्याणि कल्पयिदिदं यथारब्धमिति कृतान्यपि चारभ्यारभ्य खिन्नः पुनः पुनस्तान्यारभेतैव यस्मात्कर्माण्यारभमाणं पुरुषं श्रीर्नितरां सेवते तथा च नानाश्रये नानाश्रये श्रीरस्तीति प्रतो चितमपि श्रीरयमेति अत युगानुरूपेण कर्माणि कल्पयतीति राज्ञोपदेशितव्यं ॥ ३०० ॥

कृतं त्रेतायुगञ्चैव द्वापरङ्कलिरेव च । राज्ञो वृत्तानि सर्व्वाणि राजा हि युगमुच्यते ॥ ३०१ ॥

यतः कृतमिति । कृतत्रेताद्वापरकलयो राज्ञ एव चेष्टितविशेषाः तैरेव सत्यादिविशेषप्रवृत्तेः तस्माद्राजैव कृतादियुगम भिधीयते ॥ ३०१ ॥

कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम् । कर्म्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥ ३०२ ॥

कीदृक् चेष्टितं कृतादियुगमित्यत आह कलिरिति । यथा ज्ञानालस्यादिना यदा निद्रयमाणो राजा भवति तदा कलिः स्यात् । यदा जानन्नपि नानुतिष्ठति तदा द्वापरं । यदा कर्म्मानुष्ठाने यत्नवांस्तदा त्रेता । यथाशास्त्रं पुनः कर्म्माण्यनुतिष्ठन् विचरति तदा कृतयुगमतो राज्ञा कर्म्मानुष्ठानपरेण भाव्यमिति श्लोकतात्पर्य्यं न तु वास्तवकृतयुगाद्यभिधायः ॥ ३०२ ॥

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजो वृत्तं नृपश्चरेत् ॥ ३०३ ॥

इन्द्रस्येति। इन्द्रादिसम्बन्धिनो वीर्यस्यानुरूपश्चरितं राजानुतिष्ठेत्तथा च राजा कण्टकोद्धारेण प्रतापानुरागाभ्यां संयुक्तः स्यात् ॥ ३०३ ॥

वार्षिकांश्चतुरो मासान् यथेन्द्रो ऽभिप्रवर्षति। तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥ ३०४ ॥

कथमिन्द्रादिचरितमनुतिष्ठेदित्याह वार्षिकानिति। चतुःसंवत्सरपक्षाश्रयणेन इदमुच्यते यथा श्रावणादींश्चतुरो मासानिन्द्रः शस्यादिवृद्धये वर्षति एवमिन्द्रचरितं अनुतिष्ठन् राजा स्वदेशायातसाधूनभिलषितार्थैः पूरयेत् ॥ ३०४ ॥

अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ३०५ ॥

अष्टाविति। यथा सूर्यो मार्गशीर्षाद्यष्टमासान् रश्मिभिः स्तोकं स्तोकं रसमीषत्तापेनादत्ते तथा राजा राष्ट्रीयकरान्पीडया सदा राष्ट्राद्गृह्णीयात् यस्मादेतदर्कव्रतम् ॥ ३०५ ॥

प्रविश्य सर्व्वभूतानि यथा चरति मारुतः।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम्॥ ३०६॥

प्रविश्येति। यथा प्राणाख्यो वायुः सर्व्वजन्तुष्वन्तःप्रविश्य विचरति एवञ्चारद्वारेण स्वपरमण्डलेषु चिकीर्षितार्थज्ञानार्थमन्तः प्रवेष्टव्यम्। यस्मादेतन्मारुतचरितम्॥ ३०६॥

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम्॥ ३०७॥

यथेति। यद्यपि यमस्य शत्रुमित्रे न स्तस्तथापि तन्निग्रहकार्यकयोः शत्रुमित्रव्यपदेशः यथा यमः शत्रुमित्रमरणकाले तुल्यवन्नियच्छति एवं राज्ञाऽपराधकाले रागद्वेषपरिहारेण प्रजाः शासनीयाः यस्मादेतदस्य याम्यं व्रतम्॥ ३०७॥

वरुणेन यथा पाशैर्ब्बद्धएवाभिदृश्यते। तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम्॥ ३०८॥

वरुणेनेति। यो वरुणस्य रज्जुभिर्बन्धयितुमिष्टः स यथा तेनाभिसन्धितः पाशैर्बद्धएव लक्ष्यते तथा पापकारिणोऽपि सन्धिताएव यावत् पारयन्ते तावच्छासयेत्। यस्मादेतदस्य वारुणं व्रतम्॥ ३०८॥

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥ २०९ ॥

परिपूर्णमिति। यथा पूर्णेन्दुदर्शनेन मनुष्या हर्षमुत्पादयन्त्येवममात्यादयो यस्मिन् दृष्टे तुष्टिमुपगच्छन्ति स चन्द्रव्रतचारी नरेन्द्रः ॥ २०९ ॥

प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु। दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ २१० ॥

प्रतापयुक्त इत्यादि। पापकारिषु सदा दण्डपातनेन प्रचण्डोऽद्भुतः स्यात्तथा प्रतिकूलामात्यहिंसनशीलो भवेत् तदस्याग्निसम्बन्धि व्रतं स्मृतम् ॥ २१० ॥

यथा सर्व्वाणि भूतानि धरा धारयते समम्।
तथा सर्व्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम्॥२११॥

यथेति। यथा पृथिवी सर्व्वाणि उच्चावचानि स्थावरजङ्गमानि उत्कृष्टापकृष्टानि समं कृत्वा धारयते तद्वत् विद्वद्गुणिकगुणवद्भूतानि तदितराणि च दीनानाथादिसर्व्वभूतानि रक्षणपालनदानादिना सामान्येन धारयतः पृथिवीसम्बन्धिव्रतं भवति ॥ २११ ॥

एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः । स्तेनान् राजा निगृह्णीयात्स्वराष्ट्रे परएव च ॥ ३१२ ॥

एतैरिति । एतैरुक्तोपायैरन्यैश्चानुक्तैरपि स्वबुद्धिप्रभवै र्युक्तो राजाऽनलसः सन् स्वराष्ट्रे ये चोरा वसन्ति ये च परराष्ट्रे वसन्तः स्वदेशमागत्य मुष्णन्ति तान् सम्यक्प्रकारान्निगृह्णीयात् सोऽग्निर्भवति वायुश्चेत्यादिना पूर्वं विद्रवद्गुणमन्वादिरूपत्वं राज्ञः इह तु तद्गुणयोगेन स्फुटीकृतनिग्रहगुणस्तुतिः ॥ ३१२ ॥

परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् । ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ३१३ ॥

परामिति । कोपनवचनादिना प्रकृष्टामप्यापदं प्राप्तो राजा ब्राह्मणान्न प्रकोपयेत् यस्मात्ते रुष्टाः सबलवाहनं एनं सद्य एव शापाभिचाराभ्यां हन्युः ॥ ३१३ ॥

यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः । क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥ ३१४ ॥

तथाहि यैरिति । यैर्ब्राह्मणैरभिशापेन सर्वभक्ष्योऽग्निः कृतः समुद्रश्चापेयजलः कृतः क्षयी चन्द्रः पश्चात्पूरितः तान् कोपयित्वा को न नश्येत् ॥ ३१४ ॥

लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः।
देवान् कुर्य्युरदेवांश्च कः क्षिण्वंस्तान्समृध्नुयात्॥३१५॥

किञ्च लोकानिति। ये स्वर्गादिलोकान् परानन्यांश्च लोकपालान् सृजन्तीति सम्भाव्यते देवांश्च शापेन मानुषादीन् कुर्व्वन्ति तान् पीडयन् कः समृद्धिमाप्नुयात्॥ ३१५॥

यानुपाश्रित्य तिष्ठन्ति लोकादेवाश्च सर्व्वदा।
ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः॥३१६॥

अपिच यानित्यादि। यान् ब्राह्मणान् यजनयाजनकर्तृकानाश्रित्याग्नौ प्रास्ताहुतिरितिन्यायेन पृथिव्यादिलोका देवाश्च स्थितिं लभन्ते वेदएव च येषां अभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च तान् जीवितुमिच्छन् कोहिंस्यात्॥ ३१६॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतम्महत्। प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतम्महत्॥ ३१७॥

एवन्तर्हि विद्वांसं ब्राह्मणं सेवेतेत्यतआह अविद्वानिति। यथाहितो ऽनाहितो वाग्निर्महती देवता एवं मूर्खो विद्वांश्च ब्राह्मणः प्रकृष्टादेवतेति॥ ३१७॥

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति। हूय
मानश्च यज्ञेषु भूयएवाभिवर्द्धते॥ ३१८॥

श्मशानेष्वित्यादि। यथाग्निर्महातेजाः श्मशाने शवदाह
कार्य्येऽपि नैव दुष्टो भवति किन्तु पुनरपि यज्ञेषु हूयमानोऽ
भिवर्द्धते॥ ३१८॥

एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्व्वकर्म्मसु। सर्व्वथा
ब्राह्मणाः पूज्याः परमन्दैवतं हि तत्॥ ३१९॥

एवमिति। एवं कुत्सितकर्म्मस्वपि सर्व्वेषु यद्यपि
ब्राह्मणाः प्रवर्त्तन्ते तथापि सर्व्वप्रकारैव पूज्याः यस्मात् प्रकृष्ट
तरदैवतं स्तुत्यर्थमात्रञ्च न यथाश्रुतार्थविरोधः ग्रहणीयः
॥ ३१९॥

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रति सर्व्वशः।
ब्रह्मैव सन्नियन्तृ स्यात्क्षत्रं हि ब्रह्मसम्भवम्॥ ३२०॥

क्षत्रस्येति। क्षत्रियस्य ब्राह्मणान् प्रति सर्व्वथा पीडासु

दृप्तस्य ब्राह्मणा एव शापाभिचारादिना सम्यङ्नियन्तारः यस्मा
त्क्षत्रियो ब्राह्मणात्सम्भूतः ब्रह्मणो वा ब्रह्मसम्भूतत्वात्॥ ३२०॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति॥ ३२१॥

तथा च अद्भ्य इति। जलब्राह्मणपाषाणेभ्योऽग्निक्षत्रियलोहान्युत्थि
तानि तेषां सम्बन्धि तेजः सर्वत्र दहनाभिभवच्छेदनात्मकं
कार्य्यं करोति स्वकारणेषु जलब्राह्मणपाषाणेषु दहना
भिभवच्छेदनरूपं कार्य्यं न करोति॥ ३२१॥

नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते। ब्रह्म
क्षत्रञ्च सम्पृक्तमिह चामुत्र वर्द्धते॥ ३२२॥

नेति। ब्राह्मणरहितः क्षत्रियो वृद्धिं न याति शान्तिकपौष्टिक
व्यवहारेक्षणादिधर्म्मविरहात्। एवं क्षत्रियरहितोऽपि ब्राह्मणो
न वर्द्धते रक्षां विना यागादिकर्मानिष्पत्तेः किन्तु ब्राह्मणः
क्षत्रियश्च परस्परसम्बद्ध एवेह लोके परलोके च धर्म्मार्थकाम
मोक्षावाप्त्या वृद्धिमेति। दण्डप्रकरणे चेयं ब्राह्मणस्तुतिः
ब्राह्मणानामपराधिनामपि वधदण्डप्रयोगे नियमार्था॥ ३२२॥

दत्वा धनन्तु विप्रेभ्यः सर्वदण्डसमुत्थितम्।
पुत्रे राज्यं समासज्य कुर्वीत प्रायणं रणे ॥ ३२३ ॥

यदात्मनिष्टदर्शनेनाचिकित्स्यव्याधिना वा आसन्नमृत्यु र्भवति तदा दत्वेति। महापातकिधनव्यतिरिक्तविनियुक्ता वशिष्टसर्वदण्डधनं ब्राह्मणेभ्यो दत्वा पुत्रे राज्यं समर्प्यासन्न मृत्युः फलातिशयप्राप्तये यद्धे प्राणत्यागं कुर्वीत। संग्रामा सम्भवे त्वनशनादिनापि ॥ ३२३ ॥

एवञ्चरन् सदायुक्तो राजधर्मेषु पार्थिवः ।
हितेषु चैव लोकस्य सर्वान् भृत्यान्नियोजयेत् ॥ ३२४ ॥

एवमिति। एवमध्यायद्वयोक्तराजधर्मेषु व्यवहरमाणो राजा सर्वदा यत्नवान् प्रजाहितेषु सर्वान् भृत्यान्विनियोज येत् ॥ ३२४ ॥

एषोऽखिलः कर्मविधिरुक्तो राज्ञः सनातनः ।
इमं कर्मविधिं विद्यात्क्रमशो वैश्यशूद्रयोः ॥ ३२५ ॥

एषइति। एतद्राज्ञः कर्मानुष्ठानं पारम्पर्यागततया नित्यं समयमुक्तं इदानीं वैश्यशूद्रयोःक्रमेण वक्ष्यमाणं इह कर्मानुष्ठानं जानीयात ॥ ३२५ ॥

वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम्।
वार्त्तायां नित्ययुक्तः स्यात्पशूनाञ्चैव रक्षणे ॥३२६॥

वैश्यस्त्विति। वैश्यः कृतोपनयनपर्य्यन्तसंस्कारः विवाहादिकं कृत्वा जीविकायां वक्ष्यमाणायां कृष्यादिकार्य्यार्थं पशुपालने च सर्व्वदा युक्तः स्यात्। पशुरक्षणस्य वार्त्तात्वेपि प्राधान्य ख्यापनार्थं पृथग्विधानं तथा चोत्तरश्लोकाभ्यां प्राधान्यन्दर्शयति॥ ३२६ ॥

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।
ब्राह्मणाय च राज्ञे च सर्व्वाः परिददे प्रजाः॥३२७॥

प्रजापतिरिति। यस्माद्ब्रह्मा पशून् सृष्ट्वा रक्षणार्थं वैश्याय दत्तवान् अतो वैश्येन रक्षणीयाः पशवइति पूर्व्वानुवादः। प्रजाश्च सर्व्वाः सृष्ट्वा ब्राह्मणाय राज्ञे च रक्षणार्थं दत्तवानिति प्रसङ्गादेतदुक्तम्॥ ३२७ ॥

न च वैश्यस्य कामः स्यान्न रक्षेयम्पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन॥ ३२८॥

नचेति। पशुरक्षणं न करोमीति वैश्येन इच्छा न कार्य्या

यतः कृष्यादिवृत्तिकत्वेपि वैश्येन पशुरक्षणमवश्यं करणीयं वैश्ये च पशुरक्षणं कुर्वत्यन्यः पशुरक्षणं न कारयितव्यः ॥३२८॥

मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च ।
गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥३२९॥

किञ्च मणीति। मणिमुक्ताविद्रुमलोहवस्त्राणां गन्धानां कर्पूरादीनां रसानां लवणादीनां उत्तममध्यमाधमानां देशकालापेक्षया मूल्योत्कर्षापकर्षौ वैश्यो जानीयात् ॥ ३२९ ॥

बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च ।
मानयोगं च जानीयात्तुलायोगांश्च सर्वशः ॥३३०॥

बीजानामिति। बीजानां सर्वेषां वपनविधिज्ञः स्यात्। इदं क्षेत्रमस्मिन् काले वप्तुं शक्यमस्मिन्नेवं तथेदमूषरमिदं प्रभूतसस्यमित्यादि क्षेत्रदोषगुणज्ञश्च स्यात्। मानोपायांश्च प्रस्थद्रोणादीन् तुलोपायांश्च कर्षादीन् तत्त्वतो जानीयात्। यथान्यो न वञ्चयति ॥ ३३० ॥

सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां परिवर्द्धनम् ॥३३१॥

सारेति। इदमुत्कृष्टमेतदपकृष्टमित्येकजातीयानामपि

द्रव्याणां विशेषं जानीयात्तथा देशानामाकूपखिलादीनां कृत्रिमव्ययमूल्यं किं वृद्धमूल्यं वेत्यादि देशगुणदोषौ कुर्वेत विक्रेयद्रव्याणां चेयता कालेन वृत्यानपचयं उपचयो वेति विद्यात्तथाऽस्मिन् देशे काले भनेन च लघोदकयवादिना पशवीवर्द्धन्ते अनेन चोषन्त इत्येतदपि जानीयात् ॥ ३३१ ॥

भृत्यानाञ्च भृतिं विद्याद्भाषाश्च विविधा नृणां।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥ ३३२ ॥

भृत्यानामिति। गोपालमहिषपालादीनामिदमत्र देयमिति देशकालकर्मानुरूपं वेतनञ्जानीयात्। गौडदाक्षिणात्यादीनाञ्च मनुष्याणांनानाप्रकाराभाषा विक्रयाद्यर्थं विद्यात्तथा इदन्द्रव्यमेवं स्थाप्यते अनेन च संयुक्तञ्चिरन्तिष्ठतीति कुर्वेत तथेदं द्रव्यमस्मिन् देशे काले चेयता विक्रीयत इत्येतदपि जानीयात् ॥ ३३२ ॥

धर्म्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम्। दद्याच्च सर्व्वभूतानामन्नमेव प्रयत्नतः ॥ ३३३ ॥

धर्म्मेणेति। धर्म्मेण विक्रयतादिना उक्तप्रकारेण धनवृद्धौ प्रकृष्टं यत्नं कुर्य्यात् हिरण्यादिदानमपेक्ष्यान्नमेव प्राणिभ्यो विशेषेण दद्यात् ॥ ३३३ ॥

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः ॥ ३३४ ॥

विप्राणामिति । शूद्रस्य पुनर्वेदविदां गृहस्थानां स्वधर्मानुष्ठानेन यशोयुक्तानां ब्राह्मणानां या परिचर्य्या सैव प्रकृष्टः स्वर्गादिश्रेयोहेतुर्धर्मः ॥ ३३४ ॥

शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः । ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां जातिमश्नुते ॥ ३३५ ॥

शुचिरिति । बाह्याभ्यन्तरशौचोपेतः स्वजात्यपेक्षया उत्कृष्टद्विजातिपरिचरणशीलोऽपरुषभाषी निरहंकारः प्राधान्येन ब्राह्मणाश्रयः तदभावे क्षत्रियवैश्याश्रयोऽपि स्वजातित उत्कृष्टां जातिमाप्नोति ॥ ३३५ ॥

एषोऽनापदि वर्णानामुक्तः कर्मविधिः शुभः ।
आपद्यपि हि यस्तेषां क्रमशस्तन्निबोधत ॥ ३३६ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां नवमोऽध्यायः ॥

एष इति । एषवर्णानामनापदि चतुर्णामपि कर्मविधिरुक्तः आपद्यपि यस्तेषां धर्मस्तं वक्ष्यमाणमवधानादूर्द्धं क्रमेण शृणुत ॥ ३३६ ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां नवमोऽध्यायः ।

## ॥ १० दशमोऽध्यायः ॥

---

अधीयीरंस्त्रयो वर्णाः स्वकर्म्मस्था द्विजातयः।
प्रब्रूयाद्ब्राह्मणस्त्वेषान्नेतराविति निश्चयः॥ १॥

वैश्यशूद्रधर्म्मानन्तरं सङ्कीर्णानाञ्च सम्भवमिति प्रति ज्ञातत्वात् तन्निमित्ते वर्णेभ्य एव सङ्कीर्णानामुत्पत्तेः वर्णानु वादार्थं चैवर्णिकस्य प्रधानधर्म्ममध्ययनं ब्राह्मणस्य चाध्यापन मनुवदति अधीयीरन्निति। ब्राह्मणादयस्त्रयो वर्णाः अध्ययनानु भूतस्वकर्म्मानुष्ठातारो वेदमधीयुः। एषान्तुमध्ये ब्राह्मण एवाध्यापनं कुर्य्यात् न क्षत्रियवैश्याविति निश्चयः। प्रब्रूया द्ब्राह्मणस्त्वेषामित्यनेनैव क्षत्रियवैश्ययोरध्यापननिषेधसिद्धौ नेतराविति पुनर्निषेधवचनमायश्चित्तगौरवार्थं॥ १॥

सर्व्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान् यथाविधि।
प्रब्रूयादितरेभ्यश्च स्वयञ्चैव तथा भवेत्॥ २॥

किञ्च सर्व्वेषामिति। सर्व्वेषां वर्णानां जीवनोपायं यथा शास्त्रं ब्राह्मणो जानीयात्तेभ्यश्चोपदिशेत् स्वयञ्च यथोक्तवि यममनुतिष्ठेत् अयानुवादः॥ २॥

वैशेष्यात्प्रकृतिश्रैष्ठ्यात् नियमस्य च धारणात्।
संस्कारस्य विशेषाच्च वर्णानाम्ब्राह्मणः प्रभुः ॥ ३ ॥

वैशेष्यादिति। जात्युत्कर्षात्प्रकृतिः कारणं हिरण्यगर्भोत्तमाङ्गरूपकारणोत्कर्षात् नियम्यतेऽनेनेति नियमो वेदस्नातकव्रताध्यापनव्याख्यानोपयुक्तजातिश्रयधारणात् अत एव ब्रह्मणस्यैव धारणादिति जातिश्रयवेदधारणेनैव ब्राह्मणोत्कर्ष उक्तः। गोविन्दराजस्तु स्नातकव्रतानां धारणादिति व्याख्यातवान्। तच्च नियमादिशब्दाधारणात्। संस्कारस्योपनयनाख्यस्य क्षत्रियाद्यपेक्षया प्राधान्यविधानेन विशेषात् वर्णानामध्यापनकृत्स्नोपदेशयोर्ब्राह्मण एवेश्वरः ॥ ३ ॥

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ ४ ॥

ब्राह्मण इति। ब्राह्मणादयस्त्रयो वर्णा द्विजातिसंज्ञाः तेषामुपनयनविधानात्। शूद्रः पुनश्चतुर्थो वर्णः एकजातिरुपनयनाभावात् पञ्चमः पुनर्वर्णो नास्ति सङ्कीर्णजातीनां त्वश्वतरवत् मातापितृजातिव्यतिरिक्तजात्यन्तरत्वात् न वर्णत्वं यत्तु जात्यन्तरोपदेशः शास्त्रे संव्यवहारार्थः ॥ ४ ॥

सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनु लोम्येन सम्भूता जात्या ज्ञेया स्तएव ते ॥ ५ ॥

सर्व्वेति। ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि समानजातीयासु यथाशास्त्रम्परिणीतासु अक्षतयोनिषु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायां इत्यनेनानुक्रमेण ये जातास्ते मातापित्रोर्जात्या युक्तास्तज्जातीया एव ज्ञातव्याः। आनुलोम्य ग्रहणञ्चात्र मन्दोपयुगमुत्तरश्लोके उपयोक्ष्यते। गवाश्वादि वदवयवसन्निवेशस्य ब्राह्मणत्वादिजात्यभिव्यञ्जकत्वाभावा देतद्ब्राह्मणादिलक्षणमुक्तम्। अत्र च पत्नीग्रहणादन्यपत्नी जनितानाञ्च ब्राह्मणादिजातित्वं। तथाच देवलः। द्वितीयेन तु यः पित्रा सवर्णायाम्प्रजायते। अवावट इतिख्यातः शूद्रधर्म्मा स जातितः। असंस्कृता न संस्कार्य्याः स्तत्स्तास्वपि ये सुताः। उत्पादिताः सवर्णेन ज्ञात्या इव बहिष्कृताः। व्यासः। ये तु जाताः समानासु संस्कार्य्याःस्युरतोऽन्यथा। याज्ञवल्क्योपि। सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। इत्यभिधाय विन्नास्वेष विधिः स्मृत इति ब्रुवाणः स्तपत्न्युत्पादितस्यैव ब्राह्मणा दिजातित्वमिच्छति स्म ॥ ५ ॥

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥ ६॥

स्त्रीष्विति। आनुलोम्येनाव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये उत्पादिताः पुत्राः। यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां तान्मातुर्हीनजातीयत्वदोषेण गर्हितान् पितृसदृशान् न तु पितृसजातीयान् मन्वादय आहुः। पितृसदृशग्रहणान्मातृजातेरुत्कृष्टाः पितृजातितो निकृष्टा ज्ञेयाः। एतेषाञ्च नामानि मूर्द्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि। वृत्तयश्चैषामुशनसोक्ताः। हस्त्यश्वरथशिक्षा अस्त्रधारणञ्च मूर्द्धावसिक्तानाम् नृत्यगीतनक्षत्रजीवनं सस्यरक्षा च माहिष्याणां द्विजातिशुश्रूषा धनधान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानामिति॥ ६॥

अनन्तरासु जातानां विधिरेष सनातनः।
द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्॥ ७॥

अनन्तरास्विति। एष पारम्पर्यागततया नित्यो विधिरनन्तरजातिभार्योत्पन्नानामुक्तः। एकेन द्वाभ्याञ्च वर्णाभ्यां व्यवहिता

द्युत्पन्नानां यथा ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन शूद्रायामिमं वक्ष्यमाणं धर्मादनपेतं विधिं जानीयात्॥ ७ ॥

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
निषादः शूद्रकन्यायां यः पारशव उच्यते॥ ८ ॥

ब्राह्मणादिति। कन्याग्रहणाच्च ऊढायामित्यध्याहार्य्यं विन्नास्वेषविधिः स्मृत इति याज्ञवल्क्येन स्फुटीकृतत्वाच ब्राह्मणा द्वैश्यकन्यायां ऊढायामम्बष्ठाख्यो जायते शूद्रकन्यायामूढायां निषाद उत्पद्यते यः संज्ञान्तरेण पारशवश्चोच्यते॥ ८ ॥

क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥ ९ ॥

क्षत्रियादिति। क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टः क्रूरकर्मरतिश्च क्षत्रशूद्रस्वभाव उग्राख्यः पुत्रो जायते॥ ९ ॥

विप्रस्य त्रिषु वर्णेषु नृपतेर्व्वर्णयोर्द्वयोः। वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥ १० ॥

विप्रस्येति। ब्राह्मणस्य क्षत्रियादित्रयस्त्रीषु क्षत्रियस्य वैश्यादि

द्वयोर्विप्रयोः वैश्यस्य च शूद्रायां वर्णचयाणां एते षट् पुत्राः सवर्णगुणसाध्यापेक्षया अपसदा निकृष्टाः स्मृताः ॥ १० ॥

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः ।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥ ११ ॥

एवमनुलोमानुक्त्वा प्रतिलोमानाह क्षत्रियादिति । अथ विवाहासम्भवात् कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम् । अतएव शास्त्रे राजविप्राङ्गनासुताविति दर्शनात् ब्राह्मण्यां क्षत्रियाज्जातो सूतनामा संजायते । वैश्यात्क्षत्रियाक्रमं क्षत्रियब्राह्मण्योर्मागधवैदेहाख्यौ पुत्रौ भवतः । एषाञ्च कर्त्तव्यं मनुनैवाभिधास्यते ॥ ११ ॥

शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम् ।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ॥ १२ ॥

शूद्रादिति । शूद्राद्वैश्याक्षत्रियाब्राह्मणीषु क्रमेणायोगवः क्षत्ता नृणामधमश्चाण्डालश्च वर्णानां सङ्करो येषु समुचितस्तेषु ते वर्णसङ्करा जायन्ते ॥ १२ ॥

एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ । क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येपि जन्मनि ॥ १३ ॥

एकान्तरइति । एकान्तरेपि वर्णे ब्राह्मणाद्वैश्यकन्यायां

मम्बष्ठः क्षत्रियाच्छूद्रकन्यायामुग्रः एतावानुलोम्येन यथा स्पर्शादौ तद्वदेकान्तरे प्रतिलोमजननेऽपि शूद्रात्क्षत्रियायां क्षत्ता वैश्याद्ब्राह्मण्यां वैदेहः एतावपि स्पर्शादियोग्यौ विज्ञेयौ एकान्तरोत्पन्नयोः स्पर्शाद्यभ्यनुज्ञानादर्थादनन्तरोत्पन्नानां सूत मागधायोगवानां स्पर्शादियोग्यत्वं सिद्धं भवति अतश्चाण्डाल एवैकः प्रतिलोमजः स्पर्शादौ निरस्यते ॥ १३ ॥

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥ १४ ॥

पुत्रा इति । मातृदोषादिति हेतूपन्यासात् अनन्तरपद मनन्तरवदेकान्तरद्व्यन्तरप्रदर्शनार्थं । ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीषु आनुलोम्येन उत्पन्नाः पूर्व्वमुक्ताः पुत्रास्तान् हीनजातिमातृदोषान्मातृजातिव्यपदेशान्प्रचक्षते । मातापितृव्यतिरिक्तसङ्कीर्णजातित्वेऽपि एषां मातृजातिव्यपदेश कथनं मातृजातिसंस्कारादिधर्म्मप्राप्त्यर्थम् ॥ १४ ॥

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः ॥ १५ ॥

ब्राह्मणादिति । क्षत्रियेण शूद्रायामुत्पन्ना उग्रा उग्राख्या कन्या इति उग्रकन्या तस्यां ब्राह्मणादावृतनामा

जायते। ब्राह्मणेन वैश्यायामुत्पन्ना अम्बष्ठा तस्यां ब्राह्मणा द्वाभीराख्यो जायते। शूद्रेण वैश्यायामुत्पन्ना आयोगवी तस्यां ब्राह्मणाद्धिग्वणो जायते॥ १५॥

आयोगवश्च क्षत्ता च चाण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः॥ १६॥

आयोगवइति। आयोगवः क्षत्ता चाण्डालश्च मनुष्याणा मधम इत्येते त्रयो व्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु पुत्रकार्यो द्रपगतास्त्रयः शूद्राज्जायन्ते। पुत्रकार्याक्षमत्वप्रतिपादनार्थं मुक्तानामप्येषां पुनर्वचनं एवमुत्तरश्लोके उक्तानामपि॥ १६॥

वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु। प्रतीप मेते जायन्ते परेऽप्यपसदास्त्रयः॥ १७॥

वैश्यादिति। क्षत्रियाब्राह्मण्योर्मागधवैदेहौ क्षत्रिया द्ब्राह्मण्यां सूत इत्येवं प्रातिलोम्येनापरेऽपि त्रयः पुत्रकार्यादप गता जायन्ते॥ १७॥

जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः।
शूद्राज्जातोनिषाद्यान्तु स वै कुक्कुटकः स्मृतः॥ १८॥

जातइति। निषादाच्छूद्रायां जातो जात्या पुक्कसो भवति निषाद्यां पुनः शूद्राज्जातः स कुक्कुटकनामा स्मृतः॥ १८॥

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते। वैदेह
केन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥ १९ ॥

क्षत्तुरिति। शूद्रेण वैश्यायां जातः क्षत्ता क्षत्रियेण शूद्रायां
जाता उग्रा तेन तस्यां जातः श्वपाक इत्युच्यते वैदेहकेनतु
अम्बष्ठ्यां ब्राह्मणेन वैश्याजातायां वेण इति कथ्यते ॥ १९ ॥

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्। तान्सा
वित्रीपरिभ्रष्टान् व्रात्या इति विनिर्दिशेत् ॥ २० ॥

द्विजातयइति। दिजातयः सवर्णासु स्त्रीषु यान् पुत्रानुत्पा
दयन्ति ते चेदुपनयनाख्यव्रतहीनाभवन्ति तदा तानकृतोप
नयनान् व्रात्या इत्यनया संज्ञया व्यपदिशेत् अतऊर्द्धं त्रयोप्येते
इत्युक्तमपि व्रात्यलक्षणं प्रतिलोमअपुत्रवदस्यापि उपकारा
क्षमपुत्रत्वप्रदर्शनार्थमस्मिन् संकीर्णप्रकरणे अनूदितम् ॥ २० ॥

व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पधः शैखएव च ॥ २१ ॥

व्रात्यादिति। व्रात्यात् ब्राह्मणात् सवर्णास्वित्यनुवृत्तेः ब्राह्म
णां पापस्वभावो भूर्ज्जकण्टको जायते तथा आवन्त्यवाटधान

पुष्पधशैखा जायन्ते एकस्य चैतानि देशभेदप्रसिद्धानि नामानि ॥ २१ ॥

झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविडएव च ॥ २२ ॥

झल्लोमल्लश्चेति । क्षत्रियात् व्रात्यात्सवर्णायां झल्लमल्लनिच्छिवि नटकरणखसद्रविडाख्या जायन्ते । एतान्यप्येकस्यैव नामानि ॥ २२ ॥

वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्यएव च ।
कारूषश्च विजन्मा च मैत्रः सात्वतएव च ॥ २३ ॥

वैश्यात्त्विति । वैश्यात् पुनर्व्रात्यात् सवर्णायां सुधन्वाचार्य्य कारुषविजन्ममैत्रसात्वताख्या जायन्ते । एकस्य चैतान्यपि नामानि ॥ २३ ॥

व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्म्म णाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥ २४ ॥

व्यभिचारेणेति । ब्राह्मणादिवर्णानामन्योऽन्यस्त्रीगमनेन सगोत्राद्यविवाह्यविवाहेन उपनयनादिस्वकर्मत्यागेन च वर्ण

सङ्करो नाम जायते। अतोयुक्तमस्मिन् प्रकरणे जात्यानाम
भिधानम्॥ २४॥

सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजाः।
अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषतः॥ २५॥

सङ्कीर्णेति। ये सङ्कीर्णयोनयः प्रतिलोमैरनुलोमैश्च परस्पर
सम्बन्धात् जायन्ते तान् विशेषेण वक्ष्यामि॥ २५॥

सूतो वैदेहकश्चैव चण्डालश्च नराधमः। मागधः
क्षत्तृजातिश्च तथायोगव एव च॥ २६॥

सूत इति। एते षड्विधाः सूतादयः उत्तरार्थमनू
द्यन्ते॥ २६॥

एते षट् सदृशान्वर्णान् जनयन्ति स्वयोनिषु।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु॥ २७॥

एत इति। एते पूर्व्वोक्ताः षट् प्रतिलोमजाः स्वयोनिषु सुतो
त्पत्तिं कुर्व्वन्ति। यथा शूद्रेण वैश्यायां जात आयोगव उच्यते
आयोगव्यामेव मातृजातौ वैश्यायां प्रवरासु क्षत्रियाब्राह्मणी
योनिषु चकारादपकृष्टायामपि शूद्रजातौ सर्व्वेष सदृशान्
वर्णान् जनयन्ति सदृशत्वञ्च न पितृपेक्षया किन्तु मातृजात्या

चातुर्वर्ण्ये स्त्रीष्वेव पितृतोऽधिकगर्हितपुत्रोत्पत्तेरर्थप्राप्तत्वात्
तत्सदृशान् पितृतोऽधिकगर्हितान् स्वजातावपि जनयन्तीत्येत
देवाप्राप्तत्वात् अनेन विधीयते। किन्तु अयन्त्यवर्णेनोत्तमवर्णस्त्रीषु
जनितत्वात् क्रियादुष्टा आयोगवाद्याः प्रतिलोमजाः क्रियादुष्टा
भ्यां च मातापितृभ्यां पुत्राभ्यामपि जनित आयोगवादिपुत्रो
ब्राह्मणान्यतरजनितात् ब्राह्मणमातापितृजनितवत् अधिक
दुष्ट एव स्यात् शूद्राद्ब्राह्मणादिजातीयेन शूद्राद्ब्राह्मणादिजा
तीयायां जनितः पितृतुल्य एवोचितः नतु क्रियादुष्टोभयजनि
तोऽपि ॥२७॥

यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते। आन
न्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमात् ॥२८॥

यथेति। यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्या
द्द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्याद्द्विजत्वमुत्प
द्यते सजातीयायाञ्च द्विजो जायते। एवं बाह्येष्वपि
वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जातेषूत्कर्षापक्रमो भवति
शूद्रजातप्रतिलोमापेक्षया द्विजोत्पन्नप्रतिलोमप्राशस्त्यार्थ
मिदं। मेधातिथिस्तु द्विजत्वप्रतिपादकमेतत् एषां वचनमुप
नयनार्थमित्याह। तच्च प्रतिलोमजास्तु धर्महीना इति गौत
मेन संस्कारनिषेधात् ॥२८॥

ते चापि बाह्यान् सुबहूंस्ततोऽप्यधिकदूषितान्।
परस्परस्य दारेषु जनयन्ति विगर्हितान्॥ २९ ॥

ते चापीति। ते चायोगवादयः षट् परस्परजातीयासु भार्यासु सुबहून् आनुलोम्येऽप्यधिकदुष्टान् बहिर्भूतान् जनयन्ति। तद्यथा। आयोगवः चत्तृजायायामात्मनो हीनतरं जनयति। तथा चत्ताप्यायोगव्यामात्मनो हीनतरमुत्पादयति। एवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यम्॥ २९ ॥

यथैव शूद्रो ब्राह्मण्यां बाह्यञ्जन्तुम्प्रसूयते। तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ ३० ॥

यथैवेति। यथा ब्राह्मण्यां शूद्रोऽपकृष्टं चाण्डालाख्यं प्राणिनं प्रसूयते जनयति एवं बाह्यश्चण्डालादिर्वर्णचतुष्टये चाण्डालादिभ्योऽप्यपकृष्टं पुत्रं प्रसूयते ॥ ३० ॥

प्रतिकूलं वर्त्तमाना बाह्या बाह्यतरान् पुनः।
हीना हीनानान् प्रसूयन्ते वर्णान् पञ्चदशैव तु॥ ३१॥

प्रतिकूलमिति। अथ मेधातिथिगोविन्दराजयोर्व्याख्यानं एतदेव विस्तारयति चातुर्व्वर्ण्यबाह्यास्चण्डालक्षत्तायोगवाः

शूद्रप्रभवाश्चायोगवादयश्चातुर्वर्ण्ये गच्छन्त आत्मनो हीनतरान् परस्परापेक्षयापकृष्टोत्कृष्टवर्णप्रभवत्वात् पञ्चदश वर्णान् जनयन्ति। तद्यथा चण्डालः शूद्राया आत्मनो हीनतरं वैश्याक्षत्रियाब्राह्मणीजातेभ्य उत्कृष्टं जनयति एवं वैश्यायां शूद्राज्जातमपरं क्षत्रियाब्राह्मणीजाताभ्यामुत्कृष्टं जनयति ततोऽपरं क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं ततोऽपि हीनं ब्राह्मण्यां जनयति एवं क्षत्तायोगवावपि चातुर्वर्ण्ये चतुरश्चतुरो जनयत इत्येते शूद्रप्रभवचण्डालक्षत्तायोगवेभ्यः चातुर्वर्ण्ये द्वादश प्रभेदा उत्पद्यन्ते आत्मनाच चाण्डालक्षत्तायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदश सम्पद्यन्ते एवं वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकं पञ्चदश सम्भवन्ति एवं षष्टिश्चातुर्वर्ण्येन सह चतुःषष्टिप्रभेदा भवन्ति ते तु परस्परगमनेन नाना वर्णान् जनयन्तीति। नैतन्मनोहरं पूर्वश्लोके यथाप्रतिलोमजानां प्रकृतत्वात्तद्विस्तारकथनार्थत्वाच्च अथापि श्लोके प्रतिकूलं वर्त्तमाना इत्युपादानात् प्रतिलोमजमात्रविषयोऽयं श्लोको नानुलोमजविषयः। तथाच वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकं पञ्चदश सम्भवन्त्येवं षष्टिरिति न युज्यते। न च सम्भवमात्रेणैव इयं षष्टिरुक्ता न दुष्टतया शूद्रप्रभवायोगवक्षत्तृचण्डाला एव चातुर्वर्ण्ये सन्तानोपेताः पञ्चदश गर्हिता इतिवाच्यं यतो वैश्यक्षत्रियाभ्यामपि प्रतिलोमतउत्पादितानां यथार्थं हीनत्वात्तैरपि चातुर्वर्ण्येजनितानां गर्हितत्वस्य समत्वात्। तथा बाह्यतरं बाह्यात्

ष्ठुत्पन्नानां यथा ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन शूद्रायामिमं वक्ष्यमाणं धर्म्मादनपेतं विधिं जानीयात्॥ ७ ॥

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
निषादः शूद्रकन्यायां यः पारशव उच्यते॥ ८ ॥

ब्राह्मणादिति। कन्याग्रहणादत्र ऊढायामित्यध्याहार्य्यं विन्नास्वेषविधिः स्मृत इति याज्ञवल्क्येन स्फुटीकृतत्वाच्च ब्राह्मणाद्वैश्यकन्यायां ऊढायामम्बष्ठाख्यो जायते शूद्रकन्यायामूढायां निषाद उत्पद्यते यः संज्ञान्तरेण पारशवोच्यते॥ ८ ॥

क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥ ९ ॥

क्षत्रियादिति। क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टः क्रूरकर्म्मरतिश्च क्षत्रशूद्रस्वभाव उग्राख्यः पुत्रो जायते॥ ९ ॥

विप्रस्य त्रिषु वर्णेषु नृपतेर्व्वर्णयोर्द्वयोः। वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥ १० ॥

विप्रस्येति। ब्राह्मणस्य क्षत्रियादिवर्णत्रयस्त्रीषु क्षत्रियस्य वैश्यादि

द्वयोः स्त्रियोः वैश्यस्य च शूद्रायां वर्णत्रयाणां। एते षट् पुत्राः सवर्णगुणधर्मापेक्षया अपसदा निकृष्टाः स्मृताः॥१०॥

क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥११॥

एवमनुलोमानुक्त्वा प्रतिलोमानाह क्षत्रियादिति। अत्र विवाहासम्भवात् कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम्। अतएव श्लोके राजविप्राङ्गनासुताविति दर्शनात्। ब्राह्मण्यां क्षत्रियाज्जातो सूतनामा संजायते। वैश्यात्पुनः क्रमं क्षत्रियब्राह्मण्यो मागधवैदेहाख्यौ पुत्रौ भवतः। एषाञ्च वृत्तयो मनुनैवाभिधास्यन्ते॥११॥

शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम्।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः॥१२॥

शूद्रादिति। शूद्राद्वैश्याक्षत्रियाब्राह्मणीषु क्रमेणायोगवः क्षत्ता नृणामधमश्चाण्डालश्च वर्णानां सङ्करो येषु जनयितृषु ते वर्णसङ्करा जायन्ते॥१२॥

एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ। क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि॥१३॥

एकान्तर इति। एकान्तरेऽपि वर्णे ब्राह्मणाद्वैश्यकन्यायां

अम्बष्ठः क्षत्रियाच्छूद्रकन्यायामुग्रः एतावानुलोम्येन यथा स्पर्शार्हा तद्वदेकान्तरे प्रतिलोमजननेपि शूद्रात्क्षत्रियायां क्षत्ता वैश्याद्ब्राह्मण्यां वैदेहः एतावपि स्पर्शादियोग्यौ विज्ञेयौ एकान्तरोत्पन्नयोः स्पर्शाद्यभ्यनुज्ञानादर्थादनन्तरोत्पन्नानां सूत मागधायोगवानां स्पर्शादियोग्यत्वं सिद्धं भवति अतश्चाण्डाल एवैकः प्रतिलोमजः स्पर्शादौ निरस्यते ॥ १३ ॥

पुत्रा येनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥ १४ ॥

पुत्रा इति । मातृदोषादिति हेतूपन्यासात् अनन्तरपदम् अनन्तरवदेकान्तरद्व्यन्तरप्रदर्शनार्थं । ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीषु आनुलोम्येन उत्पन्नाः पूर्व्वमुक्ताः पुत्रास्तान् हीनजातिमातृदोषान्मातृजातिव्यपदेश्यानाचक्षते । मातापितृव्यतिरिक्तसङ्कीर्णजातित्वेपि एषां मातृजातिव्यपदेश कथनं मातृजातिसंस्कारादिधर्म्मप्राप्त्यर्थम् ॥ १४ ॥

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः ॥ १५ ॥

ब्राह्मणादिति । क्षत्रियेण शूद्रायामुत्पन्ना उग्रा उग्रा चासौ कन्या चेति उग्रकन्या तस्यां ब्राह्मणादावृतनामा

जायते। ब्राह्मणेन वैश्यायामुत्पन्ना अम्बष्ठा तस्यां ब्राह्मणा-दाभीराख्यो जायते। शूद्रेण वैश्यायामुत्पन्ना आयोगवी तस्यां ब्राह्मणाद्धिग्वणो जायते ॥ १५ ॥

आयोगवश्च क्षत्ता च चाण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥ १६ ॥

आयोगवइति। आयोगवः क्षत्ता चाण्डालश्च मनुष्याणा-मधम इत्येते यथा क्रममेव वैश्याक्षत्रियाब्राह्मणीषु पुत्रकार्या-दपगतास्त्रयः शूद्राज्जायन्ते। पुत्रकार्याक्षमत्वप्रतिपादनार्थं शूद्राणामप्येषां पुनर्वचनं एवमुत्तरश्लोके क्षत्रादीनामपि ॥ १६ ॥

वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु। प्रतीप-मेते जायन्ते परेऽप्यपसदास्त्रयः ॥ १७ ॥

वैश्यादिति। क्षत्रियाब्राह्मण्योर्मागधवैदेहौ क्षत्रिया-द्ब्राह्मण्यां सूत इत्येवं प्रातिलोम्येनापरेऽपि त्रयः पुत्रकार्यादप-गता जायन्ते ॥ १७ ॥

जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः स्मृतः ॥ १८ ॥

जातइति। निषादाच्छूद्रायां जातो जात्या पुक्कसो भवति निषाद्यां पुनः शूद्राद्योजातः स कुक्कुटकनामा स्मृतः ॥ १८ ॥

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्त्यते। वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥ १९ ॥

क्षत्तुरिति। शूद्रेण वैश्यायां जातः क्षत्ता क्षत्रियेण शूद्रायां जाता उग्रा तेन तस्यां जातः श्वपाक इत्युच्यते वैदेहकेनतु अम्बष्ठ्यां ब्राह्मणेन वैश्याजातायां वेण इति कथ्यते ॥ १९ ॥

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्। तान्सावित्रीपरिभ्रष्टान् व्रात्या इति विनिर्दिशेत् ॥ २० ॥

द्विजातयइति। द्विजातयः सवर्णासु स्त्रीषु यान् पुत्रानुत्पादयन्ति ते चेदुपनयनाख्यव्रतहीनाभवन्ति तदा तानकृतोपनयनान् व्रात्या इत्यनया संज्ञया व्यपदिशेत् अतऊर्द्धं चयोच्यते इत्युक्तमपि व्रात्यलक्षणं प्रतिलोमजपुत्रवदस्यापि उपकाराक्षमपुत्रत्वप्रदर्शनार्थमस्मिन् संकीर्णप्रकरणे अनूदितम् ॥ २० ॥

व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः। आवन्त्यवाटधानौ च पुष्पधः शैखएव च ॥ २१ ॥

व्रात्यादिति। व्रात्यात् ब्राह्मणात् सवर्णास्वित्यनुवृत्तेः ब्राह्मण्यां पापस्वभावो भूर्ज्जकण्टको जायते तथा आवन्त्यवाटधान

पुण्ड्रकौड्राद्या आयन्ते एकस्य चैतानि देशभेदप्रसिद्धानि नामानि ॥ २१ ॥

झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥ २२ ॥

झल्लोमल्लश्चेति । क्षत्रियात् व्रात्यात्सवर्णायां झल्लमल्लनिच्छिवि नटकरणखसद्रविडाख्या जायन्ते । एतान्यप्येकस्यैव नामानि ॥ २२ ॥

वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च ।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ २३ ॥

वैश्यात्त्विति । वैश्यात् पुनर्व्रात्यात् सवर्णायां सुधन्वाचार्य्यकारुषविजन्ममैत्रसात्वताख्या जायन्ते । एकस्य चैतान्यपि नामानि ॥ २३ ॥

व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥ २४ ॥

व्यभिचारेणेति । ब्राह्मणादिवर्णानामन्योऽन्यस्त्रीगमनेन सगोत्रापरिवाह्यविवाहेन उपनयनरूपस्वकर्मत्यागेन च वर्ण

वर्णसङ्करो नाम जायते। अतोऽनुलोमस्मिन् प्रकरणे आख्यानामभिधानम्॥ २४॥

सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजाः।
अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषतः॥ २५॥

सङ्कीर्णेति। ये सङ्कीर्णयोनयः प्रतिलोमैरनुलोमैश्च परस्पर-सम्बन्धात् जायन्ते तान् विशेषेण वक्ष्यामि॥ २५॥

सूतो वैदेहकश्चैव चण्डालश्च नराधमः। मागधः क्षत्तृजातिश्च तथायोगव एव च॥ २६॥

सूत इति। एते षड्जातयाः सूतादयः उत्तरार्थमनूद्यन्ते॥ २६॥

एते षट् सदृशान्वर्णान् जनयन्ति स्वयोनिषु।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु॥ २७॥

एत इति। एते पूर्व्वोक्ताः षट् प्रतिलोमजाः स्वयोनिषु सुतोत्पत्तिं कुर्व्वन्ति। यथा शूद्रेण वैश्यायां जात आयोगव उच्यते आयोगव्यामेव मातृजातौ वैश्यायां प्रवरासु क्षत्रियाब्राह्मणीयोनिषु चकारादपकृष्टायामपि शूद्रजातौ सर्व्वत्र सदृशान् वर्णान् जनयन्ति सदृशत्वञ्च न पित्रपेक्षया किन्तु मातृजात्या

चातुर्वर्ण्ये स्त्रीष्वेवपित्रतोऽधिकगर्हितपुत्रोत्पत्तेर्म्लेच्छभावात्
तस्मादस्मात्पितृतोऽधिकगर्हितान् सजातावपिजनकस्त्रीक्षेत्रात्
देवाप्राप्तत्वात् अनेन विधीयते। किन्तु अचन्यवर्णेनोत्तमवर्णस्त्रीषु
अ.नितत्वात् क्रियादुष्टा आयोगवाद्याः प्रतिलोमजाः क्रियादुष्टा
भ्यां समातापितृभ्यामनुजाभ्यामपि जनित आयोगवादिपुत्रो
मध्यादन्यन्तरजनितात् मध्यादन्नमातापितृजनितवत् अधिक
दुष्ट एव न्याय्यः शूद्रब्राह्मणादिजातीयेन शूद्रब्राह्मणादिजा
तीयायां जनितः पितृतुल्य एवोचितः नतु क्रियादुष्टोभयजनि
तोपि ॥ २७ ॥

यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते। आन
न्तर्यात्स्वयोन्यान्तु तथा बाह्येष्वपि क्रमात् ॥ २८ ॥

यथेति। यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्या
द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्याद्द्विजत्व
यते सजातीयायाञ्च द्विजो जायते। एवं बाह्येष्वपि
वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जातेषूत्कर्षापकर्षो भवति
शूद्रजातप्रतिलोमापेक्षया द्विजाद्युत्पन्नप्रतिलोमप्राशस्त्यार्थ
मिदं। मेधातिथिस्तु द्विजत्वप्रतिपादकमेतत् इदं वचनमुप
यवनार्थमित्याह। तत्र प्रतिलोमजास्तु धर्महीना इति गौत
मेन संस्कारनिषेधात् ॥ २८ ॥

ते चापि बाह्यान् सुबहूंस्ततोऽप्यधिकदूषितान्।
परस्परस्य दारेषु जनयन्ति विगर्हितान्॥ २९ ॥

ते चापीति। ते चायोगवादयः षट् परस्परजातीयासु भार्यासु सुबहून् आनुलोम्येऽप्यधिकदुष्टान् सत्क्रियाबहिर्भूतान् जनयन्ति। तद्यथा। आयोगवः क्षत्तृजातायामात्मनो हीनतरं जनयति। तथा क्षत्ताप्यायोगव्यामात्मनो हीनतरमुत्पादयति। एवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यम्॥ २९ ॥

यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुम्प्रसूयते। तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते॥ ३० ॥

यथैवेति। यथा ब्राह्मण्यां शूद्रोऽपकृष्टं चाण्डालाख्यं प्राणिनं प्रसूयते जनयति एवं बाह्यश्चण्डालादिर्वर्णचतुष्टये चाण्डालादिभ्योऽप्यपकृष्टं पुत्रं प्रसूयते॥ ३० ॥

प्रतिकूलं वर्त्तमाना बाह्या बाह्यतरान् पुनः।
हीना हीनानान् प्रसूयन्ते वर्णान् पञ्चदशैव तु॥ ३१॥

प्रतिकूलमिति। अत्र मेधातिथिगोविन्दराजयोर्व्याख्यानं एतदेव विस्तारयति चातुर्वर्ण्यंबाह्यासच्छायकचायोगवाः

शूद्रप्रभवास्त्रयश्चातुर्वर्ण्ये गच्छन्त आत्मनो हीनतरान् पर
स्परापेक्षयापकृष्टोत्कृष्टवर्णप्रभवत्वात् पञ्चदश वर्णान् सम्पाद
यन्ति। तद्यथा चण्डालः शूद्राया मात्मनो हीनतरं वैश्याक्षत्रि
याब्राह्मणीजातेभ्य उत्कृष्टं जनयति एवं वैश्यायां शूद्राज्जात
स्त्वधरं क्षत्रियाब्राह्मणीजाताभ्यामुत्कृष्टं जनयति ततोप्यधरं
क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं ततोपि हीनं ब्राह्मण्यां जन
यति एवं क्षत्रायोगवावपि चातुर्वर्ण्ये चतुरश्चतुरो जन
यत इत्येते शूद्रप्रभवचण्डालक्षत्रायोगवेभ्यः चातुर्वर्ण्ये द्वादश
प्रभेदा उत्पद्यन्ते आत्मनाच चाण्डालक्षत्रायोगवास्त्रय
इत्येवं शूद्रप्रभवाः पञ्चदश सम्पद्यन्ते एवं वैश्यक्षत्रिय
ब्राह्मणप्रभवाश्च प्रत्येकं पञ्चदश सम्भवन्ति एवं षष्टिश्चातु
र्वर्ण्येन सह चतुःषष्टिप्रभेदा भवन्ति तेतु परस्परगमनेन नाना
वर्णान् जनयन्तीति। नैतन्मनोहरं पूर्वश्लोके यथा प्रतिलोमजा
नां प्रकृतत्वात्तद्विस्तारकथनार्थत्वाच्चास्य तथापि श्लोके प्रतिकूलं
वर्त्तमाना इत्युपादानात् प्रतिलोमजमात्रविषयोयं श्लोको नानु
लोमज विषयः। तथाच वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकं पञ्च
दश सम्भवन्त्येवं षष्टिरिति न युज्यते। नच सम्भवमात्रेणैव इयं
षष्टिरस्मा न दुष्टतया शूद्रप्रभवायोगवक्षत्तृचण्डाला एव चातु
र्वर्ण्ये सन्तानोपेताः पञ्चदश गर्हिता इतिवाच्यं यतो वैश्यक्षत्रिया
भ्यामपि प्रतिलोमत उत्पादितानां यथार्थं हीनत्वात्तैरपि चातु
र्वर्ण्यजनितानां गर्हितत्वस्य सम्भवात्। तथा बाह्यतरं बाह्यात्

र्णे प्रसूयत इति मनुनैवानन्तरं स्फुटमुक्तत्वात् युवाभ्यामपि तथैव व्याख्यातत्वाच चातुर्वर्ण्येन सह चतुःषष्टिरिति सर्व्वेषां प्रख्यातम्। नहि सङ्कीर्णप्रकरणे शूद्रचातुर्वर्ण्यगणनोचिता किञ्च वर्णान् पञ्चदश प्रसूयन्ते इति अयमाचण्डालजननमक्ता ते चात्मना चण्डालचायोगवाक्षत्तृत्येवं शूद्रप्रभवाः पञ्चदशेति न युक्तम्। अपि चात्मना सह पञ्चदश सम्पादयन्तीति न सङ्गच्छते असम्पाद्यत्वादात्मनः पञ्चदशसम्पद्यन्तइति व्याख्याने ऽध्याहार एव दोषः। तस्मादेवं व्याख्यायते प्रतिकूलं वर्त्तमानाः प्रतिलोमजा बाह्या द्विजप्रतिलोमजेभ्योनिकृष्टत्वात् शूद्रप्रभवायोगवचत्तृचण्डालास्त्रयः पूर्व्वश्लोकादनुवर्त्तमाने चातुर्वर्ण्ये स्वजातौ च एते षट् सहस्रानित्यत्र समात्युत्पन्नस्यापि पित्रतो गर्हितत्वाभिधानात् आत्मापेक्षया बाह्यतरान् प्रत्येकं पञ्चदश पुत्रान् जनयन्ति। तद्यथा। आयोगवश्चातुर्वर्ण्यस्त्रीषु आयोगव्यांच आत्मनोनिकृष्टान् पञ्च पुत्रान् जनयति एवं क्षत्तृचाण्डालावपि प्रत्येकं पञ्च पुत्रान् जनयत इत्थं बाह्यास्त्रयः पञ्च दश पुत्रान् जनयन्ति। तथानुलोमजेभ्यो हीना वैश्यक्षत्रियप्रभवा मागधवैदेहसूता आत्मापेक्षया हीनान् पूर्व्ववचातुर्व्वर्ण्यस्त्रीषु सजातौच प्रत्येकं पञ्च पुत्रान् जनयन्तो हीना अपि त्रयःपञ्चदशैव पुत्रान् जनयन्ति एवं त्रिंशद्देते भवन्ति। अथ वा बाह्यम्योहीनसञ्ज्ञञ्च यदेव प्रतिलोमकथनाद् यं बाह्यार्थस्तत्

अयोगववैदेहमागधक्षत्तारः षट् यथोत्तरमुत्कर्षात् प्रातिलो
म्येन स्त्रीषु वर्त्तमाना मातृतराम् पञ्चदशैव पुत्रान् जनयन्ति।
तद्यथा। चाण्डालः क्षत्रादिषु पञ्चसु स्त्रीषु क्षत्ता आयोगव्या
दिषु चतसृषु आयोगवो वैदेह्यादिषु तिसृषु वैदेहो मागधी
सूत्योः मागधः सूत्यां सूतस्तु प्रतिलोमाभावात् प्रातिलोम्येन
जनयत्येव एवमेते प्रातिलोम्येन पञ्चदशैव पुत्रान् जनयन्ति
पुनरितिनिर्देशात् हीनाः सूतादयश्चाण्डालान्ताः षट् यथोत्त
रमपकर्षात् आनुलोम्येनापि प्रतिलोमोक्तरीत्या स्वापेक्षया
हीनाम् पञ्चदशैव पुत्रान् जनयन्ति एवं त्रिंशदेते भवन्ति॥३१॥

प्रसाधनोपचारज्ञमदासं दासजीवनम्।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे॥ ३२॥

प्रसाधनेति। केशरचनादिः प्रसाधनतदुपचारज्ञं अदासं
उच्छिष्टभक्षणादिदासकर्मरहितं अङ्गसंवाहनादिदासकर्म
जीवनमाश्रयत्नेन मृगादिवधाख्यवृत्त्यन्तरजीवनं सैरिन्ध्र
नामानं मुखपाश्वरणज्ञातानिति लोके वर्णमाबोदस्युरायो
गवीजातो मूल्येन वैश्यायामुत्पन्नायां जनयति तथाच
मृगादिमारणं दैवपित्र्योपयोगार्थं वैहितव्यम्॥ ३२॥

मैत्रेयकन्तु वैदेहो माधूकं सम्प्रसूयते। नॄन् प्रशं
संत्यजस्रं यो घण्टाताडोऽरुणोदये॥ ३३॥

मैत्रेयकमिति। वैश्याद्ब्राह्मण्यां जातो वैदेहः प्रकृतायामायो

मध्यामीपेयाख्यं मधुरभाषिणं जनयति यः प्रातर्घण्टामाहत्य राजप्रभृतीन्सततं स्तुत्वैव स्तौति ॥ ३३ ॥

निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।
कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः ॥ ३४ ॥

निषाद इति । ब्राह्मणेन शूद्रायां जातो निषादः प्रागुक्तः प्रकृतायामायोगव्यां मार्गवदासापरनामानं नौव्यवहारजीविनं जनयति आर्यावर्तदेशवासिनः कैवर्तशब्देन कीर्तयन्ति ॥ ३४ ॥

मृतवस्त्रभृत्सु नारीषु गर्हितान्नाशनासु च ।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक्त्रयः ॥ ३५ ॥

मृतेति । सैरिन्ध्रमैत्रेयमार्गवा हीनजातीयास्त्रयः मृतवस्त्रपरिधानासु शूद्राद्युच्छिष्टभक्षणासु योगवीषु पितृभेदाद्भिन्ना भवन्ति ॥ ३५ ॥

कारावरो निषादात्तु चर्मकारः प्रसूयते । वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥ ३६ ॥

कारावर इति । वैदेह्यामेव जायत इति उत्तरत्र श्रवणात् चर्मच्छेदकारिणं वैदेह्यां जनयति निषादाद्वैदेह्यां जातः कारावः

दासवच्चर्मच्छेदनकारी जायते अत एव लोकमध्ये कारावरा श्चर्मच्छेदनाचरणेनैव वृत्तिरेषाम्। वैदेहकादौ रन्ध्रमे दान्ध्रौ ग्रामबहिर्निवासिनौ यथाक्रमनिर्दिष्टाद्वैदेहकेन वैदेह्यां जातश्च गर्हितवैदेहकन्यायामुत्पन्नत्वात्। कारावरनिषादजात्यो जाता लोके प्रसिद्धत्वात् कारावरनिषादस्त्रियोरेव क्रमेण जायते॥ ३६ ॥

चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्।
आहिण्डिको निषादेन वैदेह्यामेव जायते॥ ३७॥

चण्डालादिति। वैदेह्यां चण्डालात्पाण्डुसोपाकाख्यो वेणु व्यवहारजीवी जायते निषादेन च वैदेह्यामेवाहिण्डिकाख्यो जायते यद्यपि बन्धनस्थानेषु बाह्यरक्षकत्वादाहिण्डिकानामि ति लोकमध्ये वृत्तिरित्युक्ता। समानजातीयत्वेपि कारावरा हिण्डिकयोरुत्पत्तिभेदसंभवात् अपदेशभेदः॥ ३७॥

चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्।
पुक्कस्यां जायते पापः सदा सज्जनगर्हितः॥ ३८॥

चण्डालेनेति। शूद्रायां निषादेन जातायां पुक्कस्यां चण्डा लेन जनितः सोपाकाख्यः पापात्मा सर्वदा साधुनिन्दितो

मारणोचितापराधस्य मूर्खं वध्यस्य यस्य राजादेशेन मारणं तेन वृत्तिर्यस्य स जायते ॥ ३८ ॥

निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम्।
श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥ ३९ ॥

निषादस्त्रीति। निषादी चण्डालात् अन्त्यावसायिसंज्ञं चण्डालादिभ्योपि दुष्टतमं श्मशानवासिनं तद्वृत्तिं च जनयति ॥ ३९ ॥

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः। प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः ॥ ४० ॥

सङ्करइति। वर्णसङ्करविषये एता जातयोयस्येयं जननी अयं जनकः स एवं जातीयो जात इत्येवं पितृमातृकथनपूर्व्वकन्दर्शिताः। तथा गूढाः प्रकटा वा तत्स्वोदितकर्म्मानुष्ठानेन ज्ञातव्याः ॥ ४० ॥

सजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः।
शूद्राणान्तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः ॥ ४१ ॥

सजातिजेति। द्विजातीनां समानजातीयासु जाताः तथानुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः क्षत्रियेण वैश्यायामेवं

सद्भुता द्विजधर्मिणः उपनेयाः। तासामनन्तरेणाप्यहति यदुक्तं तत् तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कश्चिद्भ्रमः स्यात् अत एषां द्विजातिसंस्कारार्थमिदं वचनम्। ये पुनरन्ये द्विजात्युत्पन्ना अपि सूताद्यः प्रतिलोमजास्ते शूद्रधर्माणो नैषामुपनयनमस्ति ॥ ४१ ॥

तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे। उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥ ४२ ॥

तप इति। यथा जातिरनन्तरजा तपःप्रभावेण विश्वामित्रवद्बीजप्रभावेण च ऋष्यशृङ्गादिवत्सूतपेतारो मनुष्यमध्ये जात्युत्कर्षं गच्छन्ति अपकर्षं च यथामापचरेतुना यान्ति ॥ ४२ ॥

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ ४३ ॥

शनकैरिति। इमा वक्ष्यमाणाः क्षत्रियजातयः उपनयनादिक्रियालोपेन ब्राह्मणानां च याजनाध्यापनप्रायश्चित्तार्थं दर्शनाभावेन शनैः शनैर्लोके शूद्रतां प्राप्ताः ॥ ४३ ॥

पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदापह्लवाश्चीनाः किराता दरदाः खशाः ॥४४॥

पौण्ड्रका इति । पौण्ड्रादिदेशोद्भवाः क्षत्रियाः सन्तः क्रिया-
लोपादिना शूद्रत्वमापन्नाः ॥ ४४ ॥

मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः ॥ ४५ ॥

मुखेति । ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना या
जातयो बाह्या जाता म्लेच्छभाषायुक्ता आर्य्यभाषोपेता वा ते
दस्यवः सर्व्वे स्मृताः ॥ ४५ ॥

ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्म्मभिः ॥ ४६ ॥

य इति । ये द्विजानामानुलोम्येन उत्पन्नाः षडेतेऽपसदाः
स्मृता इति तेषामपि पितृतो जघन्यत्वेनापसदशब्देन प्रागभि-
धानात् ये चापध्वंसजाः प्रतिलोमजास्ते द्विजात्युपकारकैरेव
निन्दितैर्वक्ष्यमाणैः कर्म्मभिर्जीवेयुः ॥ ४६ ॥

सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्। वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥ ४७ ॥

सूतानामिति। सूतानामश्वदमनयोजनादि रथसारथ्यं जीवनार्थं। अम्बष्ठानां रोगशान्त्यादिचिकित्सा वैदेहकानां अन्तःपुररक्षणं मागधानां स्थलपथवणिज्या ॥ ४७ ॥

मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च। मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥ ४८ ॥

मत्स्येति। निषादानामुक्तानां मत्स्यवधः। आयोगवस्य काष्ठतक्षणं। मेदान्ध्रचुञ्चुमद्गूनां आरण्यपशुमारणम्। चुञ्चुर्मद्गुश्च वैदेहकवन्दिस्त्रियोर्ब्राह्मणेनजातौ मैधावमेदौ वैडूयौ वन्दिजौ च चत्रियेव मुद्रायां जाता तदुक्तैव याख्या ॥ ४८ ॥

क्षत्तृग्रपुक्कसानान्तु बिलौकोवधबन्धनम्। धिग्वणानां चर्मकार्यं वेणानां भाण्डवादनम् ॥ ४९ ॥

क्षत्त्रिति। क्षत्रादीनां बिलनिवासिगोधादिवधबन्धनं धिग्वणानां चर्मकरणं तद्विक्रयश्च। चर्मकरणं तद्विक्रयश्च जीवनं धिग्वणानामिति विशेषदर्शनात् अतएव कारावरेभ्यः एषां दृष्टिभेदः वेणानां कांस्यमुरजादिभाण्डवादनम् ॥ ४९ ॥

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च। वसेयुरेते विज्ञाना वर्त्तयन्तः स्वकर्म्मभिः ॥ ५० ॥

चैत्येति। ग्रामादिसमीपे ख्यातवृक्षश्चैत्यद्रुमः तन्मूले श्मशानपर्व्वतवनसमीपेषु चामी प्रकाशकाः स्वकर्म्मभिर्जीवन्तो वसेयुः ॥ ५० ॥

चण्डालश्वपचानान्तु बहिर्ग्रामात्प्रतिश्रयः। अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम् ॥ ५१ ॥

वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम्। कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥

चण्डालेति। वासांसीति। प्रतिश्रयो निवासः चण्डालश्वपाकानान्तु ग्रामाद्बहिर्निवासः स्यात् पात्ररहिताः कर्त्तव्या यच्च लोहादिपात्रे तैर्भुक्तं तत्संस्कृतमपि न व्यवहर्त्तव्यं धनञ्चैषां कुक्कुरखरं न वृषभादि। वासांसि च शवसम्बन्धीनि भिन्नशरावादिषु च भोजनं लोहवलयादि चालङ्करणं सर्व्वदा च भ्रमणशीलत्वम् ॥ ५१ ॥ ५२ ॥

न तैः समयमन्विच्छेत्पुरुषो धर्म्ममाचरन्। व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥

न तैरिति। धर्म्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादि

व्यवहारं न कुर्य्यात्। तेषाञ्च व्यवहारमयचापि स्वव्यवहारो विवा
हश्च समानजातीयैः सहान्योन्यं स्यात् ॥ ५३ ॥

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने। रात्रौ
न विचरेयुस्ते ग्रामेषु नगरेषु च ॥ ५४ ॥

अन्नमेषामिति। अन्नमेषां पराधीनं कार्य्यं साक्षाद्देयो
न देयं किन्तु भृत्यैर्भिन्नपात्रे दातव्यम्। तेच रात्रौ ग्रामनगर
योर्न पर्य्यटेयुः ॥ ५४ ॥

दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः।
अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः ॥ ५५ ॥

दिवेति। दिवा ग्रामादौ क्रयविक्रयादिकार्य्यार्थं राजाज्ञया
चिह्नाङ्किताः सन्तः पर्य्यटेयुः अनाथञ्च शवं ग्रामान्निर्हरेयु
रिति शास्त्रमर्यादा ॥ ५५ ॥

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। वध्य
वासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥ ५६ ॥

वध्यांश्चेति। वध्यांश्च शास्त्रानतिक्रमेण शूलारोपणादिना

वर्णसंकरा राजाज्ञया सन्तुः तदन्यमन्यासङ्करांश्च सृजीतु ॥ ५६ ॥

वर्णापेतमविज्ञातं नरं कलुषयोनिजम्। आर्य्य रूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत् ॥ ५७ ॥

वर्णेति। वर्णत्वादपेतं मनुष्यं सङ्करजातं यं लोकेऽसंघालेना विज्ञातं अतएवार्य्यसदृशं वस्तुतः पुनरनार्य्यं निन्दितयोन्यनु रूपाभिश्चेष्टाभिर्वक्ष्यमाणाभिर्विभिन्दात् ॥ ५७ ॥

अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता। पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥

अनार्य्यतेति। निष्ठुरत्वपरुषभाषित्वहिंस्रत्वविहिताऽननु ष्ठानत्वानि सङ्करजातिं नरं अस्मिन् लोके प्रकटीकुर्व्वन्ति ॥ ५८ ॥

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा। न कथञ्चन दुर्य्योनिः प्रकृतिं स्वां नियच्छति ॥ ५९ ॥

यस्मात् पित्र्येति। असौ सङ्करजातो दुष्टयोनिः

पितृसम्बन्धिदुष्टस्वभावं सेवते मातृसम्बन्धिनमुभयसम्बन्धि वा नकदाचिदसावात्मकारणं गोपयितुं शक्नोति ॥ ५९ ॥

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ६० ॥

कुल इति । महाकुलप्रसूतस्यापि यस्य योनिसङ्करः प्रच्छन्नो भवति स मनुष्यो जनकस्वभावं स्तोकं प्रचुरं वा सेवत एव ॥ ६० ॥

यत्र त्वेते परिध्वंसाज्जायन्ते वर्णदूषकाः । राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥ ६१ ॥

यत्रेति । यस्मिन्राष्ट्रे एते वर्णसङ्करा वर्णानां दूषका जायन्ते तद्राष्ट्रं राष्ट्रवासिभिः सह शीघ्रमेव नाशमेति । तस्माद्राज्ञा वर्णानां सङ्करो निरसनीयः ॥ ६१ ॥

ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥ ६२ ॥

ब्राह्मणार्थ इति । गोब्राह्मणस्त्रीबालानामन्यतमस्यापि परित्राणार्थं दृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमजानां स्वर्गप्राप्तिकारणम् ॥ ६२ ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ६३ ॥

अहिंसेत्यादि । हिंसात्यागो यथार्थाभिधानम् । अन्यायेन परधनस्याग्रहणं मृज्जलादिना विशुद्धिरिन्द्रियसंयम इत्येवं धर्मं सङ्क्षेपतश्चातुर्वर्ण्यानुष्ठेयं मनुराह प्रकरणसामर्थ्यात्सङ्कीर्णानामप्यऽयं धर्मो वेदितव्यः ॥ ६३ ॥

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते । अश्रेयान् श्रेयसीं जातिङ्गच्छत्यासप्तमाद्युगात् ॥ ६४ ॥

इदानीं वर्णोत्कर्षं तु सप्तमयुगजन्मव्यतिरेकेणापि ब्राह्मणादिदर्शयितुमाह शूद्रायामिति । शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः प्रजायत इति सामर्थ्यात् स्त्रीरूपः स्यात् । सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूयते सा दुहितरमेव जनयति साप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति साप्येवमेवं सप्तमे युगे जन्मनि स पारशवाख्यो वर्णो बीजप्राधान्यात् ब्राह्मण्यं प्राप्नोति आसप्तमाद्युगादित्यभिधानात् सप्तमे जन्मनि ब्राह्मणः सम्पद्यत इत्यर्थः ॥ ६४ ॥

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥६५॥

शूद्र इति। एवं पूर्व्वश्लोकोक्तरीत्या शूद्रो ब्राह्मणतां याति ब्राह्मणश्च शूद्रतामेति ब्राह्मणोऽथ ब्राह्मणात् शूद्रायामुत्पन्नः पारशवो ज्ञेयः स यदि पुमान् केवलशूद्रादारेण तस्यां पुमांसमेव जनयति सोऽपि केवलशूद्रादारेणापरं पुमांसमेव जनयति सोऽप्येवं सप्तमं जन्म प्राप्तः केवलशूद्रतां बीजनिकर्षात् क्रमेण प्राप्नोति एवं क्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात् किन्तु जातेरपकर्षात् जात्युत्कर्षौ युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा इति याज्ञवल्क्यदर्शनाच्च क्षत्रियाज्जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ बोद्धव्यौ वैश्याज्जातस्य ततोऽनुत्कर्षात् याज्ञवल्क्येनापि क्रमेण पञ्चान्तरस्य संगृहीतत्वात् तद्व्याख्यानुरोधाच्च तृतीये जन्मनि उत्कर्षापकर्षौ ज्ञेयौ अनेनैव न्यायेन ब्राह्मणेन वैश्यायां जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ क्षत्रियायां जातस्य तृतीये क्षत्रियेण वैश्यायां जातस्य तृतीय एव बोद्धव्यौ ॥६५॥

अनार्य्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया।
ब्राह्मण्यामप्यनार्य्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥६६॥

अनार्य्येति। एकः शूद्रायां यदृच्छया अनूढायामपि

ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातः इयोर्मध्ये कतरो त्पन्नश्च श्रेयस्त्वमिति चेत्संशयः क्वचित् स्यात् तत्र यथाबीजस्य यथा बीजोत्कर्षात् ब्राह्मणात् शूद्रायां जातः साधुः शूद्रः एवं चेत्रो त्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात् ॥ ६६ ॥

जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः।
जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः ॥६७॥

तत्र निर्णयमाह जातइति। शूद्रायां स्त्रियां ब्राह्मणाज्जातः भृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्तो भवति शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमतत्त्वोत्पन्नतया शूद्रधर्मे ष्वप्यनधिकारादप्रशस्तइति निश्चयः न्यायप्राप्तोऽप्यर्थो वचन प्रामाण्यादत्र बोध्यते ॥ ६७ ॥

तावुभावप्यसंस्कार्य्याविति धर्मो व्यवस्थितः।
वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः ॥ ६८ ॥

तावुभाविति। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यव स्थिता शास्त्रमर्य्यादा पूर्व्वः पारशवः शूद्राजातत्वेन जातिवैगु ण्यादनुपनेयः प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वात् इत्युत्तर त्वेनानुपनेयः ॥ ६८ ॥

सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा । तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥ ६९ ॥

सुबीजमिति । यथा शोभनबीजं शोभनक्षेत्रे जातं समृद्धं भवति एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च विवाहितयोर्जातः सर्वसंस्कारं उपनयनसंस्कारञ्च सर्वं श्रौतं स्मार्त्तञ्चार्हति न च पारशवक्षत्तादाविति पूर्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः । बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥ ७० ॥

मतदर्शनान्तरानुक्त्वा बीजक्षेत्रयोरर्थमाह बीजमिति । केचित्पण्डिता बीजं स्तुवन्ति हरिणापुत्रस्य च ऋष्यशृङ्गादेर्महामुनित्वदर्शनात् । अपरे पुनः क्षेत्रं स्तुवन्ति क्षेत्रजानपि पुत्रदर्शनात् अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति सुबीजस्य सुक्षेत्रे वृद्धिदर्शनात् एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया ॥ ७० ॥

अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति । अबीजकमपि क्षेत्रं केवलं स्थण्डिलम्भवेत् ॥ ७१ ॥

अक्षेत्रमिति । ऊषरप्रदेशे बीजमुप्तं फलमदत्त्वान्तराच

एव विनश्यति क्षेत्रमपि केवलं बीजरहितं खण्डिलमेव केवलं स्यात् न तु शस्यमुत्पद्यते तस्मात्प्रत्येकमिन्द्रिया मुनीक्षेव सुष्ठेवइति प्रागुक्तं उभयप्राधान्यमेवाभिमतम् ॥ ७१ ॥

यस्माद्वीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजम्प्रशस्यते ॥ ७२ ॥

इदानीं बीजप्राधान्यपक्षे दृष्टान्तमाह यस्मादिति । यस्माद्बीजमाहात्म्येन तिर्य्यग्जातिहरिण्यादिजाता अपि ऋष्यशृङ्गादयो मुनित्वमापन्नाः पूजिताश्च अभिवादनादिना वेदव्याख्यानादिना प्रशस्ता वाचा संस्तुताः तस्माद्बीजं प्रशस्यते एवञ्च बीजप्राधान्यविषयत्वं बीजक्षेत्रयोर्मध्ये बीजोत्कृष्टाजातिः प्रधाननिमित्तमपरतया वोद्धव्यम् ॥ ७२ ॥

अनार्य्यमार्य्यकर्म्माणमार्य्यं चानार्य्यकर्म्मिणं ।
सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति ॥ ७३ ॥

अनार्य्यमिति । शूद्रं द्विजातिकर्म्मकारिणं द्विजातिञ्च शूद्रकर्म्मकारिणं ब्रह्मा विचार्य्य न समौ नासमावित्यवोचत् यतः शूद्रो द्विजातिकर्म्मापि न द्विजातिसमः तस्मानधिकारित्वो द्विजाति

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च। वसेयुरेते विज्ञाना वर्त्तयन्तः स्वकर्म्मभिः ॥ ५० ॥

चैत्येति। ग्रामादिसमीपे ख्यातवृक्षश्चैत्यद्रुमः तन्मूले श्मशा नपर्व्वतवनसमीपेषु चामी प्रकाशकाः स्वकर्म्मभिर्जीवन्तो वसेयुः ॥ ५० ॥

चण्डालश्वपचानान्तु बहिर्ग्रामात्प्रतिश्रयः। अप पात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम् ॥ ५१ ॥

वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम्। कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥

चण्डालेति। वासांसीति। प्रतिश्रयो निवासः चाण्डालश्वपा कानान्तु ग्रामाद्बहिर्निवासः स्यात् पात्ररहिताः कर्त्तव्या यच लोहादिपात्रे तैर्भुक्तं तत्संस्कृत्यापि न व्यवहर्त्तव्यं धनञ्चैषां कुक्कुरखरं न वृषभादि। वासांसि च शववस्त्राणि भिन्नशरावा दिषु च भोजनं लौहवलयादि चालङ्करणं सर्व्वदा च भ्रमण शीलत्वम् ॥ ५१ ॥ ५२ ॥

न तैः समयमन्विच्छेत्पुरुषो धर्म्ममाचरन्। व्यव हारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥

न तैरिति। धर्म्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादि

व्यवहारं न कुर्यात्। तेषाञ्च ऋणदानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सहान्योन्यं स्यात्॥ ५३॥

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने। रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च॥ ५४॥

अन्नमेषामिति। अन्नमेषां परायत्तं कार्य्यं साक्षादेभ्यो न देयं किन्तु भृत्यैर्भिन्नपात्रे दातव्यम्। तेच रात्रौ ग्रामनगरयोर्न पर्य्यटेयुः॥ ५४॥

दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः। अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः॥ ५५॥

दिवेति। दिवा ग्रामादौ क्रयविक्रयादिकार्य्यार्थं राजाज्ञया चिह्नाङ्किताः सन्तः पर्य्यटेयुः अनाथञ्च शवं ग्रामान्निर्हरेयु रिति शास्त्रमर्य्यादा॥ ५५॥

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च॥ ५६॥

वध्यांश्चेति। वध्यांश्च राजाज्ञानियमेनैव शूलारोपणादिना

वर्णोरा राजाज्ञया हन्युः तदवमध्यास्त्वाराश्च मृतीयुः ॥ ५६ ॥

वर्णापेतमविज्ञातनरंकलुषयोनिजम्। आर्य्य रूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत् ॥ ५७ ॥

वर्णेति। वर्णत्वादपेतं मनुष्यं सङ्करजातं यं लोकेसत्यात्वेना विज्ञातं अतएवार्य्यसदृशं वस्तुतः पुनरनार्य्यं निन्दितयोन्यनु रूपाभिश्चेष्टाभिर्वक्ष्यमाणाभिर्निश्चिनुयात् ॥ ५७ ॥

अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता। पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥

अनार्य्यतेति। निष्ठुरत्वपरुषभाषित्वहिंसात्वविहिताऽननु ष्ठानत्वानि सङ्करजातिं नरं अस्मिन् लोके प्रकटीकुर्व्वन्ति ॥ ५८ ॥

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा। न कथञ्चन दुर्य्योनिः प्रकृतिं स्वांनियच्छति ॥ ५९ ॥

यस्मात् पित्र्यमेति। असौ सङ्करजातो दुष्टयोनिः

पितृस्वभावमनिष्टदुष्टस्वभावं सेवते मातृस्वभावमथोभयस्वभावमपि वा न कदाचिदसावात्मकारणं गोपयितुं शक्नोति ॥ ५९ ॥

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ६० ॥

कुल इति। महाकुलप्रसूतस्यापि यस्य योनिसङ्करः प्रच्छन्नो भवति स मनुष्यो जनकस्वभावं स्तोकं प्रचुरं वा सेवत एव ॥ ६० ॥

यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः। राष्ट्रिकैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥ ६१ ॥

यत्रेति। यस्मिन्राष्ट्रे एते वर्णसङ्करा वर्णानां दूषका जायन्ते तद्राष्ट्रं राष्ट्रवासिभिः सह शीघ्रमेव नाशमेति। तस्माद्राज्ञा वर्णानां सङ्करो निरसनीयः ॥ ६१ ॥

ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥ ६२ ॥

ब्राह्मणार्थ इति। गोब्राह्मणस्त्रीबालानामन्यतमस्यापि परित्राणार्थं दृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमजानां स्वर्गप्राप्तिकारणम् ॥ ६२ ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ६३ ॥

अहिंसेत्यादि । हिंसात्यागो यथार्थाभिधानम् । अन्यायेन परधनस्याग्रहणं मृज्जलादिना विग्रहशुद्धिरिन्द्रियसंयम इत्येवं धर्मं संक्षेपतश्चातुर्वर्ण्यानुष्ठेयं मनुराह प्रकरणात्सङ्कीर्णानामप्ययं धर्मो वेदितव्यः ॥ ६३ ॥

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते । अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥ ६४ ॥

इदानीं वर्णसंकरेषु तुल्यजात्युत्कर्षव्यतिरेकेणापि ब्राह्मणादिर्भवितुमाह शूद्रायामिति । शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः प्रजायत इति सामर्थ्यात् स्त्रीरूपः स्यात् । सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूयते सा दुहितरमेव जनयति साप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति साप्येवमेवं सप्तमे युगे जन्मनि स पारशवाख्यो वर्णो बीजप्राधान्यात् ब्राह्मण्यं प्राप्नोति आसप्तमाद्युगादित्यभिधानात् सप्तमे जन्मनि ब्राह्मणः सम्पद्यत इत्यर्थः ॥ ६४ ॥

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥ ६५ ॥

शूद्र इति। एवं पूर्वश्लोकोक्तरीत्या शूद्रो ब्राह्मणतां याति ब्राह्मणश्च शूद्रतामेति ब्राह्मणोऽथ ब्राह्मणात् शूद्रायामुत्पन्नः पारशवो ज्ञेयः स यदि पुमान् केवलशूद्रादारेण तस्यां पुमांसमेव जनयति सोपि केवलशूद्रादारेणापरं पुमांसमेव जनयति सोप्येवं सप्तमं जन्म प्राप्तः केवलशूद्रतां बीजनिकर्षात् क्रमेण प्राप्नोति एवं क्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात् किन्तु जातेरपकर्षात् जात्युत्कर्षौ युगे ज्ञेयः सप्तमे पञ्चमेपिवा इति याज्ञवल्क्यदर्शनाच्च क्षत्रियाज्जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ बोद्धव्यौ वैश्याज्जातस्य ततोप्युत्कर्षात् याज्ञवल्क्येनापि वा शब्देन पक्षान्तरस्य संगृहीतत्वात् तद्युक्त्यानुरोधाच्च तृतीये जन्मनि उत्कर्षापकर्षौ ज्ञेयौ अनेनैव न्यायेन ब्राह्मणेन वैश्यायां जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ क्षत्रियाया जातस्य तृतीये क्षत्रियेण वैश्यायां जातस्य तृतीय एव बोद्धव्यौ ॥ ६५ ॥

अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥ ६६ ॥

अनार्यायामिति। एकः शूद्रायां यदृच्छया अनूढायामपि

ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातः द्वयोर्मध्ये कतरो त्पन्नस्य श्रेयस्त्वमिति चेत्संशयः क्वचित् स्यात् तत्र यद्बीजस्य यथा बीजोत्कर्षात् ब्राह्मणात् शूद्रायां जातः साधुः शूद्रः एवं चेत्को त्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात् ॥ ६६ ॥

जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः।
जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः ॥६७॥

तत्र निर्णयमाह जातइति। शूद्रायां स्त्रियां ब्राह्मणाज्जातः सूत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्तो भवति शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमतत्त्वोत्पन्नतया शूद्रधर्म्मे ष्वप्यनधिकारादप्रशस्तइति निश्चयः न्यायप्राप्तोप्ययमर्थो वचन प्रामाण्यादृच बोध्यते ॥ ६७ ॥

तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः।
वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः ॥ ६८ ॥

तावुभाविति। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यव स्थिता शास्त्रमर्य्यादा पूर्व्वः पारशवः शूद्राजातत्वेन जातिवैगु ण्यादनुपनेयः प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वात् इत्युत्तर स्तेनानुपनेयः ॥ ६८ ॥

सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा । तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥ ६९ ॥

सुबीजमिति । यथा शोभनबीजं शोभनक्षेत्रे जातं सम्यग्भवति एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सर्व्वसंस्कारं उपनयनसंस्कारञ्च सर्व्वं श्रौतं स्मार्त्तञ्चार्हति न च पारशवचण्डालाविति पूर्व्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः । बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥ ७० ॥

प्रदर्शनान्तरानुक्तबीजार्थञ्च क्षेत्रार्थमाह बीजमिति । केचित्पण्डिता बीजं स्तुवन्ति हरिण्यामुत्पन्नस्य ऋष्यशृङ्गादेर्मुनित्वदर्शनात् । अपरे पुनः क्षेत्रं स्तुवन्ति क्षेत्रस्वामिपुत्रत्वदर्शनात् अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति सुबीजस्य सुक्षेत्रे समृद्धिदर्शनात् एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया ॥ ७० ॥

अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति । अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥ ७१ ॥

अक्षेत्र इति । ऊषरप्रदेशे बीजमुप्तं फलमदत्त्वान्तरा च

ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातः द्वयोर्मध्ये कतरो त्पन्नस्य श्रेयस्त्वमिति चेत्संशयः क्वचित् स्यात् संशयवीजञ्च यथा बीजोत्कर्षात् ब्राह्मणात् शूद्रायां जातः साधुः शूद्रः एवं चेत्यो त्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात् ॥ ६६ ॥

जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः।
जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः ॥६७॥

तत्र निर्णयमाह जातइति। शूद्रायां स्त्रियां ब्राह्मणाज्जातः भृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्तो भवति शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमतउत्पन्नतया शूद्रधर्मे ष्वप्यनधिकारादप्रशस्तइति निश्चयः न्यायप्राप्तोऽप्यर्थो कथ्य शास्त्राच्च बोध्यते ॥ ६७ ॥

तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः।
वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः ॥ ६८ ॥

तावुभाविति। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यव स्थिता शास्त्रमर्य्यादा पूर्व्वः पारशवः शूद्राजातत्वेन जातिवैगु ण्यादनुपनेयः प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वात् इत्युत्तर श्चानुपनेयः ॥ ६८ ॥

सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा । तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥ ६९ ॥

सुबीजमिति । यथा शोभनबीजं शोभनक्षेत्रे जातं सम्यग्भवति एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सवर्णसंस्कारं उपनयनसंस्कारञ्च सर्व्वं श्रौतं स्मार्त्तञ्चार्हति न च पारशवक्षत्तारावितिपूर्व्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः । बीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥ ७० ॥

प्रदर्शनार्थमनन्तरोक्तबीजार्थस्य क्षेत्रार्थमाह बीजमिति । केचित्पण्डिता बीजं स्तुवन्ति हरिण्याद्युत्पन्नस्य ऋष्यशृङ्गादेर्मुनित्वदर्शनात् । अपरे पुनः क्षेत्रं स्तुवन्ति क्षेत्रजस्यापि पुत्रत्वदर्शनात् अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति सुबीजस्य सुक्षेत्रे वसिष्ठादिदर्शनात् एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया ॥ ७० ॥

अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति । अबीजकमपि क्षेत्रं केवलं स्थण्डिलम्भवेत् ॥ ७१ ॥

अक्षेत्रइति । ऊषरप्रदेशे बीजमुप्तं फलमदत्त्वान्तराच

एव विनश्यति क्षेत्रमपि केवलं बीजरहितं खिलमेव केवलं स्यात् न तु सस्यमुत्पद्यते तस्मात्प्रत्येकमिन्द्रया. सुबीजञ्चैव सुक्षेत्रे इति प्रागुक्तं उभयप्राधान्यमेवाभिमतम्॥ ७१॥

यस्माद्बीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते॥ ७२॥

इदानीं बीजप्राधान्यपक्षे दृष्टान्तमाह यस्मादिति। यस्माद्बीजमाहात्म्येन तिर्य्यग्जातिहरिण्यादिजाता अपि ऋष्यशृङ्गादयो मुनित्वमाप्ताः पूजिताश्च अभिवादनादिना वेदज्ञानादिना प्रशस्ता वाचा संस्तुताः तस्माद्बीजं प्रशस्यते एतच्च बीजप्राधान्यविगमनं बीजक्षेत्रयोर्मध्ये बीजोत्कृष्टा जातिः प्रधान निक्षेपपरतया बोद्धव्यम्॥ ७२॥

अनार्य्यमार्य्यकर्म्माणमार्य्यं चानार्य्यकर्म्मिणम्।
सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति॥ ७३॥

अनार्य्यमिति। शूद्रं द्विजातिकर्मकारिणं द्विजातिञ्च शूद्रकर्मकारिणं ब्रह्मा विचार्य्य न समौ नासमावित्यवोचत् यतः शूद्रो द्विजातिकर्म्मापि न द्विजातिसमः तथानधिकारिणो द्विजाति

ब्राह्मणस्यैव तत्प्रत्याख्यानात्। एवं शूद्रकर्माणि द्विजातिः न शूद्रसमः शिल्पिवृत्तेरन्येन जात्युत्कर्षस्यानपायात् न्यायतश्चो निषिद्धाचरणेनोभयोः साम्यात्। तस्मादयमपि विमर्शितं तत्तेन न कर्तव्यमिति शास्त्रतः प्रत्यवायोपदेशः ॥ ७३ ॥

ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः।
ते सम्यगुपजीवेयुः षट् कर्माणि यथाक्रमम्॥ ७४॥

इदानीं ब्राह्मणानामापद्धर्मप्रसङ्गेन विस्तरमाह ब्राह्मणा इति। ये ब्राह्मणा ब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाः स्वकर्मानुष्ठाननिरताश्च ते षट् कर्माणि वक्ष्यमाणान्यध्यापना दीनि क्रमेण सम्यगनुतिष्ठेयुः॥ ७४॥

अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः॥ ७५॥

तानि कर्माण्याह अध्यापनमिति। अध्यापनाध्ययने ब्राह्मणस्य वेदस्य। तथा यजनयाजने दानप्रतिग्रहौ चेति एतानि षट् कर्माणि ब्राह्मणस्य विहितानि॥ ७५॥

षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥ ७६ ॥

षण्णामिति। अस्य ब्राह्मणस्य एषामध्यापनादीनां षण्णां कर्म्मणां मध्याद्याजनमध्यापनं विशुद्धप्रतिग्रहैर्धनं लिप्सेत् प्रशस्तेभ्योऽद्विज इति वचननिर्द्दिष्टाद्विजातेः प्रतिग्रह इत्येतानि त्रीणि कर्म्माणि जीवनार्थानि ज्ञेयानि ॥ ७६ ॥

त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात्क्षत्रियम्प्रति।
अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः ॥ ७७ ॥

त्रयो धर्म्मा इति। ब्राह्मणापेक्षया क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि वृत्त्यर्थानि त्रीणि कर्म्माणि निवर्त्तन्ते अध्ययनयागदानानि तु तस्यापि भवन्ति ॥ ७७ ॥

वैश्यम्प्रति तथैवैते निवर्त्तेरन्निति स्थितिः। न तौ प्रति हि तान् धर्म्मान्मनुराह प्रजापतिः ॥ ७८ ॥

वैश्यप्रतीति। यथा क्षत्रियस्याध्यापनयाजनप्रतिग्रहा निवर्त्तन्ते तथा वैश्यस्यापीति शास्त्रव्यवस्था। यस्मान्मनुः प्रजा

पतिः तौ क्षत्रियवैश्यौ प्रति तानि स्वधर्माणि कर्माणि कर्त्तव्यानीति प्रोक्तवान् एवं वैश्यस्याप्यध्ययनयागदानानि भवन्ति ॥ ७८ ॥

शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥ ७९ ॥

शस्त्रास्त्रेति। शस्त्रं खड्गादि अस्त्रं चापादि तद्धारणम् आरक्षणाय क्षत्रियस्य स्वधर्मम्। वाणिज्यपशुरक्षणकृषिकर्माणि वैश्यस्य जीवनार्थानि। धर्मार्थाः पुनरनयोर्दानाध्ययनयागा भवन्ति ॥ ७९ ॥

वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।
वार्त्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥ ८० ॥

वेदेति। वेदाभ्यासो वेदाध्यापनं रक्षावार्त्ताभ्यां स्वधर्माभ्यां यथोपदेशादेतद्ब्राह्मणस्य। प्रजारक्षणं क्षत्रियस्य। वाणिज्यं पाशुपाल्यं वैश्यस्य। एतान्येतेषां स्वधर्मकर्मसु श्रेष्ठानि ॥ ८० ॥

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥ ८१ ॥

अधुना आपद्धर्मानाह अजीवन्निति। यथोक्तेनाध्यापना

हितकर्मणा ब्राह्मणो नित्यकर्मानुष्ठानकुटुम्बभरणपूर्वकमजीवन् क्षत्रियकर्मणा ग्रामनगररक्षणादिना जीवेत्। यस्मात्क्षत्रियधर्मोऽस्य सन्निकृष्टा वृत्तिः ॥ ८१ ॥

उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकां ॥ ८२ ॥

उभाभ्यामिति। ब्राह्मण उभाभ्यां स्ववृत्तिक्षत्रियवृत्तिभ्यामप्यजीवन् केन प्रकारेण वर्त्तेतेति यदि संशयः स्यात्तदा कृषिपशुरक्षणे आश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत्। कृषिगोरक्षग्रहणं वाणिज्यस्यापि प्रदर्शनार्थं तथाच विक्रेयाणि वक्ष्यति स्वयं कृतश्चेदं कृष्यादि ब्राह्मणापद्वृत्तिः। अस्वयं कृतञ्च ऋतामृताभ्यां जीवेत इत्यनापद्येव विहितत्वात् ॥ ८२ ॥

वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोपि वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥ ८३ ॥

सम्प्रति कृष्यादेर्वर्जनक्रमाह वैश्येति। ब्राह्मणः क्षत्रियो वा वैश्यवृत्त्यापि जीवन् भूमिष्ठजन्तुहिंसाबहुलां बलीवर्दादिपराधीनां कृषिं यत्नतस्त्यजेत् अतः पशुपालनाद्यभावे कृषिः कार्य्येति द्रष्टव्यम्। क्षत्रियोपि वैश्योपादानात्क्षत्रियस्याप्यात्मीयवृत्त्यभावे वैश्यवृत्तिरभ्यनुज्ञायते ॥ ८३ ॥

कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥ ८४ ॥

कृषिमिति । साध्विदं जीवनमिति कृषिं केचिन्मन्यन्ते सा पुनर्जीविका साधुभिर्विगर्हिता यस्मादयोमुखकुद्दालादिलोह मात्रं काष्ठं भूमिं भूमिष्ठजन्तूंश्च हन्ति ॥ ८४ ॥

इदं तु वृत्तिवैकल्यात्त्यजतो धर्मनैपुणम् । विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम् ॥ ८५ ॥

इदमिति । ब्राह्मणस्य क्षत्रियस्य चात्मीयवृत्त्यभावे धर्मनिपुणतां त्यजतो वैश्येन यद्विक्रेतव्यं द्रव्यजातं तत् वक्ष्यमाणवर्जनीयवर्जितं धनवृद्धिकरं विक्रेयं ॥ ८५ ॥

सर्वान्रसानपोहेत कृतान्नञ्च तिलैः सह ।
अश्मनो लवणञ्चैव पशवो ये च मानुषाः ॥ ८६ ॥

तानि वर्जनीयान्याह सर्वानिति । सर्वान् पीयमानान् रसान् तथा सिद्धान्नतिलपाषाणलवणपशुमनुष्यान् न विक्रीणीत । एतन्मध्येऽपि च तिलविक्रयो विशेषेण निषेधो दोषभूयस्त्वज्ञापनार्थः तत्र प्रायश्चित्तगौरवार्थमेव एवमन्यत्रापि पुनर्निषेधो ज्ञातव्यः ॥ ८६ ॥

सर्व्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च।
अपि चेत्स्युररक्तानि फलमूले तथौषधी॥ ८७॥

सर्व्वमिति। सर्व्वं तन्तुनिर्म्मितं वस्त्रं कुसुम्भादिना रक्तं वर्ज्जयेत्। शणक्षुमातन्तुमयान्याविकलोमभवानि च यद्यलोहितान्यपि भवेयुः तथापि न विक्रीणीत तथा फलमूलगुडूच्यादीनपि वर्ज्जयेत्॥ ८७॥

अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्॥ ८८॥

अप इति। जलशस्त्रविषमांससोमक्षीरदधिघृततैलगुडदर्भान् तथा गन्धवन्ति सर्व्वाणि कर्पूरादीनि क्षौद्रं माक्षिकं मधु मधूच्छिष्टं मद्यासवमधूच्छिष्टेति वाग्भटवचनेन पठितं वर्ज्जयेत्॥ ८८॥

आरण्यांश्च पशून्सर्व्वान्दंष्ट्रिणश्च वयांसि च।
मद्यं नीलिञ्च लाक्षाञ्च सर्व्वांश्चैकशफांस्तथा॥ ८९॥

आरण्यानिति। आरण्यान् सर्व्वान् पशून् हस्त्यादीन्दंष्ट्रिणः सिंहादीन् तथा पक्षिमद्यलाक्षैकशफांश्चाश्वादीन् न विक्रीणीत॥ ८९॥

काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्री
णीत तिलाञ्छुद्धान् धर्मार्थमचिरस्थितान् ॥ ९० ॥

काममिति । कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्त
रैरमिश्रान् तत्पाकानन्तरमेव न तु लाभार्थं कालान्तरं
प्रतीक्ष्य धर्मनिमित्तमिच्छातो विक्रीणीत निषिद्धस्यापि तिल
विक्रयस्य धर्मार्थमयमतिप्रसवः ॥ ९० ॥

भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥ ९१ ॥

भोजनेति । भोजनाभ्यञ्जनदानव्यतिरिक्तं यदन्यद्विनिषिद्धं विक्र
यादि तिलानां कुरुते तेन पापेन पितृभिः सह कृमित्वं प्राप्तः
कुक्कुरपुरीषे मज्जति ॥ ९१ ॥

सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण
शूद्रीभवति ब्राह्मणः क्षीरविक्रयात् ॥ ९२ ॥

सद्य इति । मांसलाक्षालवणविक्रयैर्ब्राह्मणस्तत्क्षणादेव पत
तीति दोषगौरवख्यापनार्थमेतत् पञ्चानामेव महापातका
नाम्पातित्यहेतूनां वक्ष्यमाणत्वात् । क्षीरविक्रयात् त्र्यहेण

शूद्रतां प्राप्नोति स्वल्पदपि दोषगौरवात् प्राज्ञविवर्जनोदकस्था पवार्थकम् ॥ ९२ ॥

इतरेषान्तु पण्यानां विक्रयादिह कामतः।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥ ९३ ॥

इतरेषामिति। ब्राह्मण उक्तेभ्यो मांसादिभ्योऽन्येषां प्रति षिद्धानां पण्यानां इच्छातो न तु प्रमादात् द्रव्यान्तरसंश्लिष्टानां सप्तरात्रविक्रयणेन वैश्यत्वमृच्छति ॥ ९३ ॥

रसा रसैर्निमातव्या न त्वेव लवणं रसैः। कृता ब्राह्मणतान्नेन तिला धान्येन तत्समाः ॥ ९४ ॥

रसा इति। रसा गुडादयो रसैर्घृतादिभिः परिवर्त्तनीयाः लवणन्तु रसान्तरेण न परिवर्त्तनीयं सिद्धान्नमामान्न परिवर्त्तनीयं तिला धान्येन धान्यं प्रस्थः प्रस्थेनेत्येवं तत्समाः परिवर्त्तनीयाः ॥ ९४ ॥

जीवेदेतेन राजन्यः सर्व्वेणाप्यनयङ्गतः। न त्वेवं ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥ ९५ ॥

जीवेदिति। क्षत्रियः अपाद्गतः एतेनेत्यभिधाय सर्व्वेणेत्य भिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन

वैश्यवज्जीवेत् न पुनः कदाचिद्ब्राह्मणजीविकामाश्रयेत् न केवलं क्षत्रियः वैश्यादयोऽपि ॥ ९५ ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः। तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥ ९६ ॥

यो लोभादिति। यो निकृष्टजातिः सन् लोभादुत्कृष्टजाति विहितकर्मभिर्जीवेत् तं राजा गृहीतसर्वस्वं कृत्वा तदानीमेव देशान्निःसारयेत् ॥ ९६ ॥

वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्मेण जीवन् हि सद्यः पतति जातितः ॥ ९७ ॥

वरमिति। विगुणमपि स्वकर्म कर्तुं न्याय्यं न परकीयं संपूर्णमपि यस्मादन्यजातिविहितकर्मणा जीवन् तत्क्षणादेव स्वजातितः पततीति दोषप्रदर्शनार्थः ॥ ९७ ॥

वैश्योऽजीवन् स्वधर्मेण शूद्रवृत्त्यापि वर्त्तयेत्। अनाचरन्नकार्याणि निवर्त्तेत च शक्तिमान् ॥ ९८ ॥

वैश्य इति। वैश्यः स्ववृत्त्या जीवितुमशक्नुवन् शूद्रवृत्त्यापि द्विजातिशुश्रूषया उच्छिष्टभोजनादीन्यकुर्वन् वर्त्तेत निस्तीर्णाप त्कस्तु शूद्रवृत्तितो निवर्त्तेत ॥ ९८ ॥

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम।
पुत्रदारात्ययम्प्राप्तो जीवेत्कारुककर्म्मभिः॥ ९९ ॥

अशक्नुवन्निति। शूद्रः द्विजातिशुश्रूषां कर्त्तुमक्षमः क्षुदव सन्नपुत्रकलत्रः सूपकारादीनां कर्म्मभिर्जीवेत्॥ ९९॥

यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्म्माणि शिल्पानि विविधानि च॥ १००॥

यैरिति। पूर्व्वोक्तकारुकर्म्मविशेषाभिधानार्थं इदं। यैः कर्म्मभिः कृतैर्द्विजातयः परिचर्य्यन्ते तानि कारुकर्म्माणि तक्षकादीनि शिल्पानि च चित्रलिखितादीनि नानाप्रकाराणि कुर्य्यात् ॥ १०० ॥

वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः।
अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत्॥ १०१ ॥

वैश्येति। ब्राह्मणो वृत्त्यभावपीडितोऽवसादङ्गच्छन् क्षत्रिय वैश्यवृत्तिमनातिष्ठन् स्वधर्म्मो वरं विगुण इत्युक्तत्वात् स्ववृत्तावेव वर्त्तमान इमां वक्ष्यमाणां वृत्तिमनुतिष्ठेत् अतश्च विगुणप्रति ग्रहादिस्ववृत्त्यसम्भवे परवृत्त्याश्रयणं ज्ञेयम्॥ १०१॥

सर्व्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयङ्गतः। पवित्रं दुष्यतीत्येतत् धर्म्मतो नोपपद्यते ॥१०२॥

सर्व्वत इति। ब्राह्मण आपदं प्राप्तः सर्व्वेभ्योऽपि निन्दित निन्दिततरनिन्दिततमेभ्यः क्रमेण प्रतिग्रहं कुर्यात् यथार्था नारव्यायमामावह्वारः। यस्मात्पवित्रं गङ्गादि रथ्योदका दिना दुष्यतीत्येतत् शास्त्रयुक्त्या नोपपद्यते ॥१०२॥

नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥१०३॥

यस्मात् नाध्यापनादिति। ब्राह्मणानामापदि गर्हिताध्या पनयाजनप्रतिग्रहैरधर्म्मो न भवति यस्मात् स्वभावतः पवित्र मेतानम्बुदहनतुल्यास्ते ॥१०३॥

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते ॥१०४॥

जीवितेति। यः प्राणात्ययमापन्नः प्रतिलोमकादन्नमत्ति सोऽन्तरीक्षमिव कर्द्दमेन पापेन न सम्बध्यते ॥१०४॥

अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः । नचा लिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥ १०५ ॥

अत्र महत्कृतिहासार्थवादमाह अजीगर्त्तइति। ऋषिरजीगर्त्ताख्यो बुभुक्षितः सन् पुत्रं शुनःशेफनामानं स्वयं विक्रीतवान् यज्ञे गोशतलाभाय यज्ञयूपे बद्धा विशसिता भूत्वा हन्तुं प्रचक्रमे नच क्षुत्प्रतीकारार्थं तथा कुर्व्वन् पापेन लिप्तः एतच्च बह्वृचब्राह्मणे शुनःशेफाख्यानेषु व्यक्तमुक्तम् ॥ १०५ ॥

श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्म्माधर्म्मविचक्षणः । प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥ १०६ ॥

श्वमांसमिति। वामदेवाख्य ऋषिर्धर्म्माधर्म्मज्ञः क्षुधार्त्तः प्राणत्राणार्थं श्वमांसं खादितुमिच्छन् दोषेण न लिप्तवान् ॥ १०६ ॥

भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने । बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥ १०७ ॥

भरद्वाजइति। भरद्वाजाख्यो मुनिः महातपस्वी पुत्रसहितो निर्ज्जने वने अरण्ये उषित्वा क्षुत्पीडितो वृधुनामकतक्ष्णो बह्वीर्गाः प्रतिगृहीतवान् ॥ १०७ ॥

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च ॥ १११ ॥

जपेति। एनो यदसत्प्रतिग्रहयाजनाध्यापनैर्भवत्युत्पन्नं पापं तत्प्रायश्चित्तप्रकरणे वक्ष्यमाणक्रमेण जपहोमैर्नश्यति असत्प्रतिग्रहजनितम्पुनः प्रतिगृहीतद्रव्यत्यागेन मासं गोष्ठे पयः पीत्वेत्येवमादिवक्ष्यमाणतपसा पापं गच्छति ॥ १११ ॥

शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्ततः । प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥ ११२ ॥

शिलोञ्छमिति । ब्राह्मणः कष्टत्वाऽजीवन् यतस्तत इत्युपपातकादिभ्योऽपि शिलोञ्छं गृह्णीयात् न तु तदभावेऽसत्प्रतिग्रहं कुर्य्यात् यस्मादसत्प्रतिग्रहात् शिलः प्रशस्तः मञ्जर्य्यात्मकानेकधान्योच्चयनं शिलस्ततोऽप्युञ्छः श्रेष्ठः एकैकधान्यादिगुडकोच्चयनमुञ्छः ॥ ११२ ॥

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः । याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥ ११३ ॥

सीदद्भिरिति । स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मार्थं कुटुम्बार्थं वावसादं गच्छद्भिः सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि कुप्य

धनं धान्याद्युत्पन्नं हिरण्यमपि आपत्प्रकरणाद्विशेषेषु ब्राह्मणवर्णी याचितव्यः स्यात्। यस्तु दातुमेच्छति स्वधर्मे व्यवस्थितः स त्याज्यो न याचनीय इत्यर्थः। मेधातिथि गोविन्दराजौ तु त्यागमर्हतीति तस्य देये न वक्तव्यमिति व्याचक्षाते॥ ११२॥

अकृतञ्च कृतात्क्षेत्राद्गौरजाविकमेव च। हिरण्यं धान्यमन्नञ्च पूर्वं पूर्वमदोषवत्॥ ११४॥

अकृतञ्चेति। अकृतमनुप्तमपि क्षेत्रं कृतादुप्तक्षेत्रात्प्रति ग्रहे दोषरहितं तथा गोछागमेषहिरण्यधान्यसिद्धान्नानां मध्यात्पूर्वं पूर्वं अदुष्टं। ततश्चैषां पूर्वपूर्वालाभे परः परो ग्राह्यः॥ ११४॥

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥ ११५॥

सप्तेति। द्रव्यायाः सप्त धनागमाः यथाधिकारं धर्मा द्रनपेताः तत्र दायोऽन्वयागतधनं लाभो निध्यादेः मैत्र्यादि तश्च च। क्रयः प्रसिद्धः एते चत्वारश्चतुर्णामपि वर्णानां धर्म्याः। जयधनं क्षत्रियस्यैव धर्म्यः प्रयोगो वृद्ध्यादिग्रहण।

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च ॥ १११ ॥

जपेति। एनो ग्रहणाद्सत्प्रतिग्रहयाजनाध्यापनैर्यदुत्पन्नं पापं तत्प्रायश्चित्तप्रकरणे वक्ष्यमाणक्रमेण जपहोमैर्नश्यति असत्प्रतिग्रहजनितम्पुनः प्रतिगृहीतद्रव्यत्यागेन मासं गोष्ठे पयः पीत्वेत्येवमादिवक्ष्यमाणतपसा चापगच्छति ॥ १११ ॥

शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्ततः। प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥ ११२ ॥

शिलोञ्छमिति। ब्राह्मणः स्ववृत्त्याऽजीवन् यतस्तत इत्युपपातकादिभ्योऽपि शिलोञ्छं गृह्णीयात् न तु तत्सम्भवेऽसत्प्रतिग्रहं कुर्य्यात् यस्मादसत्प्रतिग्रहात् शिलः प्रशस्तः मञ्जर्य्यात्मकानेकधान्योच्चयनं शिलस्ततोऽप्युञ्छः श्रेष्ठः एकैकधान्यादिगुडकोच्चयनमुञ्छः ॥ ११२ ॥

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः। याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥ ११३ ॥

सीदद्भिरिति। स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मार्थं कुटुम्बार्थं वावसादं गच्छद्भिः सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि कुप्य

धनं धान्याद्युत्कृष्टं हिरण्यमपि आपत्प्रकरणात्क्षत्रियोऽपि न्यायवर्त्ती याचितव्यः स्यात्। यस्तु दातुं नेच्छति स यदि न्यायधारितः स त्याज्यो न वास्तव्य इत्यर्थः। मेधातिथि गोविन्दराजौ तु त्यागमर्हतीति तस्य देशे न वस्तव्यमिति व्याचक्षाते ॥ ११३ ॥

अकृतञ्च कृतात्क्षेत्राद्गौरजाविकमेव च। हिरण्यं धान्यमन्नञ्च पूर्वम्पूर्व्वमदोषवत् ॥ ११४ ॥

अकृतञ्चेति। अकृतमनुप्तबीजं क्षेत्रं कृतादुप्तबीजात्प्रति ग्रहे दोषरहितं तथा गोछागमेषहिरण्यधान्यसिद्धान्नानां मध्यात्पूर्वम्पूर्वं अदुष्टं। ततश्चैषां पूर्वपूर्वाभावे परः परो ग्राह्यः ॥ ११४ ॥

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ ११५ ॥

सप्तेति। दायाद्याः सप्त धनागमाः यथाधिकारं धर्म्या दनपेताः तत्र दायोऽन्वयागतधनं लाभो निध्यादेः मैत्र्यादि लब्धश्च। क्रयः प्रसिद्धः एते चत्वारश्चतुर्णामपि वर्णानां धर्म्याः। जयलब्धं क्षत्रियस्यैव धर्म्यः प्रयोगो वृद्ध्यादिर्वैश्यस्य।

सर्व्वयोगस्य कृषिकाशिल्पे एतौ प्रयोगौ वैश्यधर्म्मौ वस्तुप्रति यहो ब्राह्मणस्य धर्म्मः एवच्चैतेषां धर्म्माणां वचनादेतदभावे कर्म्मस्व नापदिष्टितेषु क्षत्त्रियकर्म्मसु प्रवर्त्तितव्यं तदभावे चापदिष्टितेषु प्रवर्त्तेतव्यमित्येतदर्थमेतदिहोच्यते ॥ ११५ ॥

विद्या शिल्पम्भृतिः सेवा गोरक्ष्यं विपणिः कृषिः ।
धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः ॥ ११६ ॥

विद्येति । आपत्प्रकरणाज्जीवनहेतव इति निर्देशात् एषामध्ये यया वृत्त्या यस्यानापदि जीवनं निषिद्धं तया तस्यापद्यनुज्ञायते यथा ब्राह्मणस्य भृतिसेवादि एवं क्षित्रयादावपि ज्ञेयं विद्या वेदविद्याव्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या । सर्व्वेषामापदि जीवनार्थमनु ज्ञायते शिल्पं लिखनादिकरणं भृतिः प्रेष्यभावेन वेतनग्रहणं सेवा परच्छन्दानुवर्त्तनं गोरक्ष्यं पाशुपाल्यं विपणिर्व्वणिज्या कृषिः स्वयंकृता धृतिः सन्तोषः तस्मिन् सति अल्पकेनापि जीवनं भैक्ष्यं भिक्षासमूहः कुसीदं वृद्ध्या धनप्रयोगः स्वयं कृतोपि दशभिरेतैरापदि जीवनीयम् ॥ ११६ ॥

ब्राह्मणः क्षत्त्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामन्तु खलु धर्म्मार्थं दद्यात्पापीयसेऽल्पिकाम् ॥ ११७ ॥

ब्राह्मण इति । ब्राह्मणः क्षत्त्रियो वापि द्रव्यादिधनमापद्यपि

न प्रयुञ्जीत किन्तु निकृष्टकर्मणे धर्मार्थमल्पिकया वृद्ध्या प्रयुञ्जीत ॥ ११७ ॥

चतुर्थमाददानोऽपि क्षत्रियो भागमापदि । प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥ ११८ ॥

इदानीं राज्ञामापद्धर्ममाह चतुर्थमिति । राज्ञो धान्यानामष्टमद्वादशाद्युक्तं स आपदि धान्यादेश्चतुर्थमपि भागं करार्थं गृह्णन् परया शक्त्या प्रजा रक्षन्नधिककरग्रहणपापेन न सम्बध्यते ॥ ११८ ॥

स्वधर्मो विजयस्तस्य नाहवे स्यात्पराङ्मुखः । शस्त्रेण वैश्यान्रक्षित्वा धर्म्यमाहारयेद्बलिं ॥ ११९ ॥

कस्मात्पुनरापद्यपि राज्ञो रक्षणमुच्यते तत्राह स्वधर्म इति । राज्ञः प्रभुत्वेन स्वधर्मो विजयफलं युद्धमित्यर्थः । प्रजारक्षणप्रवृत्तस्य यदि कृतविग्रहं स्यात् तदा न युद्धपराङ्मुखो भवेत् एवञ्च शस्त्रेण वैश्यान् दस्युभ्यो रक्षित्वा तेभ्यो धर्मादनपेतमाप्तपुरुषैर्बलिमाहारयेत् ॥ ११९ ॥

धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम् । कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ॥ १२० ॥

कीदृशबलिमाह धान्य इति । धान्यविषये उपचये वैश्याना

ष्टमभागं शुल्कमाहारयेत्। धान्यानां हादशोपि भाग उक्तः आपद्यष्टम उच्यते अत्यल्पापदि शागुक्तचतुर्थी वेदि तव्यः तथा हिरण्यादीनां कार्षापणान्तानां विंशतितमं भागं शुल्कं गृह्णीयात् तथापि पञ्चाशद्भाग आदेयो राज्ञा पशु हिरण्ययोरित्यापदि पञ्चाशद्भाग उक्तः आपद्यपं विंश उच्यते। तथा शूद्राः कारवः सूपकारादयः शिल्पिनः तथा द्यः कर्मणैवोपकुर्व्वन्ति नतु तेभ्य आपद्यपि करो ग्राह्यः ॥१२०॥

शूद्रस्तु वृत्तिमाकाङ्क्षेत् क्षत्रमाराधयेद्यदि।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥१२१॥

शूद्रस्त्विति। शूद्रो ब्राह्मणशुश्रूषयाऽजीवन् यदि वृत्तिमा काङ्क्षेत्तदा क्षत्रियमपि परिचर्य्य तदभावे धनिनं वैश्यं परिचर्य्य जीवितुमिच्छेत् द्विजातिशुश्रूषायामर्थे तु शागुक्तानि कर्माणि कुर्य्यात् ॥ १२१ ॥

स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः। जात ब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥ १२२ ॥

स्वर्गार्थमिति। स्वर्गप्राप्त्यर्थं स्वर्गस्वद्वृत्तिसिद्ध्यर्थं वा ब्राह्मणा नेव शूद्रः परिचरेत्। यस्मात्तो ब्राह्मणाश्रितोयमिति शब्दो

यस्य ब्राह्मणाश्रितोऽयमित्यभिधानसम्बन्धः । सा च शूद्रस्य कृतकृत्यता तत्सम्बन्धेनैवास्य यस्मात् कृतकृत्यो भवति ॥ १२२ ॥

विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते । यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ १२३ ॥

अत एवमाह विप्रेति । ब्राह्मणपरिचर्यैव शूद्रस्य कर्मान्तरेभ्यः प्रकृष्टं कर्म शास्त्रेऽभिधीयते यस्मादेतद्व्यतिरिक्तं यदयं कर्म कुरुते तदस्य निष्फलम्भवतीति पूर्वस्तुत्यर्थं नत्वन्यनिषेधार्थं पाकयज्ञादीनामपि तस्य विहितत्वात् ॥ १२२ ॥

प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः । शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ॥१२४॥

प्रकल्प्येति । तस्य परिचारकशूद्रस्य परिचर्यासामर्थ्यं कर्मोत्साहं पुत्रदारादिभर्तव्यपरिमाणं चावेक्ष्य तैर्ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया ॥ १२४ ॥

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च । पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥१२५॥

उच्छिष्टमिति । तस्मै भक्तायैव शूद्राय भुक्तावशिष्टान्नं

शास्त्रीयैर्मंत्रैश्च न शूद्राय मतिं दद्यात् नोच्छिष्टमित्यना
ञ्जितशूद्रविषयत्वमिष्टमे तथा जीर्णवस्त्रादि यत्र पुनर्जीर्णवस्त्रा
परिच्छदा अस्मै देयाः ॥ १२५ ॥

न शूद्रे पातकं किञ्चिन्नच संस्कारमर्हति । नास्या
धिकारो धर्म्मेऽस्ति न धर्म्मात्प्रतिषेधनम् ॥ १२६ ॥

न शूद्रइति । लशुनादिभक्षणेन शूद्रे न किञ्चित्पातकम
स्ति यत्तु अक्षमथाशावपि अहिंसासत्यमित्यादेश्चातुर्व्वर्ण्यसा
धारणत्वेन विहितत्वात् । नचाप्युपनयनादिसंस्कारमर्हति
नास्याग्निहोत्रादिधर्म्मे अधिकारोऽस्ति अविहितत्वात् । नच शूद्र
विहितात्पाकयज्ञादिधर्म्मादस्य निषेधः एवञ्चास्य सर्व्वस्य
विरुद्धार्थत्वात् अयं श्लोक उत्तरार्थोऽनुवादः ॥ १२६ ॥

धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः । मन्त्र
वर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ १२७ ॥

धर्म्मेति । ये पुनः शूद्राः स्वधर्म्मवेदिनो धर्म्मप्राप्तिकामास्ते
वर्णिकानामाचारमनिषिद्धमाश्रिताः ते नमस्कारेण मन्त्रेण
पञ्चयज्ञान् हापयेदिति याज्ञवल्क्यवचनात् नमस्कारम
न्त्रेण मन्त्रान्तररहितं पञ्चयज्ञादिधर्म्मं कुर्व्वाणा न प्रत्यवा
यमाप्नुवन्ति ख्यातिञ्च लोके लभन्ते ॥ १२७ ॥

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः । तथा तथेमञ्चामुञ्च लोकम्प्राप्नोत्यनिन्दितः ॥ १२८ ॥

यथेति । परगुणानिन्दकः शूद्रो यथा यथा द्विजाचारमनिषिद्धमनुतिष्ठति तथा तथा जनैरनिन्दित इह लोके उत्कृष्टः मृतः स्वर्गादिलोकञ्च प्राप्नोति ॥ १२८ ॥

शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥ १२९ ॥

शक्तेनापीति । धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गभरणार्थं पञ्चयज्ञाद्युचितादधिकधनसञ्चयो न कर्त्तव्यः यस्मात् शूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनमदात् शुश्रूषाद्यकरणात् ब्राह्मणानेव पीडयतीत्युक्तानुवादः ॥ १२९ ॥

एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्त्तिताः । यान् सम्यगनुतिष्ठन्तो व्रजन्ति परमाङ्गतिम् ॥ १३० ॥

एतइति । यान् चतुर्णां वर्णानां व्यवस्थया धर्मान् सम्यगाचरन्तो विहितानुष्ठानात् निषिद्धानाचरणाच्च निष्पापतया तत्त्वज्ञानयोगेन परमां गतिं मोक्षलक्षणां व्रजन्ति ॥ १३० ॥

एष धर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्त्तितः ।
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभं ॥ १३१ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥

एषइति । अयं चतुर्णां वर्णानामाचारः समग्रः कथितः । अतऊर्द्धं प्रायश्चित्तानुष्ठानं शुभमभिधास्यामि ॥ १३१ ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां दशमो ऽध्यायः ॥

---

## ॥ ११ एकादशोऽध्यायः ॥

सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥ १ ॥
नवैतान् स्नातकान्विद्याद् ब्राह्मणान्धर्मभिक्षुकान् ।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ २ ॥

सान्तानिकमिति । नवैतानिति । अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभमिति प्रायश्चित्तस्य वक्तव्यतया प्रतिज्ञातत्वात् । सान्तानिकादिभ्यो देयमित्यादेः कः प्रस्तावः उच्यते । दानेनाकार्यकारिणः इति प्रागुक्तत्वात् । दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्नित्यादेश्च वक्ष्यमाणत्वात् प्रकटप्रायश्चित्तात्मकदानप्रायोपन्यासः प्रसक्तोपयुक्त एव सर्वासमर्थादिव्यतिरिक्तप्रायश्चित्तादिनैमित्तिकधर्मकसमार्जनासाध्यासाध्यस्य च तथापि नैमित्तिकधर्मस्योपन्यासो युक्तः । सन्तानप्रयोजनक विवाहरूप सान्तानिकं विवाहार्थी यक्ष्यमाणोऽवश्यकर्त्तव्य ज्योतिष्टोमादियागं चिकीर्षुः अध्वगः पान्थः सर्ववेदसः कृत सर्वस्वदक्षिणविश्वजिद्यागः विद्यागुरोर्योगक्षेमादिरर्थः प्रयोजनं यस्य स गुर्वर्थः एवं पितृमात्रर्थोऽपि स्वाध्यायार्थी स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी उपतापी

रोगी एतानव ब्राह्मणान् धर्म्मभिक्षार्थीनान् स्नातकान् जानी-यात्। एतेभ्यो निर्द्धनेभ्यो गोहिरण्यादि होमतद्दक्षिणां विद्या-विशेषानुरूपेण दद्यात्॥१॥॥२॥

एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम्।
इतरेभ्यो बहिर्वेदि कृतान्नन्देयमुच्यते॥३॥

एतेभ्य इति। एतेभ्यो नवभ्यो ब्राह्मणश्रेष्ठेभ्यो ऽन्तर्वेदि सदक्षि-णमन्नन्दातव्यम्। एतद्व्यतिरिक्तेभ्यः पुनः सिद्धान्नं बहिर्वेदि देय-त्वेनोपदिश्यते धनदानेत्वनियमः॥३॥

सर्व्वरत्नानि राजा तु यथार्हम्प्रतिपादयेत्। ब्रा-
ह्मणान्वेदविदुषो यज्ञार्थञ्चैव दक्षिणाम्॥४॥

सर्व्वेति। राजा पुनः सर्व्वरत्नानि मणिमुक्तादीनि यज्ञोप-योगि च दक्षिणार्थमन्नं विद्यानुरूपेण वेदविदो ब्राह्मणान् स्वीकारयेत्॥४॥

कृतदारोऽपरान् दारान् भिक्षित्वा योऽधिगच्छति।
रतिमात्रं फलन्तस्य द्रव्यदातुस्तु सन्ततिः॥५॥

कृतेति। यः सभार्य्यः सन्तत्यर्थादिनिमित्तमन्तरेणापरान् दारान् भिक्षित्वा करोति तस्य रतिमात्रं फलं धनदातुः पुन-स्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः तेन नैव धन-याचित्वाऽन्यो विवाहः कर्त्तव्यः नाप्येवं विधाय नियमतो धन-देयमित्येव तात्पर्य्यार्थः॥५॥

धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत् । वेद
वित्सु विविक्तेषु प्रेत्य स्वर्गं समश्नुते ॥ ६ ॥

धनानीति । धनानि गोभूहिरण्यादीनि यथाशक्तिक्रमेण
ब्राह्मणेषु वेदज्ञेषु विविक्तेषु पुत्रकलत्राद्यसक्तेषु प्रतिपादये
त्तस्माच्च स्वर्गप्राप्तिर्भवतीति ॥ ६ ॥

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये । अधिकं
वापि विद्येत स सोमं पातुमर्हति ॥ ७ ॥

यस्येति । यस्यावश्यपोष्यभरणार्थं वर्षत्रयपर्याप्तं तदधिकं
वा भक्तादि स्यात् स काम्यसोमयागं कर्त्तुमर्हति । नित्यस्य पुन
र्यावज्जीवविहितत्वादवश्यकर्त्तव्यत्वात् नायं निषेधः अतएव समान्ते
सौमिकैर्मखैरिति नित्यविधिमुक्तवान् ॥ ७ ॥

अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
सपीतसोमपूर्वोपि न तस्याप्नोति तत्फलम् ॥ ८ ॥

अतइति । त्रैवार्षिकधनादल्पतरे धने सति यः सोमयागं
करोति तस्य प्रथमसोमयागो नित्योपि न सम्यक् भवति
कुतः पुनः द्वितीययागः काम्यः ॥ ८ ॥

शक्तः परजने दाता स्वजने दुःखजीविनि । मध्वापातोविषास्वादः स धर्म्मप्रतिरूपकः ॥ ९ ॥

शक्त इति । यो बहुधनत्वाद्दानशक्तः सन् स्वजने भरणीयेष्वपि मातादिष्वार्त्तजने दौर्गत्यात् दुःखोपेते सति यशोऽर्थमन्येभ्यो ददाति स तस्य दानविशेषो धर्म्मप्रतिरूपको न तु धर्म्म एव मध्वापातो मधुरोपक्रमः प्रथमं यशस्करत्वात् विषास्वादश्चान्ते नरकफलत्वात्तस्मादेतन्न कार्य्यम् ॥ ९ ॥

भृत्यानामुपरोधेन यत्करोत्यौर्द्ध्वदेहिकम् । तद्भवत्यसुखोदर्कं जीवतस्य मृतस्य च ॥ १० ॥

भृत्यानामिति । पुत्रदाराद्यवश्यभर्त्तव्यपीडनेन यत् पारलौकिकधर्म्मबुद्ध्या दानादि करोति तस्य दातुर्जीवतो मृतस्य च तद्दानं दुःखफलं भवति पूर्व्वं कीर्त्त्यादिदृष्टार्थदानप्रतिषेधः इह त्वदृष्टार्थदानप्रतिषेधः ॥ १० ॥

यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः । ब्राह्मणस्य विशेषेण धार्म्मिके सति राजनि ॥ ११ ॥

यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः । कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ १२ ॥

यज्ञश्चेति । योवैश्य इति । क्षत्रियादेर्यजमानस्य विशेषतो

ब्राह्मणस्य यदि कृतस्वतःप्रवृत्तस्य सतो यज्ञ एकेनाङ्गेनासम्पूर्णः स्यात् तदा यो वैश्यो बहुपश्वादिधनः पाकयज्ञादिरहितो ऽसोमयाजी तस्य गृहात्तद्यज्ञोपयोगिद्रव्यं बलेन चौर्येण वा हरेत्। एतच्च धर्मप्रधाने सति राजनि कार्यं यदि ब्राह्मणार्थं मनुनिज्ञातं न निगृह्णाति ॥ ११ ॥ १२ ॥

आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥ १३ ॥

आहरेदिति। यज्ञस्य द्व्यङ्गवैकल्ये सति तानि त्रीणि चाङ्गानि द्वे वाङ्गे वैश्यादलाभे सति निर्विशङ्कं शूद्रस्य गृहात् बलेन चौर्येण वा हरेत् यस्माच्छूद्रस्य कश्चिदपि यज्ञसंबन्धो नास्ति न यज्ञार्थं धनं शूद्राद्भिक्षेतेति वक्ष्यमाणप्रतिषेधः शूद्राद्याचनस्य न बलचौर्यादेः ॥ १३ ॥

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १४ ॥

यदिति। योऽनाहिताग्निः गोशतपरिमाणधन आहिताग्नि र्वा ऽसोमयाजी गोसहस्रपरिमितधनः तयोरपि गृहाभ्याम् तत्तमङ्गद्वयं त्र्यं वा त्रीणि समादातुं ब्राह्मणेन ताभ्यामाहरणीयं ब्राह्मणयाचिताभ्यामपि ब्राह्मण आहरेत्। क्षत्रियस्य तु यदकृतिज्याद्ब्राह्मणस्य हरणं निषेधयिष्यति ॥ १४ ॥

आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
तथा यशोऽस्य प्रथते धर्मश्चैव प्रवर्द्धते ॥ १५ ॥

आदानेति। प्रतिग्रहादिना आदानं धनग्रहणं नित्यं यस्या सौ आदाननित्यः प्राह्मणः तस्मादिष्टापूर्त्तदानरहितात् यज्ञाङ्गद्रव्यवयाचीयां याचनायां कृतायां अददतो बलेन चौर्य्येण वा हरेत् तथा कृते अपहर्त्तुः ख्यातिः प्रकाशते धर्मश्च वृद्धिमेति ॥ १५ ॥

तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्व स्तनविधानेन हर्त्तव्यं हीनकर्म्मणः ॥ १६ ॥

तथैवेति। सायंप्रातर्भोजनोपदेशात् त्रिरात्रोपवासे कृते चतुर्थेऽहनि प्रातः सप्तमे भक्ते प्राप्ते दानादिधर्म्मरहितादेव हीनकर्म्मासमर्थचौर्य्यादिना हर्त्तव्यम् ॥१६॥

खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते ।
आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥ १७॥

खलादिति। धान्यादिमर्दनस्थानात् क्षेत्राद्वा गृहाद्वा यतो वान्यस्मात्प्रदेशाद्वा धान्यं हीनकर्म्मणोऽपि लभ्यते ततो हर्त्तव्यं यदि चासौ धनस्वामी पृच्छति किंनिमित्तं कृतमिति तस्मै पृच्छते तन्निमित्तचौर्य्यादि वक्तव्यम् ॥ १७ ॥

ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन। दस्यु
निष्क्रिययोस्तु स्वमजीवन् हर्तुमर्हति ॥ १८ ॥

ब्राह्मणेति। उक्तेष्वपि निमित्तेषु क्षत्रियेण ब्राह्मणस्य धनमा
त्मोपकृष्टत्वात् न हर्तव्यं यजमानत्वाच्च तथा वैश्यशूद्राभ्यां उत्कृ
ष्टजातितो न हर्तव्यं। प्रतिषिद्धकर्मविहितानुष्ठायिनोः पुनर्ब्रा
ह्मणक्षत्रिययोरत्यन्तापदि क्षत्रियो हर्तुमर्हति ॥ १८ ॥

योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति।
स कृत्वा प्लवमात्मानं संतारयति तावुभौ ॥ १९ ॥

योऽसाधुभ्य इति। यो हीनकर्मादिभ्य उत्कृष्टेभ्योऽभिहितेष्वपि
निमित्तेषु तदनुरूपं यज्ञाङ्गादिविरूपं धनं हृत्वा साधुभ्य
उत्कृष्टेभ्य ऋत्विगादिभ्यो ददाति स यस्मादपहरति तद्दुरितं
नाशयति यस्मै च ददाति तं दौर्गत्याभिघातादिभ्यस्त्रायता
त्मानमनुरूपं कृत्वा दुःखान्मोचयति ॥ १९ ॥

यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः। अय
ज्वनां तु यद्वित्तमासुरस्वं तदुच्यते ॥ २० ॥

यद्धनमिति। यज्ञशीलानां यद्धनं तद्यागादौ विनियोगात्

देवस्वं विद्वांसो मन्यन्ते यज्ञादिसम्प्रयोगात् बहुधनं महत्त्वं विनियोगाभावादासुरस्वमुच्यते अतस्तदपहृत्य यायजूका दानाद्देवस्वं कर्त्तव्यम् ॥ २० ॥

न तस्मिन्धारयेद्दण्डं धार्म्मिकः पृथिवीपतिः । क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥ २१ ॥

न तस्मिन्निति । तस्मिन्नुक्तनिमित्ते चौर्य्यबलात्कारं कुर्वाणे धर्म्मप्रधानो राजा दण्डं न कुर्यात् यस्माद्राज्ञो मूढत्वाद्ब्राह्मणः क्षुधावसादं प्राप्नोति ॥ २१ ॥

तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः । श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत् ॥ २२ ॥

तस्य तस्येति । तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गं ज्ञात्वा श्रुताचारौ च तदनुरूपां वृत्तिं स्वगृहाद्राजा कल्पयेत् ॥ २२ ॥

कल्पयित्वाऽस्य वृत्तिञ्च रक्षेदेनं समन्ततः । राजा हि धर्म्मषड्भागन्तस्मात्प्राप्नोति रक्षितात् ॥ २३ ॥

कल्पयित्वेति । अस्य ब्राह्मणस्य जीविकां विधाय अप चौरादेः सर्व्वतो रक्षेत् । यस्माद्ब्राह्मणाद्रक्षितात्तस्य धर्म्म षड्भागं प्राप्नोति ॥ २३ ॥

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित्। यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥ २४ ॥

नयज्ञार्थमिति। यज्ञसिद्ध्यर्थं धनं ब्राह्मणः कदाचिन्न शूद्राद्याचेत्। यस्माच्छूद्राद्याचित्वा यज्ञं कुर्वाणो मृतश्चाण्डालो भवति अतो याचननिषेधात् शूद्रादयाचितोपस्थितं यज्ञार्थमप्यविरुद्धम् ॥ २४ ॥

यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति। स याति भासतां विप्रः काकतां वा शतं समाः ॥ २५ ॥

यज्ञार्थमिति। यज्ञसिद्ध्यर्थं धनं याचित्वा यो न सर्वं तत्र विनियुङ्क्ते स शतं वर्षाणि भासत्वं काकत्वं वा प्राप्नोति ॥ २५ ॥

देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः। स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

देवस्वमिति। प्रतिमादिदेवतार्थमुत्सृष्टं धनं देवस्वं ब्राह्मणस्वं च यो लोभादपहरति स पापकर्मा जन्मान्तरे गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

इष्टिं वैश्वानरीं नित्यन्निर्वपेदब्दपर्य्यये। कॢप्ता नाम्पशुसोमानान्निष्कृत्यर्थमसम्भवे॥ २७॥

इष्टिमिति। समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्य्यय वैशाख्यादिश्च वर्षप्रवृत्तिः तत्र वर्षान्तरे वैश्वानरीमिष्टिं विहितपशुसोमयागासम्भवे तत्करणदोषनिर्हरणार्थं सर्व्वदा शूद्राहित स्वधनपरत्वरूपामिष्टिं कुर्य्यात्॥ २७॥

आपत्कल्पेन यो धर्म्मं कुरुतेऽनापदि द्विजः। स नाप्नोति फलं तस्य परत्रेति विचारितम्॥ २८॥

आपदिति। आपद्विहितेन विधिना योऽनापदि धर्म्मानुष्ठानं द्विजः कुरुते तस्य तत्परलोके निष्फलम्भवतीति मन्वादिभिर्विचारितम्॥ २८॥

विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः॥ २९॥

विश्वैरिति। विश्वदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिर्ब्राह्मणैश्च मरणाद्भीतैरापत्सु मुख्यस्य विधेः सोमादेर्वैश्वानर्य्यादिः प्रति प्रतिनिधिरनुष्ठितोऽसौ मुख्यासम्भवे कार्य्यः नतु मुख्यसम्भवे॥ २९॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्॥ ३०॥

प्रभुरिति। यो मुख्यानुष्ठानसमर्थः सन् आपद्विहितेन प्रतिनिधिना अनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकं अभ्युदयरूपं प्रत्यवायपरिहारफलञ्च न भवति आपत्कल्पेन यो धर्ममित्यनेनोक्तमप्येतत् प्राप्तादरार्थं पुनरुच्यते॥ ३०॥

न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्म्मवित्। स्ववीर्येणैव तान् शिष्यान्मानवानपकारिणः॥ ३१॥

नेति। धर्मज्ञो ब्राह्मणः किञ्चिदप्यपकृतं न राज्ञः कथयेत् किन्तु स्वशक्त्यैव स्वाभिचारादिनाऽपकारिणो मनुष्यान् निगृह्णीयात्। ततश्च स्वकीयधर्मविरोधादिप्रज्ञापराधकरणे ब्रह्माभिचारादि न दोषायेत्येवमर्थमेतत् नत्वभिचारो विधीयते राजनिवेदनं वा निषिध्यते॥ ३१॥

स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरं। तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः॥ ३२॥

स्ववीर्य्यादिति। यस्मात् स्वसामर्थ्याद्राजसामर्थ्याच्च पराधीनराजसामर्थ्यापेक्षया स्वसामर्थ्यमेव स्वाधीनत्वाद्बलीयः तस्मात् स्वेन वीर्य्येण शत्रून् ब्राह्मणो निगृह्णीयात्॥ ३२॥

श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्। वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः ॥ ३३ ॥

तस्मिंस्तु स्ववीर्य्यमित्याह श्रुतीरिति। अथर्ववेदे अङ्गिरसो दृष्टाभिचारश्रुतीरविचारयन् कुर्य्यात् तदर्थमभिचारमनुतिष्ठेत् इत्यर्थः यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रकार्य्यकरणात् शस्त्रं तेन ब्राह्मणः शत्रून् हन्यात् न तु शत्रुनिग्रहाय राजा वाच्यः ॥ ३३ ॥

क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मनः। धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ ३४ ॥

क्षत्रियइति। क्षत्रियः स्वपौरुषेण शत्रुतः परिभवलक्षणामात्मन आपदं निस्तरेत्। वैश्यशूद्रौ पुनः प्रतिकर्त्तृ धनदानेन ब्राह्मणस्त्वभिचारात्मकैर्जपहोमैः ॥ ३४ ॥

विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते। तस्मै नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ॥ ३५ ॥

विधातेति। विहितकर्मणामनुष्ठाता पुत्रशिष्यादीनां शास्ता

शास्त्रविद्यादिधर्माणां वक्ता धर्मज्ञस्तमेवोपाध्यायो ब्राह्मण उच्यते तस्मै शिष्यहितामप्यमितमेवं वचनं न ब्रूयात् नापि शाखोक्तां वाचं वाग्दण्डधिग्दण्डरूपां तस्योच्चारयेत्॥ ३५॥

न वै कन्या न युवतीर्नाल्पविद्यो न बालिशः।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा॥३६॥

नवै इति। कन्या अनूढा ऊढापि तरुणी तथा अल्पश्रुतावि मूर्खव्याध्यादिपीडितानुपनीताः श्रौतान् सायंप्रातर्होमांश्च कुर्युः। होतव्येदिति प्रथमावचं कन्यादीनां प्रतिषेधः॥ ३६॥

नरके हि पतन्त्येते जुह्वतः स च यस्य तत्। तस्माद्वैतानकुशलो होता स्याद्वेदपारगः॥ ३७॥

नरकइति। एते कन्यादयो होमं कुर्वाणा नरकं गच्छन्ति यस्य तदग्निहोत्रं प्रतिनिधिरूपेण कुर्वन्ति सोपि नरकं गच्छति तस्मात् श्रौतकर्म प्रवीणः समस्तवेदाध्यायी होता कार्यः॥३७॥

प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणां। अनाहिताग्निर्भवति ब्राह्मणो विभवे सति॥ ३८॥

प्राजापत्यमिति। आधाने प्राजापत्यमश्वं प्रजापतिदेवताक

अल्पं धनयुक्तो यस्मात् ब्राह्मणो दक्षिणामदत्वा कृतेष्वाधाने अनाहिताग्निर्भवति आधानफलञ्च लभते तस्मादाधाने अस्य दक्षिणां दद्यात् ॥ ३८ ॥

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥ ३९ ॥

पुण्यानीति । श्रद्धावान् वशीकृतेन्द्रियः यज्ञव्यतिरिक्तानि तीर्थयात्रादीनि कर्माणि पुण्यानि कुर्वीत न तु शास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेत परोपकारार्थत्वाद्दक्षिणायाः स्वल्पेनाप्युत्विगादितोषसिद्धाविदं वचनं ॥ ३९ ॥

इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून् ।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥ ४० ॥

इन्द्रियाणीति । चक्षुरादीनि इन्द्रियाणि जीवतः ख्याति रूपं यशः स्वर्गायुषी मृतस्य ख्यातिरूपां कीर्त्तिमपत्यानि पशूं श्चाल्पदक्षिणो यज्ञः नाशयति तस्मादल्पदक्षिणादानेन यागं न कुर्य्यात् ॥ ४० ॥

अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥ ४१ ॥

अग्निहोत्रीति । अग्निहोत्री ब्राह्मणः इच्छातोऽग्निषु सायं

प्रातर्होमानकृत्वा मासं चान्द्रायणं चरेत् यस्माद्वीरः पुत्रः तद्वधतुल्यमेतत्। तथा च श्रुतिः वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते। अन्ये तु मासमुपविधेति वर्णयन्ति ॥ ४१ ॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते। ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥ ४२ ॥

ये शूद्रादिति। ये शूद्रादधिगम्यार्थं प्राप्य याच्ञाभिधानेन याजनेन वा सर्वं सोऽत्र वृषलाग्न्युपसेविनामिति वक्ष्यमाणविरोधाद्दानपूर्वकमग्निहोत्रमनुतिष्ठन्ति ते शूद्राणामेव याजकाः न तु तेषामात्मन फलमस्ति अतश्च वेदवादिषु निन्दिताः ॥ ४२ ॥

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम्। पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत् ॥ ४३ ॥

तेषामिति। तेषां शूद्रधनार्जिताग्निपरिचारिणां मूर्खाणां मूर्ध्नि पादं दत्त्वा दाता शूद्रः तेन दानेन यतस्तत्परलोके दुःखं निस्तरति न तु याजकानामात्मनः भवति ॥ ४३ ॥

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥ ४४॥

अकुर्व्वन्निति। नित्यं यद्विहितं सन्ध्योपासनादि नैमित्तिकञ्च अवसर्गादौ स्नानादि तदकुर्व्वन् तथा प्रतिषिद्धं हिंसाद्यनुतिष्ठन् अविहितनिषिद्धेषु अत्यन्तासक्तिं कुर्व्वन् नरो मनुष्यजातिमात्रं प्रायश्चित्तमर्हति। नचेन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामत इति निषेधात्। निन्दितपदेनैव प्रसक्तश्चेन्द्रियार्थेष्वित्यपि संगृहीतं अतः पृथक् न वक्तव्यं उच्यते अस्य स्नातकव्रतेषु पाठात्तत्र व्रतानीमानि धारयेदित्युपक्रमान्नायं प्रतिषेधः किन्तु व्रतविधिः तर्ह्यकुर्वन्विहितं कर्म्मेत्यनेनैव प्राप्तत्वात् पृथक् न वक्तव्यमिति चेन्न स्नातकेतरविषयत्वेनास्य सविषयत्वात्॥ ४४॥

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः। काम
कारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥ ४५॥

अकामत इति। अबुद्धिकृते पापे प्रायश्चित्तं भवतीत्याहुः पण्डिताः एके पुनराचार्य्याः कामतः कृते पापे प्रायश्चित्तं भवतीत्याहुः एतच्च पृथक्कृत्याभिधानं प्रायश्चित्तगौरवार्थं श्रुतिनिदर्शनादिति। इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत् तमश्लीला वागित्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं

प्रायश्चित्तमर्हतीति। श्रुत्यर्थः। इन्द्रो यतीन् बुद्धिपूर्वं शालावृकेभ्यो दातुं दत्तवान् स प्रायश्चित्तार्थं प्रजापतिसमीपमगमत् तस्मै प्रजापतिरुपहव्याख्यं कर्म प्रायश्चित्तं दत्तवान् अतः कामकारकृतेऽपि प्रायश्चित्तम्॥ ४५॥

अकामतः कृतम्पापं वेदाभ्यासेन शुध्यति।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः॥ ४६॥

अकामतइति। अनिच्छातः कृतम्पापं वेदाभ्यासेन शुध्यति नश्यति वेदाभ्यासेनेति कामकृतविषयप्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तान्तराणामपि विधानात् रागद्वेषादिव्यामूढतया पुनरिच्छातः कृतं नानाप्रकारैः प्रायश्चित्तैर्विधास्यमानतपोभिः शुध्यतीति गुरुप्रायश्चित्तपरं अतः पूर्वोक्तस्यैवार्थं व्याकारः। यद्यपि अधिकारिनिरूपणं प्रकृतं प्रायश्चित्तमनन्तरं वक्ष्यति तथाप्यत्रायात् लघुप्रायश्चित्ताधिकारी न्यायात् गुरुणि प्रायश्चित्ते अधिक्रियतइति अधिकारिनिरूपणमेवेदम्॥ ४६॥

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा। न
संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः॥ ४७॥

प्रायश्चित्तीयतामिति। दैवात् प्रमादादेतच्छरीरकृतेन

द्येतां विद्वांसो मन्यन्ते अगादिमूल्याभावात् बहूनां तद्धनं विनियोगाभावादास्वरमुच्यते अतस्तद्व्ययस्य नाशकत्वादनादेयत्वं कर्त्तव्यम् ॥ २० ॥

न तस्मिन्धारयेद्दण्डं धार्म्मिकः पृथिवीपतिः । क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥२१॥

न तस्मिन्निति । तस्मिन्धननिमित्ते चौर्य्यवलात्कारं कुर्वाणे धर्म्मप्रधानो राजा दण्डं न कुर्यात् यस्माद्राज्ञो मूढत्वाद्ब्राह्मणः क्षुधावसादं प्राप्नोति ॥ २१ ॥

तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः । श्रुत शीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत् ॥ २२ ॥

ततश्च तस्येति । तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गं ज्ञात्वा श्रुताचारौ च तदनुरूपां वृत्तिं स्वगृहाद्राजा कल्पयेत् ॥ २२ ॥

कल्पयित्वाऽस्य वृत्तिञ्च रक्षेदेनं समन्ततः । राजा हि धर्म्मषड्भागन्तस्मात्प्राप्नोति रक्षितात् ॥ २३ ॥

कल्पयित्वेति । अस्य ब्राह्मणस्य जीविकां विधाय मनु चौरादेः सर्व्वतो रक्षेत् । यस्माद्ब्राह्मणाद्रक्षितात्तत्कृत धर्म्म षड्भागमवाप्नोति ॥ २३ ॥

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित्। यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥ २४ ॥

न यज्ञार्थमिति। यज्ञसिद्ध्यर्थं धनं ब्राह्मणः कदाचिन्न शूद्राद्याचेत्। यस्माच्छूद्राद्याचित्वा यज्ञं कुर्वाणो मृतश्चण्डालो भवति अतो याचननिषेधात् शूद्रादयाचितोपचितं यज्ञार्थमप्यविरुद्धम् ॥ २४ ॥

यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति। स याति भासतां विप्रः काकतां वा शतं समाः ॥ २५ ॥

यज्ञार्थमिति। यज्ञसिद्ध्यर्थं धनं याचित्वा यो यज्ञे सर्वं न विनियुङ्क्ते स शतं वर्षाणि भासत्वं काकत्वं वा प्राप्नोति ॥ २५ ॥

देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः। स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

देवस्वमिति। प्रतिमादिदेवतार्थमुत्सृष्टं धनं देवस्वं ब्राह्मणस्य च यो लोभादपहरति स पापात्मा जन्मान्तरे गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

इष्टिं वैश्वानरीं नित्यमिर्वपेदब्दपर्य्यये। क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ॥ २७ ॥

इष्टिमिति। समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्य्यय वैश्वसृज्ञाहिव वर्षप्रवृत्तिः तत्र वर्षान्तरे वैश्वानरीमिष्टिं विहितपशुसोमयागासम्भवे तदकरणदोषनिर्हरणार्थं सर्व्वदा शूद्राहित धनधनपत्यपामिष्टिं कुर्य्यात् ॥ २७ ॥

आपत्कल्पेन यो धर्म्मं कुरुतेऽनापदि द्विजः। स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥ २८ ॥

आपदिति। आपद्विहितेन विधिना योऽनापदि धर्म्मानुष्ठानं द्विजः कुरुते तस्य तत्परलोके निष्फलमवतीति मन्वादिभि र्विचारितम् ॥ २८ ॥

विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥ २९ ॥

विश्वैरिति। विश्वदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिर्ब्राह्म णैर्मरणाद्भीतैरापत्सु मुख्यस्य विधेः सोमादेर्वैश्वानर्य्यादिः प्रति प्रतिनिधिरनुष्ठितोऽसौ मुख्यासम्भवे कार्य्यः नतु मुख्यसम्भवे ॥ २९ ॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ ३० ॥

प्रभुरिति । यो मुख्यानुष्ठानसमर्थः सन् आपद्विहितेन प्रतिनिधिना अनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकं अभ्युदयरूपं प्रत्यवायपरिहारफलञ्च न भवति आपत्कल्पेन यो धर्म्ममित्यनेनोक्तमप्येतत् प्रसङ्गादरार्थं पुनरुच्यते ॥ ३० ॥

न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्म्मवित् । स्ववीर्य्येणैव तान् शिष्यान्मानवानपकारिणः ॥ ३१ ॥

नेति । धर्म्मज्ञो ब्राह्मणः किञ्चिदन्यपकृतं न राज्ञः कथयेत् अपितु स्वशक्त्यैव वक्ष्यमाणाभिचारादिनाऽपकारिणो मनुष्यान् निगृह्णीयात् । ततश्च स्वकीयधर्म्मविरोधादिप्रज्ञापराध करणे वक्ष्यमाणाभिचारादि न दोषायेत्येवम्परमेतत् नत्वभिचारो विधीयते राजनिवेदनं वा निषिध्यते ॥ ३१ ॥

स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरं । तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः ॥ ३२ ॥

स्ववीर्य्यादिति । यस्मात् स्वसामर्थ्याद्राजसामर्थ्याच्च परा धीनराजसामर्थ्यापेक्षया स्वसामर्थ्यमेव स्वाधीनत्वाद्बलीयः तस्मात् स्वेन वीर्य्येणैव शत्रून् ब्राह्मणो निगृह्णीयात् ॥ ३२ ॥

श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्। वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः ॥ ३३ ॥

तर्हि स्ववीर्य्यमित्याह श्रुतीरिति। अथर्ववेदे अङ्गिरसी दृष्टाभिचारश्रुतीरविचारयन् कुर्य्यात् तदर्थमभिचारमनुतिष्ठेत् इत्यर्थः यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रकार्य्यकरणात् शस्त्रं तेन ब्राह्मणः शत्रून् हन्यात् न तु शत्रुनिग्रहमाय राजा वाच्यः ॥ ३३ ॥

क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मनः। धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥ ३४ ॥

क्षत्रियइति। क्षत्रियः स्वपौरुषेण शत्रुतः परिभवरूपा मात्मन आपदं निस्तरेत्। वैश्यशूद्रौ पुनः प्रतिकर्त्रे धनदानेन ब्राह्मणस्त्वभिचारात्मकैर्ज्जपहोमैः ॥ ३४ ॥

विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते। तस्मै नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ॥ ३५ ॥

विधातेति। विहितकर्म्मणामनुष्ठाता पुत्रशिष्यादीनां शास्ता

प्रायश्चित्तादिधर्म्माणां वक्ता धर्म्ममूलमेवोप्रधानो ब्राह्मण उच्यते तस्मै शिष्यायाशुभमित्येवं अनिष्टं न ब्रूयात् नापि शाक्तीमां वाचं वाग्दण्डधिग्दण्डरूपां तस्योच्चारयेत् ॥ २५ ॥

न वै कन्या न युवतीर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥ २६ ॥

नवै इति। कन्या अनूढा ऊढापि तरुणी तथा अल्पाध्यायि मूर्खा व्याधिपीडितानुपनीताः श्रौतान् सायंप्रातर्होमाद्य कुर्य्युः। होतावर्गेदिति प्रधानावचं कन्यादीनां प्रतिषेधः ॥ २६ ॥

नरके हि पतन्त्येते जुह्वतः स च यस्य तत् । तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥ २७ ॥

नरकइति। एते कन्यादयो होमं कुर्व्वाणा नरकं गच्छन्ति यस्य तदग्निहोत्रं प्रतिनिधिरूपेण कुर्व्वन्ति सोपि नरकं गच्छति तस्मात् श्रौतकर्म्म प्रयोगः समस्तवेदाध्यायी होता कार्य्यः ॥ २७ ॥

प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणां । अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥ २८ ॥

प्राजापत्यमिति। आधाने प्राजापत्यमश्वं प्रजापतिदेवताक

मप्यं धनमप्यन्तो यत्वां ब्राह्मणो दक्षिणामदत्वा क्रतेषाधाने चनाहिताग्निर्भवति श्राधानफलञ्च लभते तस्मादाधाने मप्य दक्षिणां दद्यात्॥ ३८॥

पुण्यान्यन्यानि कुर्व्वीत श्रद्दधानो जितेन्द्रियः।
नत्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन॥ ३९ ॥

पुण्यानीति। श्रद्धावान् वशीकृतेन्द्रियः यज्ञव्यतिरिक्तानि तीर्थयात्रादीनि कर्म्माणि पुण्यानि कुर्व्वीत नतु शास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेत परोपकारार्थलाद्दक्षिणायाः स्वल्पेनापुलिगादितोषविद्धाविदं वचनं॥ ३९॥

इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून्।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत्॥ ४० ॥

इन्द्रियाणीति। चक्षुरादीनि इन्द्रियाणि जीवतः ख्यातिरूपं यशः स्वर्गायुषी मृतस्य ख्यातिरूपां कीर्त्तिमपत्यानि पशूंश्चाल्पदक्षिणो यज्ञः नाशयति तस्मादल्पदक्षिणादानेन यागं न कुर्य्यात्॥ ४०॥

अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः।
चान्द्रायणञ्चरेन्मासं वीरहत्यासमं हि तत्॥ ४१ ॥

अग्निहोत्रीति। अग्निहोत्री ब्राह्मणः इच्छातोऽग्निषु सायं

प्रातर्होमानकृत्वा मासं चान्द्रायणं चरेत् यस्माद्वीरः पुत्रः तद्वध्या समानमुक्तमेतत्। तथा च श्रुतिः वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते। अन्ये तु मासमपविध्येति सम्बध्नन्ति ॥ ४१ ॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते। ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥ ४२ ॥

ये शूद्रादिति। ये शूद्रादधिगम्यार्थमाप्य सामान्याभिधानेन याचनेन वा धनं लोकस्य वृषलाग्न्युपसेविनामिति वक्ष्यमाणविशेषादाधानपूर्वकमग्निहोत्रमनुतिष्ठन्ति ते शूद्राणामेव याजकाः न तु तेषामात्मनः फलमापयति अतस्ते वेदवादिषु निन्दिताः ॥ ४२ ॥

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम्। पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत् ॥ ४३ ॥

तेषामिति। तेषां शूद्रधनार्जिताग्निपरिचारिणां मूर्खाणां मूर्ध्नि पादं दत्त्वा दाता शूद्रः तेन दानेन सततमरलोके दुःखेभ्यो निस्तरति न तु यजमानानामस्य फलं भवति ॥ ४३ ॥

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ ४४ ॥

अकुर्व्वन्निति। नित्यं यद्विहितं सन्ध्योपासनादि नैमित्तिकञ्च ग्रहणादौ स्नानादि तदकुर्व्वन् तथा प्रतिषिद्धं हिंसा धनुतिष्ठन् अविहितनिषिद्धेषु अत्यन्तासक्तिं कुर्व्वन् नरो मनुष्य जातिमात्रं प्रायश्चित्तमर्हति। नचेन्द्रियार्थेषु सर्व्वेषु न प्रसज्जेत कामत इति निषेधात्। निन्दितपदेनैव प्रसक्तेन्द्रियार्थेष्वित्यपि संगृहीतं अतः पृथक् न वक्तव्यं उच्यते अस्य स्नातकव्रतेषु पाठा त्तत्र व्रतानीमानि धारयेदित्युपक्रमाज्ञायं प्रतिषेधः किन्तु व्रतविधिः तच्चाकुर्वन्विहितं कर्म्मेत्यनेनैव प्राप्तत्वात् पृथक् न वक्तव्यमिति चेन्न स्नातकेतरविषयत्वेनास्य सविषयत्वात् ॥ ४४ ॥

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः। काम कारकृतेप्याहुरेके श्रुतिनिदर्शनात् ॥ ४५ ॥

अकामत इति। अबुद्धिकृते पापे प्रायश्चित्तम्भवतीत्याहुः पण्डिताः एके पुनराचार्य्याः कामतः कृते पापे प्रायश्चित्तम्भव तीत्याहुः एतच्च पृथक् कृत्याभिधानम्प्रायश्चित्तगौरवार्थं श्रुति निदर्शनादिति। इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् तम श्लीला वागित्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं

प्रायश्चर्हतीति। अयमर्थः। इन्द्रो यतीन् बुद्धिपूर्वं श्वभ्यः खादितुं दत्तवान् स प्रायश्चित्तार्थं प्रजापतिसमीपमगमत् ततो प्रजापतिरुपहव्याख्यं कर्म प्रायश्चित्तं दत्तवान् अतः कामकारकृतेऽपि प्रायश्चित्तम् ॥ ४५ ॥

अकामतः कृतम्पापं वेदाभ्यासेन शुध्यति।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ॥ ४६ ॥

अकामत इति। अनिच्छातः कृतम्पापं वेदाभ्यासेन शुध्यति नश्यति वेदाभ्यासेनेति कामकृतविषयप्रायश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तान्तराणामपि विधानात् रागद्वेषादिव्यामूढतया पुनरिच्छातः कृतं नानाप्रकारैः प्रायश्चित्तैर्विधायकतपोभिः शुध्यतीति गुरुप्रायश्चित्तपरं अतः पूर्वोक्तस्यैवार्थं व्याकारः। यद्यपि अधिकारिनिरूपणं प्रकृतं प्रायश्चित्तं तदनन्तरं वक्ष्यति तथाप्यज्ञानात् लघुप्रायश्चित्ताधिकारो ज्ञानात् गुरुणि प्रायश्चित्ते अधिक्रियत इति अधिकारिनिरूपणमेवेदम् ॥ ४६ ॥

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा। न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४७ ॥

प्रायश्चित्तीयतामिति। दैवात् प्रमादादेतच्छरीरकृतेन

पूर्व्वजन्मार्जितदुष्कृतेन वा क्षयरोगादिभिः कश्चिदेव प्राय-श्चित्तीयतां प्राप्य जन्मनि प्रायश्चित्ते चाकृते सह तैः क्षयरोग्यादिभिः संसर्गं न गच्छेत् ॥ ४७ ॥

इह दुश्चरितैः केचित्केचित्पूर्व्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम् ॥ ४८ ॥

इहेति । इह जन्मनि निषिद्धाचरणैः केचित् पूर्व्वजन्मकृतैः दुष्टस्वभावा मनुष्याः कौनख्यादिकं रूपविपर्य्ययं प्राप्नुवन्ति ॥ ४८ ॥

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् । ब्रह्महा क्षयरोगित्वन्दौश्चर्म्म्यं गुरुतल्पगः ॥ ४९ ॥

पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् । धान्यचौरोऽङ्गहीनत्वमातिरैक्यन्तु मिश्रकः ॥ ५० ॥

अन्नहर्त्तामयावित्वं मौक्यं वागपहारकः । वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः ॥ ५१ ॥

एवं कर्म्मविशेषेण जायन्ते सद्विगर्हिताः । जड-मूकान्धबधिरा विकृताकृतयस्तथा ॥ ५२ ॥

सुवर्णेति । पिशुन इति । अन्नहर्त्तेति । एवंकर्म्मेति ।

ब्राह्मणवधः मित्रहत्या च सुहृदादेर्वधः प्रमादात् पुरीषादेरदनं। मेध्यानिषिद्धं न भोज्यं भवेदिति यद्वस्तु तद्भुक्त्वेदमभक्ष्यमित्यादि। एतानि सुरापानसमानि ॥ ॥ ५६ ॥

निक्षेपस्यापहरणं नराश्वरजतस्य च। भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम् ॥ ५७ ॥

निक्षेपस्येति। न्यासस्य सुवर्णव्यतिरिक्तनिःक्षेपस्य हरणं तथा मनुष्यतुरगरूप्यभूमिहीरकमणीनां हरणं सुवर्णस्तेयतुल्यम् ॥ ५७ ॥

रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च। सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ ५८ ॥

रेतःसेक इति। सोदर्यभगिनीकुमारीचाण्डालीसखिपुत्रभार्यासु यो रेतःसेकस्तं गुरुभार्यागमनसमानमाहुः। एतेषाञ्चैतेन समीकरणं यत्तेन समीकृतं तस्य तदीयप्रायश्चित्तार्थं यत्तु कौटसाक्ष्यसुहृद्वधयोः सुरापानसमीकृतयोर्ब्रह्महत्याप्रायश्चित्तं वक्ष्यति तद्विकल्पार्थं। यत्पुनर्गुरोरलीकनिर्बन्धस्य ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टाद्ब्रह्महत्याप्रायश्चित्तनिर्देशः समीकृतानां न्यूनप्रायश्चित्तं भवतीति ज्ञापनार्थं तथाच लोके राजसमः सचिव इत्युक्तेः सचिवस्य न्यूनतैव गम्यते यथोपदेशिकप्रायश्चित्ताभ्यामातिदेशिकप्रायश्चित्तानां न्यूनप्रायश्चित्तं समीकृतानाञ्च ॥ ५८ ॥

गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयाः ।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ ५९ ॥

परिवित्तिताऽनुजेनोढे परिवेदनमेव च । तयो
र्दानञ्च कन्यायास्तयोरेव च याजनम् ॥ ६० ॥

कन्याया दूषणञ्चैव वार्द्धुष्यं व्रतलोपनम् । तडा
गारामदाराणामपत्यस्य च विक्रयः ॥ ६१ ॥

व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च ।
भृताच्चाध्ययनादानमपण्यानाञ्च विक्रयः ॥ ६२ ॥

सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् । हिंसौ
षधीनां स्त्र्याजीवोऽभिचारो मूलकर्म्म च ॥ ६३ ॥

इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् ।
आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनन्तथा ॥ ६४ ॥

अनाहिताग्नितास्तेयमृणानामनपक्रिया । असच्
छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥ ६५ ॥

धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्र
विट्क्षत्रवधो नास्तिक्यञ्चोपपातकम् ॥ ६६ ॥

इदानीमुपपातकान्याह गोवधेत्यादि । परिवित्तितेति । कन्या
याइति । व्रात्यतेति । सर्व्वेति । इन्धनार्थमिति । अनाहितेति ।

यान्येति। गोहननं जातिकर्मदुष्टानां याजनम्परपत्नीगमनमात्म
विक्रयः मातृपितृगुरूणाञ्च शुश्रूषाकरणं सर्व्वदा ब्रह्मयज्ञ
त्यागः न वेदविस्मरणं ब्रह्मोज्झत्वेनोक्तत्वात्। अग्नेश्च स्मा
र्त्तस्य त्यागः श्रौतानामग्निहोत्रापविद्धयोनिरित्युक्तत्वात् सुतस्य च
संस्कारभरणाद्यकरणं कनीयसा भ्रात्रा विवाहे कृते ज्येष्ठस्य
परिवित्तिता भवति दाराग्निहोत्रसंयोगमित्यादिना प्रागुक्तं
कनिष्ठस्य परिवेतृत्वमनयोश्च कन्यायाः दानमनयोरेव विवाहहो
मादिना याजनं कन्यायाः मैथुनवर्ज्जमंगुलीप्रक्षेपादिना
दूषणं रेतःसेकपर्य्यन्तमैथुनेषु तु रेतःसेकः स्वयोनीषु कुमारीष्व
न्त्यजासु च इत्युक्तत्वात् प्रतिषिद्धं। वृद्धिजीवनं ब्रह्मचारिणो
मैथुनसम्भोगो स्वार्थं भार्य्यापत्यानां विक्रयः यथाकालमनुपनयनं
व्रात्यता। तथा चोक्तं अतऊर्द्ध्वं त्रयोप्येते यथाकालमसंस्कृता
इति। बान्धवानां पितृव्यादीनां अननुवृत्तिः प्रतिनियतवेतन
ग्रहणपूर्व्वकमध्यापनं प्रतिनियतवेतनप्रदानपूर्व्वकमध्ययनञ्च
अविक्रय्याणां तिलादीनां विक्रयः सुवर्णाद्युत्पत्तिस्थानेषु राजा
ज्ञया अधिकारः महतां जलप्रवाहप्रतिबन्धहेतूनां सेतुबन्धा
दीनां प्रवर्त्तनं ओषधीनां जातिमात्रादीनां हिंसनं एतच्च ज्ञान
पूर्व्वकाभ्यासहिंसायां प्रायश्चित्तगौरवात् यत्तु कृष्टजानामो
षधीनामित्यादिना वक्ष्यति तत्सकृद्धिंसायां प्रायश्चित्ताभवात्
भार्य्यादिस्त्रीणां वेश्यात्वं कृत्वा तदुपजीवनं श्येनादियज्ञेनानपरा
धस्य मारणं मन्त्रौषधादिना वशीकरणं पाकादिदृष्टप्रयोजनार्थं

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ ६८ ॥

खरेति । गर्दभतुरगोष्ट्रमृगहस्तिछागमेषमत्स्यसर्पमहिषाणां प्रत्येकवधः सङ्करीकरणं ज्ञेयम् ॥ ६८ ॥

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ ६९ ॥

निन्दितेभ्य इति । अप्रतिग्राह्यधनेभ्यः प्रतिग्रहो वाणिज्यं शूद्रस्य परिचर्या अनृताभिधानं इत्येतत्प्रत्येकमपात्रीकरणं ज्ञेयम् ॥ ६९ ॥

कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यञ्च मलावहम् ॥ ७० ॥

कृमीति । कृमयः क्षुद्रजन्तवः तेभ्य ईषत् स्थूलाः कीटाः तेषां वधः पक्षिणां च मद्यानुगतं मद्यभाण्डमपि आकारेणैकभाण्डे कृत्वा मद्येन सहानीतस्य भोजनम् । मेधातिथिस्तु मद्यानुगतं मद्यसंसृष्टमाह । तन्न तत्र प्रायश्चित्तगौरवात् । फलकाष्ठपुष्पाणां च चौर्यं अल्पेऽप्यपायेऽपि चलचित्तत्वं च एतत् प्रत्येकं मलिनीकरणम् ॥ ७० ॥

शूद्राणामर्द्धतुल्या महात्मना। अर्द्धं चमतप्रोक्तं शुद्धये पाप
कर्म्मणाम्। यावद्भिर्व्वर्षैर्ब्राह्मणानां वधे ततो द्विगुणैः क्षत्त्रिये
क्षत्त्रियाणां द्रष्टव्यं वा रदर्भकाचर्या वधे भवेत् त्रिगुणैर्व्वैश्यैर्ब्बा
णां चतुर्भिः शूद्रः शूद्राणामिति वधाच्च क्षत्त्रियादीनां वधानां
व्रतमपि द्विगुणं त्रिगुणं चतुर्गुणमित्यर्थः एतानि च मनूक्तब्रह्म
वधप्रायश्चित्तवचनानि गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेन
भविष्यपुराणव्याख्यातानि। हन्ता चेत् गुणवान्वीर अकामान्नि
र्गुणो हतः। कर्त्तव्यानि मनूक्तानि नरैर्व्वै चाश्वमेधिकम्।
अथवा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। अन्येऽवभृथं
वापि अकामान्निर्गुणे हते। जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृत
तथा। अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् इति विष्णु
मिवचनात् प्रायश्चित्ताधिक्यमूहनीयम्। कामकृते तु ब्राह्मण
वधे द्विगुणं ब्रह्मवधप्रायश्चित्तं चतुर्विंशतिवर्षमाहाङ्गिराः। अकामतः कृते पापे प्रायश्चित्तं न कामतः। स्यात्त्वका
मकृते यत्तु द्विगुणं बुद्धिपूर्व्वके ॥ ७२ ॥

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ ७३ ॥

लक्ष्यमिति। धनुःशराद्यायुधधारिणां युध्यमानानां
ब्रह्मवधपापक्षयार्थं अयं वध्योभूत इत्येवं जानतां स्वेच्छया

यावच्छस्त्रीभूतो यावत्तिष्ठेत्। यावन्मृतोऽमृतकल्पो वा विशुद्ध्येदि-
त्याह याज्ञवल्क्यः। संग्रामे वा हतो लक्ष्यीभूतः शुद्धिमवाप्नु-
यात्। मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुद्ध्यति। अग्नौ प्रदीप्ते
अधो मुखस्त्रीन् वारान् शरीरं प्रक्षिपेत्। तथा प्राचेत यथा
विवेतीख्यापयन्नवधात्। एवं प्रक्षिपेत् एतत्प्रायश्चित्तद्वयमन-
न्तरं वक्ष्यमाणं च यजेत वाश्वमेधेनेत्येतत्प्रायश्चित्तत्रयमिदं
कामतः क्षत्रियस्य ब्राह्मणवधविषयमनुलोमकमेव त्रिविधा
तथा चाख्यातं भविष्यपुराणे। लक्ष्यं शस्त्रभृतां वा स्यात् विदुषा-
मिच्छयात्मनः। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्-
शिराः। यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः। प्रायश्चित्तत्रयं
ह्येतत्क्षत्रियस्य प्रकीर्त्तितम्। क्षत्रियो निर्गुणो वीरं ब्राह्मणं वेद-
पारगम्। निहत्य कामतो वीरं लक्ष्यः शस्त्रभृतां भवेत्। चतुर्वेद-
विदं वीरं ब्राह्मणं चाग्निहोत्रिणम्। निहत्य कामादात्मानं
क्षिपेदग्नाववाक्शिराः। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान्
नृप। यजेत वाश्वमेधेन क्षत्रियो वा महीपतिः॥ ७३॥

यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा। अभि-
जिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा॥ ७४॥

यजेतेति। यजेत वाश्वमेधेनेत्यनन्तरं व्याख्यातं स्वर्जिता नाम
विशेषेण गोसवेन वा अभिजिता वा विश्वजिता वा त्रिवृता अग्नि-

हुत्वा वा स्वयं हुतानि प्राणान्ते ब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि। तदुक्तं भविष्यपुराणे। सर्व्वप्रकारेण शरीरकर्षणं व्रतमापद्यते। अनुज्ञानं क्षत्रियादीनां वधे कामतः पूर्व्वके॥ ७४॥

**अपन् वान्यतमं वेदं योजनानां शतं व्रजेत्। ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः॥ ७५॥**

अपन्निति। वेदानां मध्यादेकं वेदं जपन् स्वल्पाहारः संयते न्द्रियो ब्रह्महत्यापापनिर्हरणाय योजनानां शतं गच्छेत् एतद प्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तं तथाच भविष्यपुराणे अयमेव श्लोकः पठितो व्याख्यातश्च। जाति मात्रं यदा विप्रं हन्यादमतिपूर्व्वकम्। वेदविद्याग्निहोत्री च तदा तस्य भवेदिदम्॥ ७५॥

**सर्व्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्। धनं वा जीवनायालं गृहं वा सपरिच्छदम्॥ ७६॥**

सर्व्वस्वमिति। सर्व्वस्वं वा वेदविदे ब्राह्मणाय दद्यात् यावद्वा जीवनाय समर्थं गृहं वा गृहोपयोगिधनधान्यादियुतं अतः सर्व्वस्वं वा गृहं वा सपरिच्छदन्दद्यात् जीवनायालमिति वच नात् जीवनपर्य्याप्तं सर्व्वस्वं गृहं वा दद्यात् न ततोऽल्पं एतच्चा

कृतवापनो निवसेद्ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ ७८ ॥

कृतेति । इदानीं समाप्ते द्वादशे वर्षे इत्युपस्थानात् द्वादशवार्षिकस्य विशेषमाह । लूनकेशनखश्मश्रुर्गोब्राह्मणहिते रतः गोब्राह्मणोपकारान्कुर्व्वन् ग्रामसमीपे गोष्ठप्रदेशे वृक्षमूलान्यतमे निवसेत् वने कुटीं कृत्वेत्यस्य विकल्पार्थमिदम् ॥ ७८ ॥

ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजन् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥ ७९ ॥

ब्राह्मणार्थ इति । प्रक्रान्ते द्वादशवार्षिकेऽन्तराम्युदकादि सकृद्व्याघ्राद्याक्रान्तस्य ब्राह्मणस्य गोर्व्वा परित्राणार्थं प्राणान्परित्यजन् ब्रह्महत्यया मुच्यते। गां ब्राह्मणं वा ततः परित्रायामृतोऽपि असमाप्तद्वादशवर्षोऽपि मुच्यते ॥ ७९ ॥

त्र्यवरम्प्रतियोद्धा वा सर्व्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते ॥ ८० ॥

त्र्यवरमिति । चौरादिभिर्ब्राह्मणसर्व्वस्वेऽपह्रियमाणे तद्रक्षणार्थं निर्व्याजं यथाशक्ति प्रयत्नं कुर्व्वन् तत्र त्रिवारान् युद्धे प्रवर्त्तमानो नाजीतेऽपि सर्व्वस्वे ब्रह्महत्यापापात् प्रमुच्यते। अथ च

विप्रो हन्यात् विप्रस्तु निर्गुणं। अकामतस्तदा गच्छेत्स्नानमश्वा
श्वमेधिकं। गोविप्रहराजस्तु अश्वमेधविवर्जितसकलप्रायश्चित्त
शेषं तां अस्य अकामतस्त्रैवार्षिकप्रायश्चित्तस्यान्तराऽवभृथ
स्नाने तेनैव शुद्धिरित्याह। तद्वदुक्तभविष्यपुराणवचनविरो
धात्॥ ८२॥

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते। तस्मा
त्समागमे तेषामेनो विख्याप्य शुद्ध्यति॥ ८३॥

धर्मेति। यस्माद्ब्राह्मणो धर्मस्य कारणं ब्राह्मणेन धर्मोप
देशे कृते धर्मानुष्ठानात् राजा तस्याग्रं प्राप्तं मन्वादिभिरुच्यते
ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्मतरुनिष्पत्तिः तस्मात्तेषां
समागमे अश्वमेधे पापं निवेद्यावभृथस्नातः शुद्ध्यतीति अर्थवि
शेषः॥ ८३॥

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम्। प्रमा
णं चैव लोकस्य ब्रह्मात्रैव हि कारणम्॥ ८४॥

ब्राह्मण इति। ब्राह्मण उत्पत्तिमात्रेणैव किम्पुनः श्रुतादिभि
र्देवानामपि पूज्यः सुतरां मनुष्याणां लोकस्य च प्रत्यक्षवत्
प्रमाणमस्य तदुपदेशस्य प्रामाण्यात् यस्मात्तत्र वेद एव कारणं वेद
मूलकत्वात्तदुपदेशस्य॥ ८४॥

ब्राह्मणान् वा बहून् गुरु । निहन्ता युगपद्वीर एकं प्राणान्ति कञ्चरेत् । एतच्चाज्ञानविषयं । तथा च अकामतो ब्रह्म हन्यात् ब्राह्मणान् ब्राह्मणो गुरु । परिदने तथा घोरे यावत्प्राण परित्यजम् । एतच्च प्रकृतत्वायुगपन्मारणविषयं क्रममारणे तु विधेः प्राथमिकादन्यादित्यावृत्तिविधायकं वेदवचनं बोद्धव्यं ॥ ८६ ॥

हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत् । राजन्य वैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥ ८७ ॥

हत्वेति । प्रकृतत्वाद्ब्राह्मणगर्भविषयं स्त्रीपुन्नपुंसकत्वेना विज्ञातं क्षत्रियं वैश्यञ्च यागप्रवृत्तं हत्वा आत्रेयीञ्च स्त्रियं ब्राह्मणीं । आत्रेयीञ्च ब्राह्मणीमिति यमस्मरणात् हत्वा ब्रह्महत्या प्रायश्चित्तं कुर्य्यात् । आत्रेयी च रजस्वला ऋतुस्नातोच्यते रजस्वलां ऋतुस्नातामात्रेयीमिति वशिष्ठस्मरणात् । एवञ्चान त्रेयीब्राह्मणीवधे उपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रवध इति यत्तूत्तरश्लोके हत्वा च स्त्रीमुपदधमिति तदाहिता ग्निब्राह्मणस्य ब्राह्मणीभार्य्याविषयम् । तथा चाङ्गिराः । आहि ताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिन्दिताम् । ब्रह्महत्याव्रतं कुर्य्या दात्रेयीघ्नस्तथैव च ॥ ८७ ॥

उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा। अप
हृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्॥ ८८॥

उक्त्वेति। हिरण्यभूम्यादिविषयसाक्ष्ये अनृतमुक्त्वा गुरोश्च
मिथ्याभिशापमुत्पाद्य निक्षेपञ्च ब्राह्मणसुवर्णादन्यद्रजतादि
द्रव्यं क्षत्रियादेः सुवर्णमपि चापहृत्य स्त्रीवधं च यथा यथाजाति
कृत्वा मित्रं चाब्राह्मणं हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात्॥ ८८॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। काम
तो ब्राह्मणवधे निष्कृतिर्न विधीयते॥ ८९॥

इयमिति। एतत्तु प्रायश्चित्तं विशेषोपदेशमन्तरेणा
कामतो ब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे नैव निष्कृतिः
नैतत्प्रायश्चित्तं किन्त्वतोऽधिकगुणादिकरणात्मकमिति प्रायश्चित्त
गौरवार्थं न तु प्रायश्चित्ताभावार्थम्। कामतस्तु कृतं मोहात्
प्रायश्चित्तैः पृथग्विधैः इति पूर्वोक्तविरोधात्॥ ८९॥

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्।
तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः॥ ९०॥

सुरामिति। सुराशब्दः पैष्टीमात्रे मुख्यो न तु गौडीमाध्वी
पैष्टीषु चिताद्यनुगतैकरूपाभावात् प्रतीकस्य शक्तिकल्पने

ग्निवर्चकरणगौरवप्रसङ्गात्। गौडाद्यभिहितरानु गुरु
त्वापि सुराशब्दप्रयोगोपपत्तेः। अतएव भविष्यपुराणे
सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे। पैष्ट्याः पानेतु
पीतायां प्रायश्चित्तं निबोध मे। मनुनोक्तं महाबाहो वक्ष्यमाणम
योगतः। एतावानिति निर्द्धारणे षष्ठी एतासां गौडीमाध्वी
पैष्टीनामकतानां मध्ये पैष्टीपाने मनूक्तं प्रायश्चित्तं सुरापीत्वा
द्विजो मोहादितीत्यर्थः। मुख्यां सुरां पैष्टीं रागादिवामूढतया
द्विजो ब्राह्मणः क्षत्रियो वैश्यश्च पीत्वा अग्निवर्णां सुरां पिबे
त्तथा सुरया शरीरे निर्दग्धे सति तिस्मात्पापान्मुच्यते।
एतच्च बुद्धिपूर्वकामकारकृतसुरापानविषयम्। तथाच वृद्ध
स्मृतिः। सुरापाने कामकृते ज्वलन्तीं तां विनिःक्षिपेत्। मुखे
तथा च निर्दग्धो मृतः शुद्धिमवाप्नुयात्॥ ९०॥

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा। पयोघृतं
वा मरणाद्गोशकृद्रसमेव वा॥ ९१॥

गोमूत्रमिति। गोमूत्रजलगोक्षीरगव्यघृतगोमयरसाना
मन्यतममग्निसदृशं कृत्वा यावन्मरणम्पिबेत्॥ ९१॥

कणान्वा भक्षयेदब्दम्पिण्याकं वा सकृन्निशि।
सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी॥ ९२॥

कणान्वेति। अथवा गोरोमादिकृतवासा जटायान् सुरा

मुख्या सुरा पूर्ववाक्यनिषिद्धत्वात् चैवर्णिकसामान्येन तथा सर्व्वा गौडी माध्वी च द्विजोत्तमैर्न पातव्या ॥ ९४ ॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यन्देवानामश्नता हविः ॥ ९५ ॥

यक्षेति। मद्यमपि निषिद्धं पैष्टीगौडीमाध्वीव्यतिरिक्तं नव विधमेोद्धृत्वं तदाह पुलस्त्यः। पानसद्राक्षमाधूकं खार्जूर मालमैक्षवम्। माध्वीकं टाङ्कमार्द्वीकमैरेयनारिकेलजम्। सामान्यानि द्विजातीनां मद्यान्येकादशैव च। द्वादशन्तु सुरा मद्यं सर्व्वेषामधमं स्मृतम्। मांसञ्च प्रतिषिद्धं सुरा च पिष्टकारा प्रोक्ता। असूयतइति आसवो मद्यानामवस्थाविशेषः सद्यः कृतसंधानः सञ्जातमद्यभावः। यमधिकृत्य इदं पुलस्त्यो क्तप्रायश्चित्तम्। द्राक्षेक्षुटङ्कखर्जूरपनसादेश्च यो रसः। सद्यो जातन्तु पीत्वा तं त्र्यहाच्छुद्धो द्विजोत्तमः। एवं मद्यादिचतुष्टयं यक्षरक्षःपिशाचसम्बन्धमन्नञ्च ब्राह्मणेन देवानां हविर्भक्षयता नाशितव्यम्। निषिद्धायाः सुराया इहोपादानं यक्षरक्षःपिशाचान्नतया निन्दार्थम्। अत्र केचिद्देवानामश्नता हविरिति पुंलिङ्गनिर्देशाद्ब्राह्मणस्य पुंस एव मद्यप्रतिषेधो न स्त्रिया इत्याहुः तदसत्। पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्। इहैव सा शुनी गृध्री शूकरी चोपजायते। इति याज्ञवल्क्यादिस्मृतिविरोधात् ॥ ९५ ॥

अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत्।
अकार्य्यमन्यत्कुर्य्याद्वा ब्राह्मणो मदमोहितः॥ ९६॥

अमेध्यइति। ब्राह्मणो मद्यपानमदमूढबुद्धिः सन् अशुचौ वा पतेत् वेदवाक्यं वा उच्चारयेत् अन्यदकार्य्यं वा कुर्य्यात्। अतश्च न मद्यपानं न कार्य्यमिति पूर्व्वस्यैवानुवादः॥ ९६॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्। तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति॥ ९७॥

यस्येति। यस्य ब्राह्मणस्य कायगतं ब्रह्म वेदः संस्काररूपेणावस्थितः एकदेशत्वात् एकवारमपि मद्येनाप्लाव्यते तथा चैकवारमपि यो ब्राह्मणो मद्यम्पिबति तस्य ब्राह्मण्यं व्यपैति शूद्रत्वं च प्राप्नोति तस्मान्मद्यं सर्व्वथैव न पातव्यम् अयमपि पूर्व्वानुवादः॥ ९७॥

एषा विचित्राभिहिता सुरापानस्य निष्कृतिः।
अतऊर्द्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिं॥ ९८॥

एषेति। इदं सुरापानजनितपापस्य नानाप्रकारं प्रायश्चित्तमभिहितमतऊर्द्ध्वं सुवर्णहरणपापस्य निष्कृतिं वक्ष्यामि॥ ९८॥

कृतवापनो निवसेद्ग्रामान्ते गोव्रजेऽपि वा।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः॥ ७८॥

कृतेति। इदानीं समाप्ते द्वादशे वर्षे इत्युपसंहारात् द्वादशवार्षिकस्य विशेषमाह। मुण्डितकेशश्मश्रुर्गोब्राह्मणहिते रतः गोब्राह्मणोपकारं कुर्वन् ग्रामसमीपे गोष्ठपुण्यदेशवृक्षमूलान्यतमे निवसेत् वने कुटीं कृत्वेत्यस्य विकल्पार्थमिदम्॥ ७८॥

ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजन्।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च॥ ७९॥

ब्राह्मणार्थ इति। असमाप्ते द्वादशवार्षिकेऽन्तराग्न्युदकादिसङ्कटाद्ब्राह्मणस्य गोर्वा परित्राणार्थं प्राणान्परित्यजन् ब्रह्महत्यया मुच्यते। गां ब्राह्मणं वा ततः परित्राय मृतोऽपि असमाप्तद्वादशवर्षोऽपि मुच्यते॥ ७९॥

त्र्यवरम्प्रतियोद्धा वा सर्व्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते॥ ८०॥

त्र्यवरमिति। चौरादिभिर्ब्राह्मणसर्व्वस्वेऽपह्रियमाणे तदानयनार्थं निर्व्याजं यथाशक्ति प्रयत्नं कुर्व्वन् त्रिवारान् युद्धे प्रवर्त्तमानो नाजितेऽपि सर्व्वस्वे ब्रह्महत्यापापात् प्रमुच्यते। अथ च

प्रथमवारद्वय विप्रसर्वस्वं अपहृतं जित्वा अर्पयति तथापि मुच्यते। यद्वा। धनापहारकद्वेषात्तेनैव ब्राह्मणो बहुभिः मरणे प्रवर्त्तते तदा धनापहृतसमधनदानेन तं जीवयति तदापि तन्निमित्ते तस्य प्राणलाभे ब्रह्महत्यापापान्मुच्यते। एतदितर प्रकारान्तरेण तु रक्षणे गोप्ता गोब्राह्मणस्य चेत्यपुनरुक्तिः ॥ ८० ॥

एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः। समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति॥ ८१॥

एवमिति। एवमुक्तप्रकारेण सर्वदा नियमोपचितः स्त्रीसंभोगादिशून्यः संयतमनाः समाप्ते द्वादशे वर्षे ब्रह्महत्यापापं क्षपयति। एवं ब्रह्मचर्यरक्षादिधर्मं प्रकाशद्वादशवार्षिकस्य शेषत्वम्॥ ८१॥

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे। स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते॥ ८२॥

शिष्ट्वेति। अश्वमेधे ब्राह्मणानामृत्विजां क्षत्रियस्य यजमानस्य समागमे ब्रह्महत्यापापं शिष्ट्वा निवेद्य अवभृथस्नातो ब्रह्महत्यापापान्मुच्यते द्वादशवार्षिकशेषभूतत्वात् ज्ञातमन्येनेदं प्रायश्चित्तमाह भविष्यपुराणे। यदा तु गुणवान्

विप्रो हन्यात् विप्रस्तु निर्गुणं। अकामतस्तदा गच्छेत्ताभ्यासमश्वमेधिकं। गोविप्रहराजन्यस्तु अश्वमेधविवर्जितयक्षप्रायश्चित्तशेषं तां अस्य प्रकान्तद्वादशवार्षिकप्रायश्चित्तस्यान्तराऽवभृथस्नाने तेनैव शुद्धिरित्याह। तदनुक्तमविष्यपुराणवचनविरोधात्॥ ८२॥

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते। तस्मात्समागमे तेषामेनो विख्याप्य शुध्यति॥ ८३॥

धर्मेति। यस्माद्ब्राह्मणो धर्मस्य कारणं ब्राह्मणेन धर्मोपदेशे कृते धर्मानुष्ठानात् राजा तस्याग्रं प्राप्तं मन्वादिभिरुच्यते ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्मतरुनिष्पत्तिः तस्मात्तेषां समागमे अश्वमेधे पापं निवेद्यावभृथस्नातः शुध्यतीति अश्वमेधशेषः॥ ८३॥

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम्। प्रमाणं चैव लोकस्य ब्रह्मात्रैव हि कारणम्॥ ८४॥

ब्राह्मण इति। ब्राह्मण उत्पत्तिमात्रेणैव किम्पुनः श्रुतादिभिर्देवानामपि पूज्यः सुतरां मनुष्याणां लोकस्य च प्रत्यक्षवत् प्रमाणकः तदुपदेशस्य प्रामाण्यात् यस्मात्तत्र वेद एव कारणं वेदे मूलत्वादुपदेशस्य॥ ८४॥

ब्राह्मणान् वा बहून् गुह । निहत्य युगपद्वीर एकं प्राणान्तिकञ्चरेत्। एतच्चाज्ञानविषयं। तथा च अकामतो ब्रह्म हन्यात् ब्राह्मणान् ब्राह्मणो गुह। चरेद्वने तथाघोरे यावत्प्राण परिक्षयम्। एतच्च प्रकृतत्वायुगपन्मारणविषयं क्रममारणे तु विधिः प्राथमिकाद्दृत्त्यादित्याद्दृत्तिविधायकं वेदवचनं बोद्धव्यं ॥ ८६ ॥

हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्। राजन्य वैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥ ८७ ॥

हत्वेति। प्रकृतत्वाद्ब्राह्मणगर्भविषयं स्त्रीपुन्नपुंसकत्वेना विज्ञातं क्षत्रियं वैश्यञ्च यागप्रवृत्तं हत्वा आत्रेयीञ्च स्त्रियं ब्राह्मणीं। आत्रेयीञ्च ब्राह्मणीमिति यमस्मरणात् हत्वा ब्रह्महत्या प्रायश्चित्तं कुर्य्यात्। आत्रेयी च रजस्वला ऋतुस्नातोच्यते रजस्वलां ऋतुस्नातामात्रेयीमिति वशिष्ठस्मरणात्। एवञ्चान आत्रेयीब्राह्मणीवधे उपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रवध इति यत्तूत्तरश्लोके हत्वा च स्त्रीसुहृद्वधमिति तदाहिताग्निब्राह्मणस्य ब्राह्मणीभार्य्याविषयम्। तथाचाङ्गिराः। आहिताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च ॥ ८७ ॥

उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा। अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्॥८८॥

उक्त्वेति। चिरस्वाम्यादियुक्तसाक्ष्ये अनृतमुक्त्वा गुरोश्च मिथ्याभिशापमुत्पाद्य निक्षेपञ्च ब्राह्मणसुवर्णादन्यद्रजतादि द्रव्यं धनिकादेः सुवर्णमपि चापहृत्य स्त्रीवधं च तथा व्यापादितं कृत्वा मित्रं चाप्राप्तं हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात्॥८८॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥८९॥

इयमिति। एतत्तु प्रायश्चित्तं विशेषोपदेशप्रकारेण अकामतो ब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे नैव निष्कृतिः नैतत्प्रायश्चित्तं किन्त्वतो द्विगुणादिकरूपात्मकमिति प्रायश्चित्तगौरवार्थं नतु प्रायश्चित्ताभावार्थम्। कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः इति पूर्वोक्तविरोधात्॥८९॥

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः॥९०॥

सुरामिति। सुराशब्दः पैष्टीमात्रे मुख्यो न तु गौडीमाध्वी पैष्टीषु त्रितयानुगतैकरूपाभावात् प्रतीकस्य शक्तिकल्पने

शक्तिमद्यकपनागौरवप्रसङ्गात्। गौड्यादिमदिरासु मुख्यत्वेऽपि सुराशब्दप्रयोगोपपत्तेः। अत एव भविष्यपुराणे। सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे यमे। पैष्ट्याः पाने तु पीतायां प्रायश्चित्तं निबोध मे। मनुनोक्तं महाबाहो यथाध्याययोगतः। एतावानिति निर्द्धारणे षष्ठी एतासां गौडीमाध्वीपैष्टीनामुक्तानां मध्ये पैष्टीपाने मनूक्तं प्रायश्चित्तं सुरां पीत्वा द्विजो मोहादितीत्यर्थः। मुख्यां सुरां पैष्टीं रागादिव्यामूढतया द्विजो ब्राह्मणः क्षत्रियो वैश्यश्च पीत्वा अग्निवर्णां सुरां पिबेत् तया सुरया शरीरे निर्दग्धे सति तस्मात्पापान्मुच्यते। एतच्च बुद्धिपूर्वकामकारकृतसुरापानविषयम्। तथा च वृद्ध स्मृतिः। सुरापाने कामकृते ज्वलन्तीं तां विनिःक्षिपेत्। मुखे तया स निर्दग्धो मृतः शुद्धिमवाप्नुयात्॥ ९०॥

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा। पयो घृतं वा मरणाद्गोशकृद्रसमेव वा॥ ९१॥

गोमूत्रमिति। गोमूत्रजलगोक्षीरगव्यघृतगोमयरसानामन्यतममग्निस्पर्शं कृत्वा यावन्मरणं पिबेत्॥ ९१॥

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी॥ ९२॥

कणान्वेति। अथवा गोरोमादिकृतवासा जटावान् सुरा

मुख्या सुरा पूर्ब्बवाक्यनिषिद्धत्वात् त्रैवर्णिकस्यापेयत्वाथा तथा सर्व्वा गौडी माध्वी च द्विजोत्तमैर्न पातव्या ॥ ९४ ॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यन्देवानामश्नता हविः ॥ ९५ ॥

यक्षेति । मद्यमत्रनिषिद्धपैष्टीगौडीमाध्वीव्यतिरिक्तं नव विधम्बोद्धव्यं तदाह पुलस्त्यः । पानसद्राक्षमाधूकं खार्जूरन्तालमैक्षवम् । माध्वीकं टाङ्कमार्द्वीकमैरेयन्नारिकेलजम् । सामान्यानि द्विजातीनां मद्यान्येकादशैव च । द्वादशन्तु सुरा मद्यं सर्व्वेषामधमं स्मृतम् । मांसञ्च प्रतिषिद्धं सुरा च पिष्टकारा प्रोक्ता । अश्नुयतइति आसवो मद्यानामवस्थाविशेषः सद्यः कृतसंधानः सञ्जातमद्यभावः । यमधिकृत्य इदं पुलस्त्यो क्तप्रायश्चित्तम् । द्राक्षेक्षुटंकखर्जूरपनसादेश्च योरसः । सद्यो जातन्तु पीत्वा तं त्र्यहाच्छुद्ध्येद्द्विजोत्तमः । एवं मद्यादिचतुष्टयं यक्षरक्षःपिशाचसम्बन्धमन्नञ्च ब्राह्मणेन देवानां हविर्भक्षयता नाशितव्यम् । निषिद्धायाः सुराया इहोपादानं यक्षरक्षःपिशाचान्नतया निन्दार्थम् । अत्र केचिद्देवानामश्नता हविरिति पुंलिङ्गनिर्देशाद्ब्राह्मणस्य पुंस एव मद्यप्रतिषेधो न स्त्रिया इत्याहुः तदसत् । पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् । इहैव सा शुनी गृध्री शूकरी चोपजायते । इति याज्ञवल्क्यादिस्मृतिविरोधात् ॥ ९५ ॥

अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत्।
अकार्य्यमन्यत्कुर्य्याद्वा ब्राह्मणो मदमोहितः॥ ९६॥

अमेध्येति। ब्राह्मणो मद्यपानमदमूढबुद्धिः सन् अशुचौ वा पतेत् वेदवाक्यं वा उच्चारयेत् ब्रह्महत्याद्यकार्य्यं वा कुर्य्यात्। अतएव मद्यपानं न कार्य्यमिति पूर्व्वस्यैवानुवादः॥ ९६॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्। तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति॥ ९७॥

यस्येति। यस्य ब्राह्मणस्य कायगतं ब्रह्म वेदः यत्संस्कारदृढेवाधिष्ठितः एकदेशत्वात् एकवारमपि मद्येनाप्लाव्यते तथा एकवारमपि यो ब्राह्मणो मद्यम्पिबति तस्य ब्राह्मण्यं व्यपैति शूद्रत्वं स प्राप्नोति तस्मान्मद्यं वर्ज्जयेव न पातव्यम् अयमपि पूर्व्वानुवादः॥ ९७॥

एषा विचित्राभिहिता सुरापानस्य निष्कृतिः।
अत ऊर्द्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिं॥ ९८॥

एषेति। इदं सुरापानजनितपापस्य नानाप्रकारं प्रायश्चित्तमभिहितमतःपरमहं सुवर्णहरणपापस्य निष्कृतिं वक्ष्यामि॥ ९८॥

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु । स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥ ९९ ॥

सुवर्णेति । अपहृत्य सुवर्णन्तु ब्राह्मणस्य यतः स्वयमिति शातातपस्मरणात् । ब्राह्मणसुवर्णचौरो ब्राह्मणो राजानं गत्वा ब्राह्मणसुवर्णापहरणं स्वीयकर्म कथयन् ममनिग्रहं करोत्विति ब्रूयात् ब्राह्मणग्रहणं मनुष्यमात्रप्रदर्शनार्थम् । प्रायश्चित्ती भवेन्नर इति प्रकृतत्वात् क्षत्रियादीनाञ्च प्रायश्चित्तान्तराभिधानात् ॥ ९९ ॥

गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव तु ॥ १०० ॥

गृहीत्वेति । स्कन्धेनादाय मुसलमित्यादेरुक्तत्वात् तेनापि मुसलादिकं गृहीत्वा स्तेयकारिणं मनुष्यमेकवारं राजा स्वयं हन्यात् स च स्तेनो वधेन मुसलाभिघातेन हतो मुक्तोऽपि वा शुचिरिति याज्ञवल्क्यस्मरणात् । मृतो वा मृतकल्पो वा जीवन् तस्मात् पापान्मुच्यते । ब्राह्मणः पुनस्तपसैवेत्येवकार करणात् । तथा न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थित मित्यु क्तत्वाच्च तपसैव शुध्यति अतएव मन्वर्थव्याख्यानपरे भविष्य पुराणे । यदेतद्वचनं वीर ब्राह्मणस्तपसैव वा । तत्रैव कारणा

सुराधिप। तपस्वीत्यनेनैव प्रतिषेधो वधस्य तु। यागस्थस्य
क्षत्रियादीनामपि तपोविकल्पार्थः ब्राह्मणस्य तु तपस्येवेति
नियमो न तु ब्राह्मणस्यैव तपः अत एव भविष्यपुराणे। इतरेषा
मपि विप्रो तपो न प्रतिषिध्यत इति॥ १००॥

तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम्। चीर
वासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम्॥ १०१॥

तदेव तप आह तपसेति। तपसा सुवर्णस्तेय
जन्यं पापं द्विजो निर्हर्तुमिच्छन् अरण्यचरणात्प्राग्ब्रह्मघ्नस्य
ब्रह्महणि यदुक्तमुक्तं तत्कुर्यात् एतच्च द्वादशवार्षिकं क्षेत्र
गोरक्षाक्षत्रियादीनां मरणेन विकल्पितत्वाच्च ब्राह्मणस्य
भिन्नः सुवर्णापहरणे। पञ्चकृष्णलको माषस्तेसुवर्णस्तु षोड
शेति सुवर्णपरिमाणमुक्तमत्र ततो न्यूनस्य परिमाणापेक्षायां
मनूक्तपरिमाणस्य ग्रहीतुं न्याय्यत्वात्। अत्यधिकपरिमाणस्य
विष्णुपुराणे श्रूयते तत्तथाविधानुबन्धविशिष्टापहारे तथाविध
प्रायश्चित्तविषयमेव तथा च भविष्यपुराणे। क्षत्रियाद्यास्तथा
वर्णा निर्गुणा व्रततत्पराः। गुणाढ्यस्य तु विप्रस्य यदि निष्कान्
हरन्ति चेत्। निष्कानेकादश तथा दग्ध्वात्मानन्तु पावके।
शुध्येयुर्वर्णचाण्डोर चरेद्वा तत्समं द्वये॥ १०१॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। गुरुस्त्री
गमनीयन्तु व्रतैरेभिरपानुदेत्॥ १०२॥

एतैरिति। ब्राह्मणसुवर्णस्तेयजनितपापमेभिर्व्रतैर्द्विजो निर्हरेत् व्रततपसोर्द्वयोरुक्तत्वात् एतैरिति बहुवचनं समस्ताపेक्षया मनूक्तमपि प्रायश्चित्तं कल्पनीयमिति ज्ञापनार्थं। गुरुस्त्रीगमननिमित्तं पुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् ॥ १०२ ॥

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये। सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति ॥ १०३ ॥

गुर्विति। निषेकादीनि कर्माणीत्युक्तत्वात् गुरुः पिता तस्य भार्या गुरुतल्पं गुरुभार्या तद्गामी गुरुभार्यागमनपापं विख्याप्य लोहमये तप्तशयने स्वप्यात् लोहमयीं स्त्रीप्रतिकृतिं कृत्वा ज्वलन्तीमालिङ्ग्य मृत्युना स विशुद्धो भवति ॥ १०३ ॥

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ। नैर्ऋतीन्दिशमातिष्ठेदानिपातादजिह्मगः ॥ १०४ ॥

स्वयं वेति। आत्मनैव वा शिश्नवृषणौ छित्वा अञ्जलौ कृत्वा यावत् शरीरपातमवक्रगतिः सन् दक्षिणपश्चिमान्दिशं गच्छेत्। एतच्च उक्तप्रायश्चित्तद्वयं गुरुत्वात्सवर्णगुरुभार्यायां ज्ञानतो रेतोविसर्गपर्यन्तं मैथुनविषयम् ॥ १०४ ॥

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने।
प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः ॥१०५॥

खट्वाङ्गीति। खट्वाङ्गभृत् वल्कलवस्त्रो वाऽच्छिन्नकेशनखश्मश्रुधारी संयतमना निर्जने वने वर्षमेकं प्राजापत्यमनुचरेत्। एतच्च बुद्धिमात्रप्राप्तविप्रसुतादिभार्याविषयमेवाज्ञानविषयमेतद्द्वयम् ॥१०५॥

चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥१०६॥

चान्द्रायणमित्यादि। यद्वा गुरुभार्यागमनपापनिर्हरणाय संयतेन्द्रियः फलमूलादिना हविष्येण नीवारादिना कृतयवाग्वा वा त्रीन् मासान् चान्द्रायणान्याचरेत्। एतच्च पूर्वोक्तादपि लघुत्वात् यथाधीनसवर्णां वा गुरुभार्यां गच्छतो द्रष्टव्यम् ॥१०६॥

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम्। उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥१०७॥

एतैरित्यादि। एभिरुक्तव्रतैर्ब्रह्महत्यादिमहापातककारिणः पापं निर्हरेयुः। गोवधाद्युपपातककारिणः पुनर्वक्ष्यमाणप्रकारैर्नानाविधव्रतैः पापानि निर्हरेयुः ॥१०७॥

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्।
कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः ॥ १०८ ॥

चतुर्थकालमश्नीयादक्षारलवणं मितम्। गोमूत्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ १०९ ॥

दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत्।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥ ११० ॥

तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्।
आसीनासु तथासीनो नियतो वीतमत्सरः ॥ १११ ॥

आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः।
पतितां पङ्कलग्नां वा सर्व्वोपायैर्विमोचयेत् ॥ ११२ ॥

उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ ११३ ॥

आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले।
भक्षयन्तीं न कथयेत्पिबन्तञ्चैव वत्सकम् ॥ ११४ ॥

अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्म्मासैर्व्यपोहति ॥ ११५ ॥

उपेति। अनेन विधिना यस्त्विति यावत्कुलकं उपपातकयुक्तो गोघाती शिथिलयवागूरूपेण प्रथममासं यवान्पिबेत् सशिखं मुण्डितशिरा .नूनमस्नुः तेन हतगोचर्म्मणाच्छादितदेहो

मासत्रयमेव गोष्ठे वसेत् गोमूत्रेण चरेत्स्नानं संयतेन्द्रियः इति मासत्रयनिर्वर्त्तितं हविष्यमन्नमेकाहभुक्ता द्वितीयेऽह्नि चतुर्थं चोर्द्ध्वं द्वितीयतृतीयमासयोरश्नीयात् मासत्रयमेव दिवा प्रातस्ता गा अनुगच्छेत्तासाञ्च गवां खुरसम्पाताद्धूर्द्ध्वमुत्थितं रजस्तिष्ठन्नावाहयेत् कण्डूयनादिना ताः परिचर्य्य प्रणम्य च रात्रौ भित्त्यादिकमननुवेश्य उपविष्ट आसीत तथा मत्सरविगतक्रोधः उत्थितासु गोषु पश्चादुत्तिष्ठेत् वने च परिभ्रमन्तीषु पश्चात् परिभ्रमेत्। उपविष्टासु गोषूपविशेत् व्याधिताश्चौरव्याघ्रादिभयहेतुभिराक्रान्तां पतितां कर्द्दमलग्नां वा यथाशक्ति मोचयेत्। तथा उष्णे आदित्ये तपति मेघे च वर्षति शीते चोपस्थिते मारुते चात्यर्थं वाति गोश्च यथाशक्ति रक्षामकृत्वा आत्मनस्त्राणं न कुर्य्यात्तथा आत्मनोऽन्येषां वा गेहे क्षेत्रे खले च सस्यादिभक्षणं कुर्व्वन्तीं वत्सञ्च क्षीरम्पिबन्तन्न कथयेत्। अनेनोक्तविधानेन यो गोघ्नो गाः परिचरति स गोवधजनितपापं त्रिभिर्मासैरपनुदति॥१०८॥॥१०९॥॥११०॥॥१११॥॥११२॥॥११३॥॥११४॥॥११५॥

**वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः। अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत्॥११६॥**

वृषभेति। वृष एकादशो यासां ताः सम्यगनुष्ठितप्रायश्चित्तो दद्यात्। अविद्यमाने तावति धने सर्व्वस्वं वेदज्ञेभ्यो ब्राह्मणेभ्यो दद्यात्॥११६॥

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः। अवकीर्णिवर्ज्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥११७॥

एतदेवेति। अपरे तूपपातकिनो वक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थमेतदेव गोवधप्रायश्चित्तं चान्द्रायणं वा कुर्य्युः चान्द्रायणन्तु लघुत्वात् लघून्युपपातके जातिशक्तिगुणाद्यपेक्षं वा योजनीयम् ॥११७॥

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे। पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥११८॥

अवकीर्णीति। अवकीर्णी वक्ष्यमाणः काणेन गर्दभेन रात्रौ चतुष्पथे पाकयज्ञेन मन्त्रेण निर्ऋत्याख्यां देवतां यजेत् ॥११८॥

हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा। वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥११९॥

हुत्वेति। ततो निर्ऋत्यै गर्दभरूपादिहोमान् यथावचनं कृत्वा तदन्ते समासिञ्चन्तु मारुत इत्येतया ऋचा मारुतेन्द्रबृहस्पत्यग्नीनां घृतेनाहुतीर्जुहुयात् ॥११९॥

कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥ १२० ॥

अप्रसिद्धत्वादवकीर्णि लक्षणमाह कामत इति । इच्छातो द्विजः अवकीर्णी भवेद्व्रती ब्रह्मचारी तु योषितमिति वचनात् स्त्रीयोनौ शुक्रोत्सर्गो ब्रह्मचर्यव्रतातिक्रममवकीर्णरूपं धर्मज्ञा वेदविदः प्राहुः ॥ १२० ॥

मारुतं पुरुहूतञ्च गुरुं पावकमेव च । चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः ॥ १२१ ॥

मारुतमिति । ब्रह्मचारिणो वेदाध्ययननियमानुष्ठानजन्यतेजः तदवकीर्णिनः सतो मरुदिन्द्रगुरुवह्नीन् चतुरः संक्रामति व्रतस्य चाध्यावतीर्णं स्यात्तस्याध्यावृत्तेरयमनुवादः ॥ १२१ ॥

एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् । सप्तागारांश्चरेद्भैक्षं स्वकर्म परिकीर्त्तयन् ॥ १२२ ॥

एतस्मिन्निति । एतस्मिन्नवकीर्णाख्ये पापे जाते पूर्वोक्तं गर्दभ पश्वादि कृत्वा गर्दभचर्मपरिधायेति हारीतवचनात् गर्दभचर्मप्रावृतोऽवकीर्णी भवामीति स्वकर्मख्यापनं कुर्वन् सप्त गृहाणि भैक्षं चरेत् तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकमिति ॥ १२२ ॥

तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकम् । उपस्पृशंस्त्रिषवणं त्वब्देन स विशुद्ध्यति ॥ १२३ ॥

तेभ्य इति । तेभ्यः सप्तगृहेभ्यो लब्धेन भैक्षेण एककालमाहारं कुर्व्वन् सायंप्रातर्मध्यन्दिनेषु च स्नानमाचरन् अवकीर्णी संवत्सरेणैव विशुद्ध्यति ॥ १२३ ॥

जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ १२४ ॥

जातीति । ब्राह्मणस्य रुजः कृत्वेत्यादिजातिभ्रंशकराणां तन्मध्यादन्यतमं कर्म्मविशेषं इच्छातः कृत्वा वक्ष्यमाणं सान्तपनं सप्ताहसाध्यं कुर्य्यात् अनिच्छातः पुनः कृत्वा प्राजापत्यं वक्ष्यमाणमाचरेत् ॥ १२४ ॥

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् । मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ १२५ ॥

सङ्करेति । खराश्वोष्ट्रेत्यादिना सङ्करीकरणान्युक्तानि निन्दितेभ्यो धनादानमित्यादिना अपात्रीकरणान्युक्तानि तेषां मध्यादन्यतममिच्छातः कृत्वा चान्द्रायणं मासं शुद्धये कुर्यात् कृमिकीटवयो हत्येत्यादिना मलिनीकरणान्युक्तानि तन्मध्यादेकमिच्छातः कृत्वा त्रिरात्रं यवागूं क्वथितामश्नीयात् ॥ १२५ ॥

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः॥१२६॥

तुरीय इति। ब्रह्महत्यातुरीयो भागः त्रैवार्षिकरूपः द्वादशवार्षिकस्य चतुर्थो भागः एतच्च प्रायश्चित्तं क्षत्रियविट्शूद्रवधइति उपपातकमध्येऽपदिष्टस्येमाधिकापेक्षया गुरुत्वात् वृत्तस्थक्षत्रियस्य कामतो वधे द्रष्टव्यं वैश्ये चाध्याचारे कामतो हते अष्टमोभागः सार्द्धवार्षिकं व्रतं शूद्रे वृत्तस्थे कामतो हते षोडशोभागो नवमासिकम् द्रष्टव्यं॥१२६॥

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः॥१२७॥

अकामत इति। अबुद्धिपूर्वकमुत्तः क्षत्रियं निहत्य ऋषभेणैकेनाधिकं सहस्रं गावां गवां ता व्रतसमाप्त्यर्थं ब्राह्मणेभ्यो दद्यात्॥१२७॥

त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्।
वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः॥१२८॥

त्र्यब्दमिति। यद्वा संयतो जटावान् ग्रामाद्विप्रकृष्टवृक्षमूलकृतनिवासो ब्रह्मघ्नं चतुर्थं व्रतं ब्रह्महा द्वादश समा इत्यादि

त्रैवर्षिकं कुर्यात् न तु तुरीयो ब्रह्महत्याया इत्यनेन पुनरुक्ति र्यान्ध्या कुटी दूरतरे ग्रामात् वृक्षमूलनिकेतन इत्येतदस्मात् व्यतिरिक्तमवशिरोऽवधारणादिसकलधर्मनिवृत्त्यर्थत्वादस्य अकामाधिकाराच्च इदमकामतः अतएवाङ्गिरसापवादुक्तम् ॥१२८॥

एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः। प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥१२९॥

एतदिति। एतदेव द्वादशवार्षिकव्रतमकामतः स्वाध्याचारं वैश्यं निहत्य वर्षमेकं ब्राह्मणः कुर्यात् एकाधिकं वा गोशतं दद्यात्॥१२९॥

एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत्। वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः॥१३०॥

एतदिति। एतदप्यकामतः इदमेव व्रतं शूद्रहा षण्मासाञ्चरेत् वृषभ एकादशो यासां गवां ताः शुक्लवर्णा दश ब्राह्मणाय दद्यात्॥१३०॥

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च। श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्॥१३१॥

मार्जारेति। बिडालनकुलचाषभेककुक्कुरगोधापेचककाका नामेकैकं हत्वा शूद्रहत्याव्रतं शूद्रविट्क्षत्रवधस्तूपपातक

तित्तिरि पक्षिणि हते चतुराढकपरिमाणं तिलद्रोणं दद्यात्। शुके पक्षिणि द्विवर्षं वत्सं क्रौञ्चाख्यपक्षिणं हत्वा त्रिवर्षं वत्सं ब्राह्मणाय दद्यात् ॥ १२४ ॥

हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च। वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ १२५ ॥

हत्वेति। हंसबलाकाबकमयूरवानरश्येनभासाख्यानामन्यतमं हत्वा ब्राह्मणाय गान्दद्यात् ॥ १२५ ॥

वासो दद्याद्धयं हत्वा पञ्च नीलान्वृषान् गजम्। अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥ १२६ ॥

वास इति। अश्वं हत्वा वस्त्रं दद्यात् हस्तिनं हत्वा पञ्च नीलान् वृषभान् दद्यात्प्रत्येकं छागमेषौ हत्वा वृषभन्दद्यात् गर्दभं हत्वा एकवर्षं वत्सं दद्यात् ॥ १२६ ॥

क्रव्यादांस्तु मृगान् हत्वा धेनुन्दद्यात्पयस्विनीम्। अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥ १२७ ॥

क्रव्यादानिति। आममांसभक्षिणो मृगान् व्याघ्रादीन् हत्वा बहुक्षीरां धेनुन्दद्यात् अमांसभक्षकान् हरिणादीन् हत्वा प्रौढवत्सिकां दद्यात् उष्ट्रं हत्वा सुवर्णरक्तिकान्दद्यात् ॥ १२७ ॥

किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे। अन
स्थ्नाञ्चैव हिंसायां प्राणायामेन शुध्यति ॥ १४१ ॥

किञ्चिदिति। अस्थिमतां क्षुद्रजन्तूनां कृकलासादीनामस्थे
कमधे किञ्चिदेव दद्यात्। अस्थिमतां वधे पणो देय इतिसुमन्तु
स्मरणात्किञ्चिदेवेति पणो बोद्धव्यः अनस्थिमतान्तु यूकाम
त्कुणादीनामनेकवधे प्राणायामेन शुद्धो भवति प्राणाया
मश्च सव्याहृतिकां सप्रणवां सावित्रीं शिरसा सह। त्रिः पठे
दायतप्राणः प्राणायामः स उच्यते इतिवशिष्ठप्रोक्तलक्षणो
ग्राह्यः ॥ १४१ ॥

फलदानान्तु वृक्षाणाञ्छेदने जप्यमृक्शतं।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधां ॥ १४२ ॥

फलेति। फलदानामाम्रादीनां वृक्षाणां गुल्मानां कुब्ज
कादीनां वल्लीनां गुडूच्यादीनां लतानां वृक्षशाखासक्तानां
पुष्पितानाञ्च वीरुधां कूष्माण्डादीनामत्येकच्छेदने पापप्रमो
चनार्थं साविन्न्यादिऋक्शतं जपनीयं इन्धनार्थमशुष्काणां
द्रुमाणामवपातनमित्यादेरुपपातकमध्ये पठितस्य गुरुप्रायश्चि
त्ताभिधानात् इदम्फलवद्वृक्षादिछेदने लघुप्रायश्चित्तं सकृद
बुद्धिपूर्वकविषयं वेदितव्यम् ॥ १४२ ॥

अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः ।
फलपुष्पोद्भवानां च घृतप्राशो विशोधनं ॥ १४३ ॥

अन्नाद्येति । अन्नादिषु जातानां गुडादिरसजातानां च उदुम्बरादिफलजन्मनां मधूकादिपुष्पोद्भवानां च सर्वप्राणिनां वधे घृतप्राशनमपशोधनम् ॥ १४३ ॥

कृष्टजानामोषधीनां जातानां च स्वयं वने ।
वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः ॥ १४४ ॥

कृष्टेति । कर्षणपूर्वकजातानामोषधीनां व्रीह्यादीनां वने च स्वयमुत्पन्नानां नीवारादीनां निष्प्रयोजनच्छेदने क्षीराहार एकमहो गोरनुगमनं कुर्यात् ॥ १४४ ॥

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् । ज्ञाना ज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे ॥ १४५ ॥

एतैरिति । एभिर्व्रतप्रायश्चित्तैर्हिंसाजनितपापं ज्ञाना ज्ञानकृतं निर्हरणीयं इदानीमभक्ष्यभक्षणप्रायश्चित्तं वक्ष्यमाणं शृणुत ॥ १४५ ॥

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
मतिपूर्वमनिर्देश्यम्प्राणान्तिकमिति स्थितिः॥ १४६॥

अज्ञानादिति। महापातकप्रकरणवधाभेनाम्नानात् नेदं मुख्यपैष्टीसुराविषयं वचनम्। किन्तु तदितरविषयं तच यथा चैका तथा सर्वा गौडीमाध्व्योर्मुख्यसुरातस्ताम्येवमित रमद्यापेक्षया प्रायश्चित्तगौरवार्थमित्युक्तं। तेन बुद्धिपूर्वकं गौडीं माध्वीं वा पीत्वा प्राजापत्यकृच्छ्रं कृत्वा पुनः संस्कारेणैव शुध्यति। तथाच गौतमः। अमत्या मद्यपाने पयोघृतमुदकं वायुमतिप्रच्छं तप्तकृच्छ्रः ततोऽस्य संस्कारः। एतमेव व्याख्यातं भविष्यपुराणे। अकामतः कृते पाने गौडी माध्व्योर्नराधिप। तप्तकृच्छ्रविधानं स्यात् गौतमेन यथोदितम्। बुद्धिपूर्वकन्तु पैष्टीतरमद्यपाने प्राणान्तिकं अनिर्देश्यमिति शास्त्रमर्य्यादा। तथा गौडीमाध्व्योर्ज्ञानात्पाने मरणनिषेधादितरमद्यापेक्षया गुरुत्वाच्च मानवमेव कृच्छ्रम् वा भवेदब्दमिति प्रायश्चित्तमुक्तं अतएव गौडीमाध्व्योः कामतः पानानुवृत्तौ भविष्यपुराणे। यद्वाऽस्मिन्नेव विषये ब्राह्मणीषं प्रकल्पयेत्। कणान्वा भक्षयेदब्दम्पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजीति पैष्टीगौडीमाध्वी व्यतिरिक्तपुलस्त्योक्त पानसादिमद्यविधमद्यस्य प्रत्येकपाने लघु मात्रांसंस्कारमात्रमेव केवलं अन्यदा लघुप्रायश्चित्तं ब्राह्मणस्य

पुनः। बुद्धिपूर्वं पानद्वादिमद्यपाने तु। मतिपूर्वं सुरापाने कर्तव्ये प्राणान्तो मुख्यः। अज्ञानकृते भवतः पुनः संस्कार इव होतीतिभविष्यपुराणीयमन्वादा एवंविधं मुख्यन्तरेणाह पुनः ॥१४६॥

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः ॥१४७॥

अप इति। पैष्टीसुराभाण्डे तदितरमद्यभाण्डे वा ऽवस्थिता अपः सुरारसमद्यवर्जिताः पीत्वा शङ्खपुष्प्याख्यौषधिप्रक्षेपेण पक्वं क्षीरमश्नुयात् शङ्खपुष्पीविपक्वेन स्यात् क्षीरेण वर्तयेदिति बौधायनस्मरणात्। पञ्चरात्रं पिबेत् सुरामद्ययोः सर्वत्रैव गुरुलघु प्रायश्चित्ताभिधानात् इहापि ज्ञानाज्ञानादिप्रकार भेदेन विषयसमीकरणं समाधेयं। वाचनिकमेव प्रायश्चित्तं साम्यमिति मेधातिथिराह ॥१४७॥

स्पृष्ट्वा दत्त्वा च मदिरां विधिवत्प्रतिगृह्य च ।
शूद्रोच्छिष्टाश्च पीत्वापः कुशवारि पिबेत् त्र्यहं॥१४८॥

स्पृष्टेति। सुरां स्पृष्ट्वा दत्त्वा च स्वस्तिवचनपूर्वकञ्च प्रतिगृह्य शूद्रोच्छिष्टाश्च अपः पीत्वा प्रतिग्रहेत्युपादानात्। ब्राह्मणो दर्भक्वथितमुदकं त्र्यहं पिबेत्॥१४८॥

आघ्राणन्तु सुरापस्य गन्धमाघ्राय सोमपः । प्राणा
नप्सु त्रिरायम्य घृतम्प्राश्य विशुध्यति ॥ १४९ ॥

ब्राह्मणस्त्वित्यादि । ब्राह्मणः पुनः कृतसोमयागः सुरा
पस्य मुखसम्बन्धिनं गन्धं घ्रात्वा जलमध्ये प्राणायामत्रयं कृत्वा
घृतं प्राश्य विशुद्धो भवति ॥ १४९ ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १५० ॥

अज्ञानादिति । विड्वराहादीनां वक्ष्यमाणत्वात् अबुद्धि
पूर्वकं मनुष्यसम्बन्धि मूत्रं पुरीषं वा प्राश्य सुरासंसृष्टस्य
भक्तादिरसं वा प्राश्य द्विजातयस्त्रयो वर्णाः पुनरुपनयनम
र्हन्ति ॥ १५० ॥

वपनं मेखलादण्डो भैक्ष्यचर्य्याव्रतानि च ।
निवर्त्तन्ते द्विजातीनाम्पुनः संस्कारकर्म्मणि ॥ १५१ ॥

वपनमिति । शिरो मुण्डनं मेखलाधारणं दण्डधारणं
भैक्षाणि व्रतानि च मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तार्थं पुन
रुपनयने द्विजातीनाञ्च भवन्ति ॥ १५१ ॥

अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान्पिबेत्॥१५२॥

अभोज्यानामिति। अभोज्यान्नाश्चोपदिष्टाने यत्ने इत्या युक्तानामन्नमभुक्त्वा अज्ञाननिमित्तमनुरूपेण यवागूरूपेण वा यवान् पानयोग्यान् कृत्वा सप्तरात्रं पिबेत्। अबुद्धिपूर्वविषये मत्या भुक्त्वा चरेत्कृच्छ्रमिति चतुर्थाध्याये प्रायश्चित्तमुक्तं तेन सह वैकल्पिकं विकल्पश्च कर्तृशक्त्यपेक्षः तथा द्विजातिस्त्रीणामुच्छिष्टं शूद्रोच्छिष्टं वा भुक्त्वा एतदेव कुर्यात्तथा क्रव्याद सूकरोष्ट्राणामित्यादिना यद्विशेषप्रायश्चित्तं तद्विनिषिद्धमांसं भुक्त्वा इदमेव कुर्यात्॥१५२॥

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः।
तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः॥१५३॥

शुक्तानीति। यानि स्वभावतो मधुरादिरसानि कालयोगेनोदकवासादिनाऽम्लभावं भजन्ति तानि शुक्तानि कषायान् विभीतकादीन् कथितानि चाप्रतिषिद्धान्यपि पीत्वा यावच्च जीर्णानि भवन्ति तावदशुचिः पुरुषो भवति॥१५३॥

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणञ्चरेत्॥१५४॥

विड्वराहेति। ग्राम्यसूकरखरोष्ट्रगोमायुवानरकाकानां

मूत्रपुरीषं वा द्विजातिर्भुक्त्वा चान्द्रायणं कुर्य्यात् यत्तु ष्चाकं विड्वराहञ्चेत्यनेन । विड्वराहग्रामकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये प्रायश्चित्तमुक्तं तदभ्यासविषये व्याख्यातं इदन्त्वनभ्यासविषये इत्यविरोधः ॥ १५४ ॥

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च।
अज्ञातञ्चैव सूनास्थमेतदेव व्रतञ्चरेत् ॥ १५५ ॥

शुष्काणीति। वाय्वादिना शोषितानि मांसानि भुक्त्वा भूम्यादिप्रभवाणि छत्राकाणि भुक्त्वा भूमिजं वा वृक्षजं वा छत्राकं भक्षयन्ति ये । म्लेच्छान् विजानीयात् इतिवचनेन तत्र सर्व्वस्यापि निषेधात्। हरिणमांसमुत रासभमांसमिति भक्ष्याभक्ष्यतया यन्न ज्ञातं तथा हिंसास्थानं सूना ततो यदानीतं तद्भुक्त्वा चान्द्रायणमेव कुर्य्यात् ॥ १५५ ॥

क्रव्यादशूकरोष्ट्राणां कुक्कुटानाञ्च भक्षणे।
नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम् ॥ १५६ ॥

क्रव्यादेति। आममांसभक्षिणां ग्राम्यशूकरोष्ट्रग्राम्यकुक्कुटानां तथा मानुषकाकगर्द्दभानां प्रत्येकं बुद्धिपूर्व्वकं मांसभक्षणे वक्ष्यमाणं तप्तकृच्छ्रप्रायश्चित्तम् ग्राम्यशूकरकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये पातित्यमुक्तं तदभ्यासविषये व्याख्यातं इदन्तु नाभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ॥ १५६ ॥

मासिकान्नं तु योऽश्नीयादसमावर्त्तको द्विजः।
स त्रीण्यहान्युपवसेदेकाहं चोदके वसेत्॥ १५७ ॥

मासिकान्नमिति। यो ब्रह्मचारी ब्राह्मणो मासिकश्राद्ध समन्नमश्नाति एतच्च सपिण्डीकरणात्पूर्वं एकोद्दिष्टश्राद्धोपलक्षणं स त्रिरात्रमुपवसेत्। त्रिरात्रमध्य एकस्मिन्नहनि जलमावसेत्॥ १५७ ॥

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं कथंचन। स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत्॥ १५८॥

ब्रह्मचारीति। यो ब्रह्मचारी माक्षिकं मांसं वा अनिच्छातः आपदि वाऽश्नात् स प्राजापत्यं कृत्वा प्रारब्धब्रह्मचर्यव्रतशेषं समापयेत्।॥ १५८॥

बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नं च पिबेद्ब्रह्मसुवर्चलाम्॥ १५९॥

बिडालेति। बिडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टं केशकीटरूपसंसर्गदुष्टं वा अज्ञानतस्तत्रैव पिपीलिकादिकं ज्ञात्वा भुक्त्वा ब्रह्मसुवर्चलाक्वथितमुदकं पिबेत्॥ १५९॥

तित्तिरिपक्षिणं हत्वा चतुराढकपरिमाणं तिलद्रोणं दद्यात्। शुके हते द्विवर्षं वत्सं क्रौञ्चपक्षिणं हत्वा त्रिवर्षं वत्सं ब्राह्मणाय दद्यात् ॥ १२४ ॥

हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च। वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ १२५ ॥

हत्वेति। हंसबलाकाबकमयूरवानरश्येनभासानामन्यतमं हत्वा ब्राह्मणाय गान्दद्यात् ॥ १२५ ॥

वासो दद्याद्धयं हत्वा पञ्च नीलान्वृषान् गजम्। अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥ १२६ ॥

वास इति। अश्वं हत्वा वस्त्रं दद्यात् हस्तिनं हत्वा पञ्च नीलान् वृषभान् दद्यात् अजमेकं छागमेषौ हत्वा वृषभन्दद्यात् गर्दभं हत्वा एकवर्षं वत्सं दद्यात् ॥ १२६ ॥

क्रव्यादांस्तु मृगान् हत्वा धेनुन्दद्यात्पयस्विनीं। अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलं ॥ १२७ ॥

क्रव्यादानिति। आममांसभक्षिणो मृगान् व्याघ्रादीन् हत्वा बहुक्षीरां धेनुन्दद्यात् अमांसभक्षकान् हरिणादीन् हत्वा श्रेष्ठवत्सिकां दद्यात् उष्ट्रं हत्वा सुवर्णरक्तिकान्दद्यात् ॥ १२७ ॥

किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे। अन
स्थ्नाञ्चैव हिंसायां प्राणायामेन शुध्यति ॥ १४१ ॥

किञ्चिदिति। अस्थिमतां क्षुद्रजन्तूनां कृकलासादीनामन्ये
कवधे किञ्चिदेव दद्यात्। अस्थिमतां वधे पणो देय इति सुमन्तु
स्मरणात्किञ्चिदेवेति पणो बोद्धव्यः अनस्थिमतान्तु यूकाम
त्कुणादीनामनेकवधे प्राणायामेन शुद्धो भवति प्राणाया
मश्च सव्याहृतिकां सप्रणवां सावित्रीं शिरसा सह। त्रिः पठे
दायतप्राणः प्राणायामः स उच्यते इति वशिष्ठप्रोक्तलक्षणो
ग्राह्यः ॥ १४१ ॥

फलदानान्तु वृक्षाणाञ्छेदने जप्यमृक्शतं।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधां ॥ १४२ ॥

फलेति। फलदानामाम्रादीनां वृक्षाणां गुल्मानां कुब्ज
कादीनां वल्लीनां गुडूच्यादीनां लतानां द्राक्षाप्रभृतीनां
पुष्पितानाञ्च वीरुधां कूष्माण्डादीनामन्येकच्छेदने पापशो
धनार्थं सावित्र्यादिऋक्शतं जपनीयं इन्धनार्थमशुष्काणां
द्रुमाणामवपातनमित्यादेरुपपातकमध्ये पठितस्य गुरुप्रायश्चि
त्ताभिधानात् इदम्फलवद्वृक्षादिच्छेदने लघुप्रायश्चित्तं सकृद
बुद्धिपूर्व्वकविषयं वेदितव्यम् ॥ १४२ ॥

अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः।
फलपुष्पोद्भवानां च घृतप्राशो विशोधनम्॥ १४३॥

अन्नाद्येति। अन्नादिषु जातानां गुडादिरसजातानां च उदुम्बरादिफलभवानां मधूकादिपुष्पोद्भवानां च सर्वप्राणिनां वधे घृतप्राशनमात्रं शोधनम्॥ १४३॥

कृष्टजानामोषधीनां जातानां च स्वयं वने।
वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः॥ १४४॥

कृष्टेति। कर्षणपूर्वकजातानामोषधीनां व्रीहिकादीनां वने च स्वयमुत्पन्नानां नीवारादीनां निष्प्रयोजनच्छेदने क्षीराहार एकमहो गोरनुगमनं कुर्यात्॥ १४४॥

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्। ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे॥ १४५॥

एतैरिति। एभिर्व्रतप्रायश्चित्तैर्हिंसाजनितपापं ज्ञानाज्ञानकृतं निर्हरणीयं इदानीमभक्ष्यभक्षणप्रायश्चित्तं वक्ष्यामि शृणुत॥ १४५॥

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति।
मतिपूर्व्वमनिर्देश्यम्प्राणान्तिकमिति स्थितिः॥ १४६॥

अज्ञानादिति। महापातकप्रकरणपठनाभावाच्चानात् नेदं मुख्यपैष्टीसुराविषयं वचनम्। किन्तु तदितरविषयं तच यथा चैका तथा सर्वा गौडीमाध्व्योर्मुख्यसुराणामपीत रमद्यापेक्षया ब्राह्मणस्य प्रायश्चित्तगौरवार्थमित्युक्तं। तेन बुद्धिपूर्व्वकं गौडीं माध्वीञ्च पीत्वा गौतमोक्तमप्तकृच्छ्रं कृत्वा पुनः संस्कारेणैव शुध्यति। तथाच गौतमः। अमत्या मद्यपाने पयोघृतमुदकं वायुमतित्र्यहं तप्तकृच्छ्रः ततोऽस्य संस्कारः। एतमेव व्याख्यातं भविष्यपुराणे। अकामतः कृते पापे गौडी माध्वीसुराधिप। तप्तकृच्छ्रविधानं स्यात् गौतमेन यथो दितम्। बुद्धिपूर्व्वकन्तु पैष्टीतरमद्यपाने प्राणान्तिकं अनिर्देश्य मिति शास्त्रमर्य्यादा। तथा गौडीमाध्वीपानाभ्यासे तत्र निषेधादितरमद्यापेक्षया गुरुत्वाच्च मानवमेव कणान् वा भक्षयेदब्दमिति प्रायश्चित्तमुक्तं अत एव गौडीमाध्व्योः कामतः पानानुवृत्तौ भविष्यपुराणे। यद्वाऽस्मिन्नेव विषये ज्ञान बीजं प्रकल्पयेत्। कणान्वा भक्षयेदब्दम्पिण्याकं वा सकृन्निशि। सुरापानापनुत्यर्थं वालवासा जटी ध्वजीति पैष्टीगौडीमाध्वी व्यतिरिक्तपुलस्त्योक्त पानसादिनवविधमद्यस्य प्रत्येकपाने लघु मात्संस्कारमात्रमेव केवलं अन्यदा लघुप्रायश्चित्तं ब्राह्मणस्य

युक्तं। बुद्धिपूर्वपानसादिमद्यपाने तु। मतिपूर्वे सुरापाने कर्तव्ये प्राग्वतो गुरु। तप्तकृच्छ्रादिकृतो भवतः पुनः संस्कार एव चेति भविष्यपुराणीयमन्वदा एवंविधं मुन्यन्तरोक्तं युक्तं ॥१४६॥

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः ॥१४७॥

अप इति। पैष्टीसुराभाण्डे तदितरमद्यभाण्डे वा ऽवस्थिता अपः सुरारसमद्यवर्जिताः पीत्वा शङ्खपुष्प्याख्यौषधिप्रक्षेपेण पक्वं क्षीरमुदकं शङ्खपुष्पीविपक्वेन सार्धं क्षीरेण वर्तयेदिति बौधायनस्मरणात्। पञ्चरात्रं पिबेत् सुरामद्ययोः सर्वत्रैव गुरुलघु प्रायश्चित्ताभिधानात् इहापि ज्ञानाज्ञानादिप्रकारभेदेन विषयसमीकरणं समाधेयं। यावनिकमेव प्रायश्चित्तं बाध्यमिति मेधातिथिराह ॥१४७॥

स्पृष्ट्वा दत्त्वा च मदिरां विधिवत्प्रतिगृह्य च ।
शूद्रोच्छिष्टाश्च पीत्वापः कुशवारि पिबेत् त्र्यहं॥१४८॥

स्पृष्ट्वेति। सुरां स्पृष्ट्वा दत्त्वा च स्वस्तिवचनपूर्वकञ्च प्रतिगृह्य शूद्रोच्छिष्टाश्च अपः पीत्वा प्रतिगृह्येत्युपादानात्। ब्राह्मणो दर्भक्वथितमुदकं त्र्यहं पिबेत्॥ १४८ ॥

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः । प्राणा
नप्सु त्रिरायम्य घृतम्प्राश्य विशुद्ध्यति ॥ १४९ ॥

ब्राह्मणस्त्वित्यादि । ब्राह्मणः पुनः कृतसोमयागः सुरा
पस्य मुखसम्बन्धिनं गन्धं घ्रात्वा जलमध्ये प्राणायामत्रयं कृत्वा
घृतं प्राश्य विशुद्धो भवति ॥ १४९ ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १५० ॥

अज्ञानादिति । विड्वराहादीनां वक्ष्यमाणत्वात् अबुद्धि
पूर्वकं मनुष्यसम्बन्धि मूत्रं पुरीषं वा प्राश्य सुरासंसृष्टस्य
भक्तादिरसं वा प्राश्य द्विजातयस्त्रयो वर्णाः पुनरुपनयनम
र्हन्ति ॥ १५० ॥

वपनं मेखलादण्डो भैक्ष्यचर्य्याव्रतानि च ।
निवर्त्तन्ते द्विजातीनाम्पुनः संस्कारकर्म्मणि ॥ १५१ ॥

वपनमिति । शिरोमुण्डनं मेखलाधारणं दण्डधारणं
भैक्षाणि व्रतानि च मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तार्थे पुन
रुपनयने द्विजातीनान्न भवन्ति ॥ १५१ ॥

अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान्पिबेत्॥१५२॥

अभोज्यानामिति। अभोज्यान्नाश्चोपदिश्यन्ते यत्र दत्त्वा शूद्राणामन्नं भुक्त्वा अज्ञाननिमित्तमनुरूपेण यवागूरूपेण वा यवान् पानयोग्यान् कृत्वा सप्तरात्रं पिबेत्। अमुष्मिन्नेव विषये मत्या भुक्त्वा चरेत्कृच्छ्रमिति चतुर्थाध्याये प्रायश्चित्तमुक्तं तेन सह वैकल्पिकं विकल्पश्च कर्तृशक्त्यपेक्षः तथा द्विजातिस्त्रीणामुच्छिष्टं शूद्रोच्छिष्टं वा भुक्त्वा एतदेव कुर्यात्तथा क्रव्याद्सूकरोष्ट्राणामित्यादिना यदिदमेव प्रायश्चित्तं तद्विनिषिद्धमांसं भुक्त्वा इदमेव कुर्यात्॥१५२॥

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः।
तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः॥१५३॥

शुक्तानीति। यानि स्वभावतो मधुरादिरसानि कालयोगेनोदकवासादिनाम्लभावं भजन्ति तानि शुक्तानि कषायान् बिभीतकादीन् क्वथितानि अप्रतिषिद्धान्यपि पीत्वा यावन्न जीर्णानि भवन्ति तावदशुचिः पुरुषो भवति॥१५३॥

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्॥१५४॥

विड्वराहेति। ग्राम्यशूकरखरोष्ट्रगोमायुवानरकाकानां

मूत्रपुरीषं वा द्विजातिर्भुक्त्वा चान्द्रायणं कुर्य्यात् यत्तु श्वाकं विड्वराहखेत्यनेन विड्वराहग्रामकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये प्रायश्चित्तमुक्तं तदभ्यासविषये व्याख्यातं इदं त्वनभ्यासविषये इत्यविरोधः ॥ १५४ ॥

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च।
अज्ञातञ्चैव सूनास्थमेतदेव व्रतञ्चरेत् ॥ १५५ ॥

शुष्काणीति। वाय्वादिना शोषितानि मांसानि भुक्त्वा भूम्यादिप्रभवाणि छत्राकाणि भुक्त्वा भूमिजं वा वृक्षजं वा छत्राकं भक्षयन्ति ये। सद्भिस्तांस्त्यजेत् विजानीयात् इतिवचनेन वृक्ष जस्यापि निषेधात्। हरिणमांसमुत रासभमांसमिति भक्ष्या भक्ष्यतया यन्न ज्ञातं तथा हिंसास्थानं सूना ततो यदानीतं तद्भुक्त्वा चान्द्रायणमेव कुर्य्यात् ॥ १५५ ॥

क्रव्यादसूकरोष्ट्राणां कुक्कुटानाञ्च भक्षणे।
नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम् ॥ १५६ ॥

क्रव्यादेति। आममांसभक्षिणां ग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानां तथा मानुषकाकगर्द्दभानां प्रत्येकं बुद्धिपूर्व्वकं मांसभक्षणे वक्ष्यमाणं तप्तकृच्छ्रप्रायश्चित्तम् ग्राम्यसूकरकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये पातित्यमुक्तं तदभ्यासविषये व्याख्यातं इदन्तु नाभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ॥ १५६ ॥

मासिकान्नन्तु योऽश्नीयादसमावर्त्तको द्विजः।
स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत्॥ १५७॥

मासिकान्नमिति। यो ब्रह्मचारी ब्राह्मणो मासिकश्राद्ध समन्नमश्नाति एतच्च सपिण्डीकरणात्पूर्वं एकोद्दिष्टश्राद्धोपलक्षणं स त्रिरात्रमुपवसेत्। त्रिरात्रमन्ते एकमहरुद जलमावसेत्॥ १५७॥

ब्रह्मचारी तु योऽश्नीयान्मधुमांसङ्कथञ्चन। स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत्॥ १५८॥

ब्रह्मचारीति। यो ब्रह्मचारी माक्षिकं मांसं वा कथञ्चिदज्ञानतः आपदि वाऽश्नात् स प्राजापत्यं कृत्वा प्रारब्धब्रह्मचर्यव्रत शेषं समापयेत्।॥ १५८॥

बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नञ्च पिबेद्ब्रह्मसुवर्चलां॥ १५९॥

बिडालेति। बिडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टं केशकीटरूपद्रव्यसंसर्गदुष्टं वा चकारात्तल्लेपविसृष्टिकं जग्ध्वा भुक्त्वा ब्रह्मसुवर्चलां क्वथितामुदकम्पिबेत्॥ १५९॥

अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता । अज्ञा नभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः ॥ १६० ॥

अभोज्यमिति । आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नं नादनीय मज्ञानात्तु भुक्तं वमितव्यं तदभावे प्रायश्चित्तैः क्षिप्रं शोधनीयं वमनपक्षे तु लघुप्रायश्चित्तमवत्येव ज्ञानतः पुनः पूर्व्वोक्तं प्राय श्चित्तम् ॥ १६० ॥

एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः । स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः ॥ १६१ ॥

एष इति । अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्ना नाप्रकारविधानमुक्तं स्तेयपापहारिणां विधानमधुना श्रूय ताम् ॥ १६१ ॥

धान्यान्नधनचौर्य्याणि कृत्वा कामाद्द्विजोत्तमः । स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥ १६२ ॥

धान्येति । ब्राह्मणो ब्राह्मणगृहाद्धान्यभक्तादिरूपधनचौर्य्याणि इच्छातः कृत्वा स्वजातीयधान्यानीत्वा संवत्सरं प्राजापत्य व्रताचरणेन शुध्यति एतच्च देशकालद्रव्यपरिमाणस्वामि गुणाद्यपेक्षया महत्त्वादि बोद्धव्यं एवमुत्तरत्रापि ॥ १६२ ॥

मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च। कूप वापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम्॥१६२॥

मनुष्याणामिति। पुरुषस्त्रीक्षेत्रगृहाणामन्यजनहरणे कूपजलस्य वापीजलस्य वा तथैव हरणे चान्द्रायणं प्रायश्चित्तं मन्वादिभिः स्मृतम्॥१६२॥

द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मतः। चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये॥१६४॥

द्रव्याणामिति। द्रव्याणामल्पार्थानामल्पप्रयोजनानां वा गुरुप्रायश्चित्तविशेषाणामपुरीषकादीनामन्यगृहाच्चौर्यं कृत्वा तदपहृतं द्रव्यं स्वामिने दत्वा सान्तपनं कृच्छ्रं प्रायश्चित्तं चरेदात्मशुद्धये कुर्यात् स्वामिनेऽपहृतं द्रव्यं निर्यात्येति वर्णक्षेपप्रायश्चित्तभेदः॥१६४॥

भक्ष्यभोज्यापहरणे यानशय्यासनस्य च। पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम्॥१६५॥

भक्ष्येति। भक्ष्यस्य मोदकादेः भोज्यस्य पायसादेः यानस्य शकटादेः शय्याया आसनस्य च पुष्पमूलफलानाञ्च अल्पीयसामपहरणे पञ्चगव्यपानं विशोधनम्॥१६५॥

तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च।
चैलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनं ॥१६६॥

तृणेति। तृणकाष्ठवृक्षाणां शुष्कान्नस्य च तण्डुलादेः गुड वस्त्रचर्म्ममांसानां मध्ये एकस्याप्यपहरणे त्रिरात्रमुपवासंचरेत ॥१६६॥

मणिमुक्ताप्रवालानान्ताम्रस्य रजतस्य च। अयः कांस्योपलानाञ्च द्वादशाहं कणान्नता ॥१६७॥

मणीति। मणिमुक्ताविद्रुमताम्ररूप्यलोहकांस्योपलानां प्रत्येकमपहरणे द्वादशाहन्तण्डुलकणभक्षणं कुर्य्यात् सर्व्वत्र चाद्भ्यासदेशकालद्रव्यस्वामिगुणदोर्गत्यापेक्षया लघूगुरु द्रव्यापहारविषयसमीकरणं समाधेयम् ॥१६७॥

कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षि गन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहमपयः ॥१६८॥

कार्पासेति। कार्पासकृमिकोषऊर्णानां वस्त्राणां द्विशफैक शफस्य गवाश्वादेः पक्षिणां शुकादीनां गन्धानाञ्च चन्दनप्रभृतीनां रज्ज्वाश्च प्रत्येकं हरणे त्र्यहं क्षीराहारः स्यात्।

यद्यपि पूर्वमपि यवसीकरणपरिहारः कल्पितोऽन्यूनाय चतुर्वर्णसर्वस्वादपि नचमहेतककल्पनावधिनाविरोधः॥१६८॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। अगम्यागमनीयन्तु व्रतैरेभिरपानुदेत्॥१६९॥

एतैरिति। एतैरुक्तैः प्रायश्चित्तैः स्तेयजनितपापं द्विजातिरपनुदेत्। अगम्यागमनजनितं पुनः एभिर्वक्ष्यमाणैर्व्रतैर्निर्हरेत्॥१६९॥

गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥१७०॥

गुरुतल्पेति। स्वयोनिषु सोदर्यभगिनीषु तथा मित्रभार्यासु पुत्रपत्नीषु कुमारीषु चाण्डालीषु प्रत्येकं रेतः सिक्त्वा गुरुदारगमनप्रायश्चित्तं कुर्यात्। यद्यपि ज्ञानाभ्यासाद्यनुबन्धापेक्षया मरणान्तिकं यत एव रेतः सिक्त्वा कुमारीषु चाण्डाली अन्त्यजासु च। सपिण्डापत्यदारेषु प्राणत्यागो विधीयते इति यमेन मरणान्तिकमुपदिष्टं तदप्यनन्तरमुक्तम्॥१७०॥

पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणञ्चरेत्॥१७१॥

पैतृष्वस्रेयीमिति। पितृस्वसुर्मातृस्वसुश्च दुहितरं भगिनीं

मातुश्च सोदर्य्यभ्रातुर्दुहितरं सोदर्य्यभगिनीमिव स्त्रियं गत्वा चान्द्रायणं कुर्य्यात् उक्तदृष्टान्तव्यभिचारित्व विषयं त्वशक्यत्वात्॥ १७१ ॥

एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत्तु बुद्धिमान्।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः॥ १७२॥

एता इति। तिस्र एताः पैतृष्वसेय्याद्याः भार्य्यार्थे प्राज्ञो नोद्वहेत् ज्ञातित्वेन बान्धवत्वेन ता नोपगन्तव्याः यस्मादेता उपयन् उपगच्छन्नरकं याति। सपिण्डा च या मातुरित्य नेन निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन निषेधदार्ढ्यार्थं पुनर्व्वचनम्॥ १७२॥

अमानुषीषु पुरुष उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत्॥ १७३॥

अमानुषीष्विति। अमानुषीषु वडवाद्यासु न गवि। गोगमने कीर्त्तिः संवत्सरप्राजापत्यञ्चरेत् इति शङ्खलिखितादिभिर्गुरु प्रायश्चित्ताभिधानात्। तथा रजस्वलायां योनितश्चान्यत्र स्त्रियां जले च रेतःसेकं कृत्वा पुरुषः सान्तपनं कृच्छ्रं कुर्य्यात् ॥ १७३ ॥

मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्॥१७४॥

मैथुनमिति। यत्र क्वापि देशे पुरुषे मैथुनं सेवित्वा स्त्रियां वा गोयाने शकटादौ अप्सु दिवाकाले च मैथुनं सेवित्वा सवस्त्रः स्नायात्॥१७४॥

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति॥१७५॥

चण्डालेति चण्डालचान्त्यजानाञ्च म्लेच्छश्वपचादीनां अज्ञानतो ब्राह्मणः स्त्रियो गत्वा तेषाञ्चान्नं भुक्त्वा तेभ्यः प्रतिगृह्य पतति पतितश्च प्रायश्चित्तं कुर्य्यात्। एतच्च गुरुत्वादभ्यासतो भोजनप्रतिग्रहविषयं। ज्ञानात्तु तेषां स्त्रीगमनं कृत्वा समानतां गच्छति एतच्च प्रायश्चित्तगौरवार्थम्॥१७५॥

विप्रदुष्टां स्त्रियम्भर्त्ता निरुन्ध्यादेकवेश्मनि। यत्पुंसः परदारेषु तच्चैनाञ्चारयेद्व्रतम्॥१७६॥

विप्रदुष्टामिति। विशेषेण प्रदुष्टामिच्छया व्यभिचारिणीं स्त्रियं भर्त्ता निरुन्ध्यात्पत्नीकार्य्येभ्यो निवर्त्य निगडबद्धामिव एकगृहे धारयेत्। यच्च पुरुषस्य सजातीयपरदारगमने

प्रायश्चित्तं तद्धेमैनां कारयेत् ततश्च स्त्रीणामर्द्धं प्रदातव्यमिति यद्वसिष्ठादिभिरुक्तं तदनिच्छया व्यभिचारेण कर्त्तव्यं ॥ १७६ ॥

सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता । कृच्छ्रं चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् ॥ १७७ ॥

सा चेदिति । सा स्त्री सजातीयगमनेन यद्दुष्टा कृतप्रायश्चित्ता यदि पुनः सजातीयेनाभ्यर्थिता सती तद्गमनं कुर्यात्तदाऽस्याः प्रायश्चित्तं प्राजापत्यं कृच्छ्रं चान्द्रायणञ्च शोधनं मन्वादिभिः स्मृतम् ॥ १७७ ॥

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः । तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ १७८ ॥

यदिति । वृषलश्च चण्डाली प्रायश्चित्तगौरवात् चण्डाली गमने यदेकरात्रेण ब्राह्मणः पापमर्जयति तद्भैक्षाशी नित्यं सावित्र्यादिकञ्जपन् त्रिभिर्वर्षैरपनुदति । तथा चापस्तम्बः । यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः । चतुर्थकाल उदक स्नायी भैक्षचारी त्रिभिर्वर्षैस्तदपहन्ति पापम् । मेधातिथिस्तु इत्थमेव व्याख्यातवान् । गोविन्दराजस्तु क्रमपरिणीतब्राह्मणमस्याधिकृतमिदमाह ॥ १७८ ॥

क्षिति व्याचष्टे। यच्च गोविन्दराजेन व्याख्यातं... मुनिव्याख्यानुसारिणी।
तेनां गोविन्दराजस्य कल्पनामनुरुध्यते ॥ १८८ ॥

यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्य्यात्तत्संसर्गविशुद्धये ॥ १८९ ॥

यो येनेति। पतितशब्दोऽत्र पापकारिवचनः सकलपापिनाम
विशेषपाठात् एषां पतितानां मध्ये यो येन पापकारिणा
सह पूर्व्वोक्तं संसर्गं करोति स तस्यैव व्रतरूपं प्रायश्चित्तं
कुर्य्यात् न तु मरणान्तिकमित्यभिहितं तदपि व्रतं संसर्गिणा
क्रियमाणं ब्रह्महा द्वादश समा इत्यादिकम्पादहीनं कर्त्तव्यम्।
तथाच व्यासः। यो येन संवसेद्वर्षं सोऽपि तत्समतामियात्।
पादन्यूनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः ॥ १८९ ॥

पतितस्योदकं कार्य्यं सपिण्डैर्ब्बान्धवैर्ब्बहिः। निन्दि
तेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १९० ॥

पतितस्येति। महापातकिनो जीवत एव प्रेतस्योदकक्रिया
वक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञाति
ऋत्विक् गुरुसन्निधाने रिक्तायां नवम्यां तिथौ दिनान्ते कर्त्तव्या
॥ १९० ॥

दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा। अहो रात्रमुपासीरन्नशौचं बान्धवैः सह ॥१८३॥

दासीति। सपिण्डसमानोदकप्रयुक्ता दासी उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स निरुदको भवति ततश्च ते सपिण्डासमानोदकाश्चाहोरात्रमशौचमा चरेयुः ॥१८३॥

निवर्तेरंश्च तस्मात्तु सम्भाषणसहासने। दाया द्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी ॥१८४॥

निवर्तेरन्निति। तस्मात्पतितात्सपिण्डादीनां सम्भाषण मेकासनोपवेशनं च तथा दायप्रदानं सांवत्सरिकादौ निम न्त्रणादिरूपो लोकव्यवहार एतानि निवर्तेरन् ॥१८४॥

ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यञ्च यद्धनम्। ज्येष्ठां शम्प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः ॥१८५॥

ज्येष्ठतेति। ज्येष्ठस्य प्रत्युत्थानादिकर्तव्यत्वं तस्य न कार्यं ज्येष्ठभागं च तस्य विंशत्युद्धारादिकं धनं न देयं यद्यपि दाय प्रदानप्रतिषेधादेवोद्धारप्रतिषेधः सिद्धः तथापि यवीयस स्तत्प्राप्त्यर्थमनूद्यते तदेव ज्येष्ठस्य सम्बन्धिधनं ज्येष्ठोद्धारांशमनुजो गुणाधिको लभते ॥१८५॥

अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता। अज्ञा नभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः॥१६०॥

अभोज्यमिति। आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नं नाश्नीय मज्ञानात्तु भुक्तं वमितव्यं तदसम्भवे प्रायश्चित्तैः क्षिप्रं शोधनीयं वमनपक्षे तु लघुप्रायश्चित्तमवश्यमेव ज्ञानतः पुनः पूर्व्वोक्तं प्राय श्चित्तम्॥१६०॥

एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः। स्तेयदोषापहर्त्तॄणां व्रतानां श्रूयतां विधिः॥१६१॥

एष इति। अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्ना नाप्रकारविधानमुक्तं स्तेयपापहारिणां विधानमधुना श्रूय ताम्॥१६१॥

धान्यान्नधनचौर्य्याणि कृत्वा कामाद्द्विजोत्तमः। सजातीयगृहादेव कृच्छ्राब्देन विशुध्यति॥१६२॥

धान्येति। ब्राह्मणो ब्राह्मणगृहाद्धान्यभक्तादिरूपधनचौर्य्याणि इच्छातः कृत्वा सजातीयधाम्नो नीत्वा संवत्सरं प्राजापत्य व्रताचरणेन शुध्यति एतच्च देशकालद्रव्यपरिमाणस्वामि गुणाद्यपेक्षया मध्यमादि बोद्धव्यं एवमुत्तरत्रापि॥१६२॥

मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च । कूपवापीजलानां च शुद्धिश्चान्द्रायणं स्मृतम् ॥ १६३ ॥

मनुष्याणामिति । पुरुषस्त्रीक्षेत्रगृहाणामन्यजनमहरणे कूपजलस्य वापीजलस्य वा तथैव हरणे चान्द्रायणं प्रायश्चित्तं मन्वादिभिः स्मृतम् ॥ १६३ ॥

द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः । चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥ १६४ ॥

द्रव्याणामिति । द्रव्याणामल्पार्घाणामल्पप्रयोजनानां वा गुरुप्रायश्चित्तविशेषाणामङ्गुलीयकादीनामन्यगृहाच्चौर्यं कृत्वा तदपहृतं द्रव्यं स्वामिने दत्वा सान्तपनं कृच्छ्रं प्रायश्चित्तं स्वधर्मार्थमात्मशुद्धये कुर्यात् स्वामिनेऽपहृतं द्रव्यं निर्यातयेदिति सर्वस्तेयप्रायश्चित्तशेषः ॥ १६४ ॥

भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ॥ १६५ ॥

भक्ष्येति । भक्ष्यस्य मोदकादेः भोज्यस्य पायसादेः यानस्य शकटादेः शय्याया आसनस्य च पुष्पमूलफलानां च प्रत्येकमपहरणे पञ्चगव्यपानं विशोधनम् ॥ १६५ ॥

तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च।
चैलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥१६६॥

तृणेति। तृणकाष्ठवृक्षाणां शुष्कान्नस्य च तण्डुलादेः गुड़वस्त्रचर्ममांसानां मध्ये एकस्याप्यपहरणे त्रिरात्रमुपवासञ्चरेत ॥१६६॥

मणिमुक्ताप्रवालानान्ताम्रस्य रजतस्य च। अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ॥१६७॥

मणीति। मणिमुक्ताविद्रुमताम्ररूप्यलोहकांस्योपलानां प्रत्येकमपहरणे द्वादशाहन्तण्डुलकणभक्षणं कुर्य्यात् सर्वत्र चाभ्यासदेशकालद्रव्यस्वामिगुणदोषगौरवापेक्षया उत्कृष्टापकृष्टद्रव्यापहारविषयसमीकरणं समाधेयम् ॥१६७॥

कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहम्पयः ॥१६८॥

कार्पासेति। कार्पासकृमिकोषजोर्णानां वस्त्राणां द्विशफैकशफस्य गवाश्वादेः पक्षिणां शुकादीनां गन्धानाञ्च चन्दनप्रभृतीनां रज्ज्वाश्च प्रत्येकं हरणे त्र्यहं क्षीराहारः स्यात्।

यद्यपि पूर्व्वमस्त्रियमस्त्रीकरणपरिहारः अतिनिषिद्धोऽम्बुहरण वद्गुरुतल्पसमत्वादपि तथाप्येतत्प्रायश्चित्तमविरोधः ॥१६८॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः । अगम्यागमनीयन्तु व्रतैरेभिरपानुदेत् ॥ १६९ ॥

एतैरिति । एतैरनन्तरैः प्रायश्चित्तैः स्तेयजनितम्पापं द्विजाति रपनुदेत् । अगम्यागमननिमित्तं पुनः एभिर्व्वक्ष्यमाणैर्व्रतै र्निर्हरेत् ॥ १६९ ॥

गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु । सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ॥ १७० ॥

गुरुतल्पेति । स्वयोनिषु सोदर्य्यभगिनीषु तथा मित्रभार्य्यासु पुत्रस्त्रीषु कुमारीषु चाण्डालीषु मत्येवं रेतः सिक्त्वा गुरुदार गमनप्रायश्चित्तं कुर्य्यात् । यथापि प्राणान्तिकमनुबन्ध भेदा मरणान्तिकं अत एव रेतः सिक्त्वा कुमारीषु चाण्डाली ष्वन्त्यजासु च । सपिण्डापत्यदारेषु प्राणत्यागो विधीयते इति यमेन मरणान्तिकमुपदिष्टं तज्ज्ञानात्कृतम् ॥ १७० ॥

पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणञ्चरेत् ॥ १७१ ॥

पैतृष्वस्रेयीमिति । पितृष्वसुर्मातृष्वसुश्च दुहितरं भगिनीं

मातुश्च सोदर्य्यभ्रातुर्दुहितरं सोदर्य्यभगिनीमिव पितृष्वसृ समानां गत्वा चान्द्रायणं कुर्य्यात् यज्ञदृशामभ्यभिचारिता विषयं त्वयत्वात् ॥ १७१ ॥

एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत्तु बुद्धिमान्।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥ १७२ ॥

एता इति। तिस्र एताः पैतृष्वस्रेय्याद्याः भार्य्यार्थे प्राज्ञो नोद्वहेत् ज्ञातित्वेन बान्धवत्वेन ता नोपगन्तव्याः यस्मादेता उपयन् उपगच्छन्नरकं याति। यद्यपि च मातुरिव्य नेन निषेधसिद्धौ दायिवाद्याचारदर्शनेन निषेधदार्ढ्यार्थं पुनर्वचनम् ॥ १७२ ॥

अमानुषीषु पुरुष उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत् ॥ १७३ ॥

अमानुषीष्विति। अमानुषीषु वडवाद्यासु न गवि। गोष्वव कीर्णी संवत्सरम्प्राजापत्यञ्चरेत् इति शङ्खलिखितादिभिर्गुरु प्रायश्चित्ताभिधानात्। तथा रजस्वलायां योनितस्त्वन्यत्र स्त्रियां जले च रेतःसेकं कृत्वा पुरुषः सान्तपनं कृच्छ्रं कुर्य्यात् ॥ १७३ ॥

मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥ १७४ ॥

मैथुनमिति । यत्र क्वापि देशे पुरुषे मैथुनं सेवित्वा स्त्रियां वा गोयाने शकटादौ अप्सु दिवाकाले च मैथुनं सेवित्वा सवस्त्रः स्नायात् ॥ १७४ ॥

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ १७५ ॥

चण्डालेति चण्डालचान्त्यजानाञ्च म्लेच्छश्वपचादीनां अज्ञानतो ब्राह्मणः स्त्रियो गत्वा तेषां चान्नं भुक्त्वा तेभ्यः प्रति गृह्य पतति पतितश्च प्रायश्चित्तं कुर्य्यात् । एतच्च गुरुत्वादभ्या सतो भोजनप्रतिग्रहविषयं । ज्ञानात्तु तेषां स्त्रीगमनं कृत्वा समानतां गच्छति एतच्च प्रायश्चित्तगौरवार्थम् ॥ १७५ ॥

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि । यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥ १७६ ॥

विप्रदुष्टामिति । विशेषेण प्रदुष्टामिच्छया व्यभिचारिणीं स्त्रियं भर्त्ता निरुन्ध्यात्पत्नीकार्येभ्यो निवर्त्य नियतवहामिव एकगृहे धारयेत् । यच्च पुरुषस्य सजातीयपरदारगमने

प्रायश्चित्तं तदेवैनां कारयेत् तच्च स्त्रीणामर्द्धं प्रदातव्यमिति वचनविशिष्टादिभिरिष्टं तदविदुषा व्यभिचारेण कर्त्तव्यम् ॥ १७६ ॥

सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता। कृच्छ्रं चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् ॥ १७७ ॥

सा चेदिति। सा स्त्री सजातीयगमनेन संदुष्टा कृतप्रायश्चित्ता यदि पुनः सजातीयेनाभ्यर्थिता सती तद्गमनं कुर्यात्तदाऽस्याः प्रायश्चित्तं प्राजापत्यं कृच्छ्रं चान्द्रायणञ्च शोधनं मन्वादिभिः स्मृतम् ॥ १७७ ॥

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः। तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ १७८ ॥

यदिति। वृषलश्च चण्डाली प्रायश्चित्तगौरवात् चण्डाली गमने यदेकरात्रेण ब्राह्मणः पापमर्जयति तद्भैक्षाशी नित्यं सावित्र्यादिकञ्जपन् त्रिभिर्वर्षैरपनुदति। तथाचापस्तम्बः। यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः। चतुर्थकाल उदक भाज्यनाशी भैक्षचारी त्रिभिर्वर्षैस्तदपोहति पापम्। मेधातिथिस्तु इत्थमेव व्याख्यातवान्। गोविन्दराजस्तु सकलमपरिणीतशूद्रागमनप्रायश्चित्तमिदमाह ॥ १७८ ॥

एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पति
तैः सम्प्रयुक्तानामिमाः शृणुत निष्कृतीः॥१७९॥

एषेति। एवं हिंसाऽभक्ष्यभक्षणागम्यागमनकारि
णां चतुर्णामपि पापकृतां विशुद्धिरुक्ता। इदानीं पातकादि
कृद्भिः सह संसर्गिणामिमा वक्ष्यमाणाः संशुद्धीः शृणुत॥१७९॥

संवत्सरेण पतति पतितेन सहाचरन्। याज
नाध्यापनाद्यौनान्न तु यानासनाशनात्॥१८०॥

संवत्सरेणेति। पतितेन सह संसर्गमाचरन् एकयान
गमनैकासनोपवेशनैकपङ्क्तिभोजनरूपात्संसर्गात्संवत्सरेण
पतति न तु याजनाध्यापनयौनात् संवत्सरेण पतति किन्तु सद्य
एवेत्यर्थः। अध्यापनमुपनयनपूर्वकं सावित्रीश्रावणं। याज
नादीनां च सद्यः पातित्यमाह देवलः। याजनं योनिसम्बन्धं
स्वाध्यायं सह भोजनं। कृत्वा सद्यः पतन्त्येते पतितेन न संशयः॥
विष्णुः। आ संवत्सरात्पतति पतितेन सहाचरन्। सह यानासना
शनात् यौनात्तु सद्य एव हि। बौधायनः। संवत्सरेण पतति पति
तेन सहाचरन्। याजनाध्यापनाद्यौनात्सद्यो न शयनासनादिति।
मेधातिथिराह तु। याजनादीनामन्यतमं संवत्सरेण पातित्य
हेतुत्वं सहयानादीनां चतुर्णाञ्च संवत्सरेण किन्तु तदूर्ध्वं

मिति व्याचष्टे। यथाहोषमनुव्याख्या भुमिष्ठस्यानुसारिणी।
नैनां गोविन्दराजस्य कल्पनामनुरुन्ध्महे ॥ १८० ॥

यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्य्यात्तत्संसर्गविशुद्धये ॥ १८१ ॥

यो येनेति। पतितस्यैवस्यापकारिवचनः सकलपापिनाम विशेषपाठात् एषां पतितानां मध्ये यो येन पापकारिणा सह पूर्व्वोक्तं संसर्गं करोति स तस्यैव व्रतरूपं प्रायश्चित्तं कुर्य्यात् न तु मरणान्तिकमित्यभिहितं तदपि व्रतं संसर्गिणा क्रियमाणं प्रागुक्ता द्वादश समा इत्यादिकम्पादहीनं कर्त्तव्यम्। तथाच व्यासः। यो येन संवसेदर्षं सोपि तत्समतामियात्। पादन्यूनं चरेत्सोपि तस्य तस्य व्रतं द्विजः ॥ १८१ ॥

पतितस्योदकं कार्य्यं सपिण्डैर्ब्बान्धवैर्वहिः। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ १८२ ॥

पतितस्येति। महापातकिनो जीवत एव प्रेतस्योदकक्रिया वक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञातिऋत्विक् गुरुसन्निधाने रिक्तायां नवम्यां तिथौ दिनावसानेकर्त्तव्या ॥ १८२ ॥

दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा । अहो रात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १८३ ॥

दासीति । सपिण्डसमानोदकसंयुक्ता दासी उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स पिण्डोदको भवति तदनु ते सपिण्डसमानोदकैः सहाहोरात्रमशौचमाचरेयुः ॥ १८३ ॥

निवर्तेरंश्च तस्मात्तु सम्भाषणसहासने । दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी ॥ १८४ ॥

निवर्तेरन्निति । तस्मात्पतितात्सपिण्डादीनां सम्भाषणमेकासनोपवेशनं च तथा धनप्रदानं सांवत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहार एतानि निवर्तेरन् ॥ १८४ ॥

ज्येष्ठता च निवर्तेत ज्येष्ठावाप्यञ्च यद्धनम् । ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः ॥ १८५ ॥

ज्येष्ठतेति । ज्येष्ठस्य प्रत्युत्थानादिकं यत्कार्यं तत्तस्य न कार्यं ज्येष्ठलभ्यं च तस्य विंशत्युद्धारादिकं धनं न देयं यद्यपि पतितस्य प्रदानप्रतिषेधादेवोद्धारप्रतिषेधः सिद्धः तथापि यवीयसः प्राप्त्यर्थमनूद्यते तदैव ज्येष्ठस्य सम्बन्धि धनं ज्येष्ठोद्धारांशमर्ह गुणी गुणाधिको लभते ॥ १८५ ॥

प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम्। तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये॥ १८६॥

प्रायश्चित्त इति। कृते पुनः पतितेन प्रायश्चित्ते सपिण्डसमानोदकास्तेनैव कृतप्रायश्चित्तेन सह पवित्रे जलाशये स्नात्वा जलपूर्णं नवं घटं प्रक्षिपेयुः। इह नवघटग्रहणाद्दासी घटमित्यत्र त्यक्तोपयोगघटः प्रतीयते॥ १८६॥

स त्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम्। सर्वाणि ज्ञातिकार्याणि यथापूर्वं समाचरेत्॥ १८७॥

स त्विति। स कृतप्रायश्चित्तः तम्पूर्वोक्तघटं जलमध्ये क्षिप्त्वा ततः स्वकीयभवनं प्रविश्य यथापूर्वं सर्वाणि ज्ञातिकर्माणि कुर्वीत॥ १८७॥

एतदेव विधिं कुर्याद्योषित्सु पतितास्वपि। वस्त्रान्नपानं देयन्तु वसेयुश्च गृहान्तिके॥ १८८॥

एतदिति। स्त्रीष्वपि पतितासु एवमेव पतितस्योदकं कार्य्यमित्यादिविधिं भर्त्रादिसपिण्डसमानोदकवर्गः कुर्यात्। तथा चाच्छादनानि पुनरान्नादि देयानि गृहसमीपे चासां वासार्थं कुटी देया॥ १८८॥

एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्सहाचरेत् । कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित् ॥१८९॥

एनस्विभिरिति । पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमर्थं किंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तांश्च कदाचिदपि पूर्वकृतपापत्वेन निन्देत्किन्तु पूर्ववद्व्यवहरेत् ॥१८९॥

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥१९०॥

अथापवादमाह बालघ्नानिति । बालं यो हतवान् कृतोपकारं अपकाराचरणेन यो विनाशितवान् शरणार्थमागतं यो हतवान् स्त्रियञ्च यो व्यापादितवान् एतान् यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत् ॥१९०॥

येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥१९१॥

येषामिति । येषां ब्राह्मणक्षत्रियविशां सावित्र्यनुवचनकालेषूपनयनं यथाशास्त्रं न कृतवान् तान् प्राजापत्यत्रयं चारयित्वा

यथाधाममनुमन्येत्। यत्तु याज्ञवल्क्यादिभिर्ब्रह्मवधादि प्रायश्चित्तमुक्तं तेन यज्ञार्थं गुरुसाधकमनुपस्थाय जातिमात्रापेक्षो विकल्पो मन्तव्यः॥ १९१॥

प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत्॥ १९२॥

प्रायश्चित्तमिति। ये प्रतिषिद्धशूद्रसेविनो द्विजास्ते चोपनीता अपि अनधीतवेदाः प्रायश्चित्तं कर्त्तुमिच्छन्ति तेषामप्येतत्प्राजापत्यत्रयमुपदिशेत्॥ १९२॥

यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च॥ १९३॥

यदिति। गर्हितेन कर्म्मणा निषिद्धदुःप्रतिग्रहादिना ब्राह्मणा यद्धनमर्ज्जयन्ति तस्य धनस्य त्यागेन जपतपोभ्यां वक्ष्यमाणाभ्यां शुद्ध्यन्ति धनत्यागेन च प्रायश्चित्तविधानात् बहुमूल्ये च करितुरगादौ अल्पमूल्ये च लोहादौ परिगृहीते तुल्यप्रायश्चित्ताभिधानमुपपन्नं एवमविक्रय्यविक्रयादावपि ॥ १९३॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्॥१९४॥

जपित्वेति। त्रीणि सावित्रीसहस्राणि जपित्वा गोष्ठवासी मासं क्षीराहारो भूत्वा असत्प्रतिग्रहजनितात्पापान्मुक्तो भवति। भूयःप्रतिग्रहादावपि एतदेव प्रायश्चित्तं द्रव्यदोषेण च दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति॥१९४॥

उपवासकृशन्तन्तु गोव्रजात्पुनरागतम्। प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम्॥१९५॥

उपवासेति। केवलक्षीराहारेण इतरभोजननिवृत्त्या कृशदेहं गोव्रजादागतं प्रणतं नम्रीभूतं किमस्माभिः सह साम्यमिच्छसि पुनरसत्प्रतिग्रहं न करिष्यसीत्येवमर्थं ब्राह्मणाः परिपृच्छेयुः॥१९५॥

सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसङ्गवाम्। गोभिः प्रवर्त्तिते तीर्थे कुर्य्युस्तस्य परिग्रहम्॥१९६॥

सत्यमिति। सत्यमेतत्पुनरसत्प्रतिग्रहं न करिष्यामीत्येवं ब्राह्मणेषूक्त्वा गवां यवसं दद्यात्। तस्मिन् यवसभक्षणार्थे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते ब्राह्मणास्तस्य संव्यवहारे स्वीकारं कुर्युः॥१९६॥

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति ॥१९७॥

व्रात्यानामिति। व्रात्यानामत ऊर्द्ध्वं त्रयोऽप्येते इत्युक्तानां व्रात्यस्तोमादियाजनं कृत्वा पितृगुर्व्वादिव्यतिरिक्तानाञ्च निषिद्धौर्द्ध्वदेहिकदाहश्राद्धादि कृत्वा अभिचारञ्च श्येनादिकं अभिचारोऽनभिचारणीयस्य अहीनं नामविशेषः अहीनयजनमशुचिकरमिति श्रुतेः। त्रिरात्रादि तस्य याजनं कृत्वा त्रिभिः कृच्छ्रैर्विशुद्ध्यति॥ १९७॥

शरणागतम्परित्यज्य वेदं विप्लाव्य च द्विजः। संवत्सरं यवाहारस्तत्पापमपसेधति ॥ १९८ ॥

शरणागतमिति। शरणागतम्परित्राणार्थमुपगतं शक्तः सन्नुपेक्षते द्विजातिरनध्याप्यञ्च वेदमध्याप्य तज्जनितम्पापं संवत्सरं यवाहारोऽपनुदति ॥ १९८ ॥

श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च। नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति ॥ १९९ ॥

श्वशृगालेति। कुक्कुरशृगालगर्द्दभनराश्ववराहोष्ट्रैर्ग्राम्यैश्चामांसाशैर्मार्ज्जारादिभिर्दष्टः प्राणायामेन शुद्ध्यति॥ १९९ ॥

षष्ठान्नकालता मासं संहिताजप एव वा। होमाश्च शाकला नित्यमपाङ्क्त्यानां विशोधनम्॥ २००॥

षष्ठान्नेति । अपाङ्क्त्या ये स्तेनपतिताः क्लीबा इत्यादिनोक्तास्तेषां विशेषतोऽनुपदिष्टप्रायश्चित्तानां मासं प्रत्यहमुक्त तृतीयेऽह्नि सायम्भोजनं वेदसंहिताजपो दैवकृतस्यैनसोऽवयजनमसीत्यादिभिरष्टभिर्मन्त्रैरष्टौ होमाः प्रत्येकं एतदनुदितं पापशोधनम् ॥ २०० ॥

उष्ट्रयानं समारुह्य खरयानन्तु कामतः। स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति॥ २०१॥

उष्ट्रयानमिति । उष्ट्रयुक्तं यानं शकटादि एवं खरयानमपि तत्कामत आरुह्य अव्यवधान उष्ट्रखराभ्यां याने प्राणायामत्रयमनयोश्च कामतः याने स्नात्वा प्राणायामेन शुद्धो भवति ॥ २०१ ॥

विनाद्भिरप्सु वाप्यार्त्तः शारीरं सन्निवेश्य च। सचेलो बहिराप्लुत्य गामालभ्य विशुध्यति॥ २०२॥

विनेति । जलविरहितदेशे जलमध्ये वा वेगार्त्तो मूत्रपुरीषं वा

त्वा यथाया वर्हियामात् यथाद्दो खात्वा गात्र स्पृष्ट्वा विशुद्धो भवति ॥ २०२ ॥

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २०३ ॥

वेदेति। वेदविहितानां कर्मणामग्निहोत्रादीनां अनुपदिष्टप्रायश्चित्तविशेषाणां परिलोपे स्नातकव्रतानां चतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासं प्रायश्चित्तं कुर्यात् ॥ २०३ ॥

हुंकारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः।
स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥ २०४ ॥

हुंकारमिति। हुं तूष्णीं स्थीयतामित्याक्षेपं ब्राह्मणस्य कृत्वा त्वं कारञ्च विद्याद्यधिकस्य उक्त्वा तद्दिनकालादारभ्याहःशेषं यावत्स्नात्वा भोजननिवृत्तः पादोपग्रहणेनापगतकोपं कुर्यात् ॥ २०४ ॥

ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा।
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०५ ॥

ताडयित्वेति। प्रकृतं ब्राह्मणं तृणेनापि ताडयित्वा कण्ठे वा वस्त्रेण बद्ध्वा वाक्कलहेन जित्वा प्रणिपातेन प्रसादयेत् ॥ २०५ ॥

अवगूर्य्य त्वब्दशतं सहस्रमभिहत्य च। जिघांसया ब्राह्मणस्य नरकम्प्रतिपद्यते॥ २०६॥

अवगूर्य्येति। ब्राह्मणस्य हननेच्छया दण्डमुद्यम्य वर्षशतं नरकं प्राप्नोति। दण्डादिना पुनः प्रहृत्य वर्षसहस्रं नरकं प्राप्नोति॥ २०६॥

शोणितं यावतः पांसून्संगृह्णाति महीतले। तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत्॥ २०७॥

शोणितमिति। प्रहतस्य ब्राह्मणस्य रुधिरं यावत्संख्याकान् रजःकणान् भूमौ पिण्डीकरोति तावत्संख्यकानि वर्षसहस्राणि तत्शोणितोत्पादको नरके वसेत्॥ २०७॥

अवगूर्य्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने। कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम्॥ २०८॥

अवेति। ब्राह्मणस्य हननेच्छया दण्डाद्युद्यमने कृच्छ्रं कुर्य्यात् दण्डादिप्रहारे दत्ते अतिकृच्छ्रं वक्ष्यमाणमाचरेत् रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्वीत॥ २०८॥

अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये। शक्ति
ञ्चावेक्ष्य पापञ्च प्रायश्चित्तम्प्रकल्पयेत्॥ २०९ ॥

अनुक्तेति। अनुक्तप्रायश्चित्तानां यथा प्रतिलोमजवधादि
कृतानां पापानां निर्हरणार्थं कर्तुः शरीरधनादि सामर्थ्यमवेक्ष्य
पापञ्च ज्ञानाज्ञानसकृदावृत्त्यनुबन्धादिरूपेण ज्ञात्वा प्रायश्चित्त
प्रकल्पयेत्॥ २०९ ॥

यैरभ्युपायैरेनांसि मानवो व्यपकर्षति। तान्वो
ऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान्॥ २१० ॥

यैरिति। यैर्हेतुभिर्मनुष्यः पापान्यपनुदति तान् पापनाश
हेतून्देवर्षिपितृभिरनुष्ठितान् युष्माकं वक्ष्यामि॥ २१० ॥

त्र्यहम्प्रातस्त्र्यहं सायन्त्र्यहमद्यादयाचितं। त्र्यह
म्परञ्च नाश्नीयात्प्राजापत्यञ्चरन् द्विजः॥ २११ ॥

त्र्यहमिति। प्राजापत्याख्यं कृच्छ्रमाचरन् द्विजातिरादौ
त्रीन्दिनचयं प्रातर्भुञ्जीत। प्रातः शब्दोऽयमत्र नाम्नामेवादि
प्रातर्दिवाकालपरः। अत एव वसिष्ठः। त्र्यहन्दिवा भुङ्क्ते नक्त
मत्ति च त्र्यहं त्र्यहं अयाचितव्रतं त्र्यहं न भुङ्क्त इति कृच्छ्रः।
आपस्तम्बोप्याह। त्र्यहमनक्ताश्यदिवाशी च ततस्त्र्यहम
याचितव्रतस्त्र्यहं नाश्नाति किञ्चन इति कृच्छ्रद्वादशरात्रस्य

एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः ॥ २१३ ॥

एकैकमिति। अतिकृच्छ्रं द्विजातिरनुतिष्ठन् प्रातःसायम अयाचिताह्निरूपेषु एकैकं ग्रासं त्रीणि त्र्यहाणि पूर्ववत् भुञ्जीत अन्त्यञ्च त्र्यहं न किञ्चिद्भुञ्जीत ॥ २१३ ॥

तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः ॥ २१४ ॥

तप्तेति। तप्तकृच्छ्रं चरन् द्विजातिः त्र्यहमुष्णोदकं त्र्यहमुष्णघृतं त्र्यहमुष्णवायुं एकवारं स्नानं कुर्व्वन् संयतवान् पिबेत्। अत्र पराशरोक्तो विशेषः। षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत्। पलमेकम्पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ॥ २१४ ॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्व्वपापापनोदनः ॥ २१५ ॥

यतात्मन इति। नियतात्मनः अप्रमत्तस्य संयतेन्द्रियस्य द्वादशाहमभोजनमेव पराकाख्यः कृच्छ्रः यथाशक्तितारतम्येन गुरुलघुपापापनोदनः ॥ २१५ ॥

मासञ्च प्रारभ्य मासमेकं संयतेन्द्रियः प्रत्यहमष्टावष्टौ ग्रासा माध्यन्दिने भुञ्जीत। मध्यंदिन इति ग्रहणं कालान्तरीयैः काल भोजननिवृत्त्यर्थम्॥ २१८॥

चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतं॥ २१९॥

चतुरः प्रातरिति। प्रातश्चतुरो ग्रासानश्नीयात् अस्तमिते च सूर्ये चतुरो ग्रासान्भुञ्जीत एतच्छिशुचान्द्रायणं मुनिभिः स्मृतं॥ २१९॥

यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकतां॥ २२०॥

यथेति। नीवारादिहविष्यसम्बन्धिनां ग्रासानां द्वे शते चत्वारिंशदधिके कदाचित् त्रय कदाचित्पञ्च कदाचित् षोडश कदाचिदुपवास इत्येवमादिनियमेन यथाकथञ्चित्पिण्डान्मासेन संयतवान् भुञ्जानश्चन्द्रसलोकतां याति एवमपापस्याभ्युदयार्थञ्चेदमुक्तं अतएव याज्ञवल्क्यः। धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्। कृच्छ्रकृत् धर्मकामस्तु महतीं श्रियमाप्नुयात्। अतः प्राजापत्यादिकृच्छ्रमपि अभ्युदयफलमिति याज्ञवल्क्येनोक्तम्॥ २२०॥

एतद्रुद्रास्तथादित्या वसवश्चाचरन् व्रतम्।
सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः॥ २२१ ॥

एतदिति। एतच्चान्द्रायणाख्यं व्रतं रुद्रादित्यवसुमरुतः महर्षिभिः सह सर्वपापनाशाय गुरुलघुपापापेक्षया बहुधा उक्तप्रकारेण कृतवन्तः॥२२१॥

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्।
अहिंसा सत्यमक्रोधमार्जवञ्च समाचरेत्॥ २२२॥

महेति। महाव्याहृतिभिर्भूर्भुवः स्वरेताभिः आज्यं हविरनादेशे जुहोतिषु विधीयते इति धर्मशास्त्रवचनात्। आज्येन प्रत्यहं होमं कुर्यात्। अहिंसासत्याक्रोधार्जवानि चानुतिष्ठेत् यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रताङ्गतयायमुपदेशः॥ २२२॥

त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत्।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित्॥ २२३॥

त्रिरिति। अहनि रात्रावपि त्रिःसवनेषु स्नानार्थं सचेलो जलाशयं प्रविशेत् एतच्च पिपीलिकामध्ययवमध्य चान्द्रायणेतरचान्द्रायणविषयम्। तयोस्त्रिषवणस्नानाभि व्युत्क्रमात् स्त्रीशूद्रपतितैश्च सह यावद्व्रतं कदाचित्सम्भाषणं न कुर्य्यात्॥ २२३॥

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति ॥१९७॥

व्रात्यानामिति। व्रात्यानामत ऊर्द्ध्वमयोऽप्येते इत्युक्तानां व्रात्यस्तोमादियाजनं कृत्वा पितृगुर्व्वादिव्यतिरिक्तानाञ्च निमि त्तौर्द्ध्वदेहिकदाहाद्यादि कृत्वा अभिचारञ्च श्येनादिकं अभिचारोऽनभिचारणीयस्य अहीनं यागविशेषः अहीनयजन मशुचिकरमिति श्रुतेः। त्रिरात्रादि तस्य याजनं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति॥ १९७॥

शरणागतम्परित्यज्य वेदं विप्लाव्य च द्विजः। संव त्सरं यवाहारस्तत्पापमपसेधति ॥ १९८॥

शरणागतमिति। शरणागतम्परित्राणार्थमुपगतं शक्तः सन्नुपेक्षते द्विजातिरनध्याप्यञ्च वेदमध्याप्य तज्जनितम्पापं संवत्सरं यवाहारोऽपनुदति ॥ १९८ ॥

श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च। नरा श्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ १९९ ॥

श्वशृगालेति। कुक्कुरशृगालगर्द्दभनराश्ववराहादैर्ग्राम्यैश्चा मांसाशैर्मार्ज्जारादिभिर्दष्टः प्राणायामेन शुध्यति ॥ १९९ ॥

कृत्वा यथायथं वहिर्ग्रामात् नद्यादौ स्नात्वा गाञ्च स्पृष्ट्वा विशुद्धो भवति ॥ २०२ ॥

वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २०३ ॥

वेदेति। वेदविहितानां कर्म्मणामग्निहोत्रादीनां समुपदिष्टप्रायश्चित्तविशेषाणां परिलोपे स्नातकव्रतानाञ्चतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासं प्रायश्चित्तं कुर्य्यात् ॥ २०३ ॥

हुंकारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः।
स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥ २०४ ॥

हुंकारमिति। हुं तूष्णीं स्थीयतामित्याक्षेपं ब्राह्मणस्य कृत्वा त्वं कारञ्च विद्याद्यधिकस्य उक्त्वा तद्दिनकालादारभ्याहःशेषं यावत्स्नात्वा भोजननिवृत्तः पादोपग्रहणेनापगतकोपं कुर्य्यात् ॥ २०४ ॥

ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा।
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०५ ॥

ताडयित्वेति। प्रकृतं ब्राह्मणं तृणेनापि ताडयित्वा कण्ठे वा वस्त्रेण बद्ध्वा वाक्कलहेन जित्वा प्रणिपातेन प्रसादयेत् ॥ २०५ ॥

अवगूर्य त्वब्दशतं सहस्रमभिहत्य च । जिघांसया ब्राह्मणस्य नरकम्प्रतिपद्यते ॥ २०६ ॥

अवगूर्येति । ब्राह्मणस्य हननेच्छया दण्डमुद्यम्य वर्षशतं नरकं प्राप्नोति । दण्डादिना पुनः प्रहृत्य वर्षसहस्रं नरकं प्राप्नोति ॥ २०६ ॥

शोणितं यावतः पांसून्संगृह्णाति महीतले । तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥ २०७ ॥

शोणितमिति । प्रहतस्य ब्राह्मणस्य रुधिरं यावत्संख्याकान् रजःकणान् भूमौ पिण्डीकरोति तावत्संख्यकानि वर्षसहस्राणि तच्छोणितोत्पादको नरके वसेत् ॥ २०७ ॥

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ २०८ ॥

अवेति । ब्राह्मणस्य हननेच्छया दण्डाद्युद्यमने कृच्छ्रं कुर्यात् दण्डादिप्रहारे दत्ते अतिकृच्छ्रं वक्ष्यमाणञ्चरेत् रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्वीत ॥ २०८ ॥

अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये। शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तम्प्रकल्पयेत्॥ २०९॥

अनुक्तेति। अनुक्तप्रायश्चित्तानां यथा प्रतिलोमजवधादिकृतानां पापानां निर्हरणार्थं कर्त्तुः शरीरधनादि सामर्थ्यमवेक्ष्य पापञ्च ज्ञानाज्ञानसकृदावृत्त्यनुबन्धादिरूपेण ज्ञात्वा प्रायश्चित्तं प्रकल्पयेत्॥ २०९॥

यैरभ्युपायैरेनांसि मानवो व्यपकर्षति। तान्वोऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान्॥ २१०॥

यैरिति। यैर्हेतुभिर्मनुष्यः पापान्यपनुदति तान् पापनाशहेतून्देवर्षिपितृभिरनुष्ठितान् युष्माकं वक्ष्यामि॥ २१०॥

त्र्यहम्प्रातस्त्र्यहं सायन्त्र्यहमद्यादयाचितं। त्र्यहम्परञ्च नाश्नीयात्प्राजापत्यञ्चरन् द्विजः॥ २११॥

त्र्यहमिति। प्राजापत्याख्यं कृच्छ्रमाचरन् द्विजातिस्त्रीन्दिवसं प्रातर्भुञ्जीत। प्रातः शब्दोऽत्र समानामैकविध प्राप्तदिवाकालपरः। अतएव वसिष्ठः। त्र्यहन्दिवा भुङ्क्ते नक्तमत्ति च त्र्यहं त्र्यहं अयाचितव्रतं त्र्यहं न भुङ्क्त इति कृच्छ्रः। आपस्तम्बोऽप्याह। त्र्यहमनक्ताश्यदिवाशी च ततस्त्र्यहत्र्यहम् अयाचितव्रतस्त्र्यहं नाश्नाति किञ्चन इति कृच्छ्रद्वादशरात्रस्य

एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्।
त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रञ्चरन् द्विजः॥२१३॥

एकैकमिति। अतिकृच्छ्रं द्विजातिरनुतिष्ठन् प्रातःसायम याचिताहिकरूपेण एकैकं ग्रासं त्रीणि त्र्यहाणि पूर्ववत् भुञ्जीत अन्त्यञ्च त्र्यहं न किञ्चिद्भुञ्जीत॥२१३॥

तप्तकृच्छ्रञ्चरन्विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहम्पिबेदुष्णान्सकृत्स्नायी समाहितः॥२१४॥

तप्तेति। तप्तकृच्छ्रं चरन् द्विजातिः त्र्यहमुष्णोदकं त्र्यहमु घृतं त्र्यहमुष्णवायुं एकवारं स्नानं कुर्व्वन् संयतवान् पिबेत्। अत्र पराशरोक्तो विशेषः। षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत्। पलमेकम्पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते॥२१४॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनं। पराको नाम कृच्छ्रोऽयं सर्व्वपापापनोदनः॥२१५॥

यतात्मन इति। नियतात्मनः सावधानस्य संयतेन्द्रियस्य द्वादशाहमभोजनमेव पराकाख्यः कृच्छ्रः महदाद्यखिलतारतम्येन गुरुलघुपापापनोदनः॥२१५॥

यस्य प्रारब्ध मासमेकं संयतेन्द्रियः सन् हविष्याष्टौ ग्रासा माध्यन्दिने भुञ्जीत । मध्यंदिन इति एकवारभोजनविधेः प्रदोषभोजननिवृत्त्यर्थम् ॥ २१८ ॥

चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतं ॥ २१९ ॥

चतुरः प्रातरिति । प्रातश्चतुरो ग्रासानश्नीयात् अस्तमिते च सूर्य्ये चतुरो ग्रासान्भुञ्जीत एतच्छिशुचान्द्रायणं मुनिभिः स्मृतं ॥ २१९ ॥

यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकतां ॥२२०॥

यथेति । नीवारादिहविष्यसम्बन्धिनां ग्रासानां द्वे शते चत्वारिंशदधिके कदाचित् द्वय कदाचित्पञ्च कदाचित् षोडश कदाचिदुपवास इत्येवमाद्यनियमेन यथाकथञ्चित्पिण्डानादाय संयतवान् भुञ्जानश्चन्द्रसलोकतां याति एवम्पापक्षयार्थम् अभ्युदयार्थञ्चेदमुक्तं अतएव याज्ञवल्क्यः । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् । कृच्छ्रकृत् धर्म्मकामस्तु महतीं श्रियमाप्नुयात् । अतः प्राजापत्यादिकृच्छ्रमपि अभ्युदयफलमिति याज्ञवल्क्येनोक्तम् ॥ २२० ॥

एतद्रुद्रास्तथादित्या वसवश्चाचरन् व्रतम्।
सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः ॥ २२१ ॥

एतदिति। एतच्चान्द्रायणाख्यं व्रतं रुद्रादित्यवसुमरुतः महर्षिभिः सह सर्वपापनाशाय गुरुलघुपापापेक्षया यथा शक्तिप्रकारेण कृतवन्तः ॥२२१॥

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्।
अहिंसा सत्यमक्रोधमार्जवञ्च समाचरेत् ॥ २२२ ॥

महेति। महाव्याहृतिभिर्भूर्भुवः स्वरेताभिः आज्यं हवि रनादेशे जुहोतिषु विधीयते इति परिभाषावचनात्। आज्येन प्रत्यहं होमं कुर्यात्। अहिंसासत्याक्रोधार्जवानि चानु तिष्ठेत् यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रताङ्ग तयाप्युपदेशः ॥ २२२ ॥

त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत्।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् ॥ २२३ ॥

त्रिरिति। अहनि रात्रावादिमध्यावसानेषु स्नानार्थं सचेलो जलाशयं प्रविशेत् इदञ्च पिपीलिकामध्ययवमध्य चान्द्रायणेतरचान्द्रायणविषयम्। तयोरपकर्षत्रिषवणानि व्युत्क्रमात् स्त्रीशूद्रपतितैश्च सह यावद्व्रतं कदाचित्सम्भाषणं न कुर्यात् ॥ २२३ ॥

स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा ।
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः ॥ २२४ ॥

स्थानेति। अहनि रात्रौ च उत्थित आसीनश्च स्यात् न तु शयीत अशामर्थ्येतु स्थण्डिले शयीत च बह्वादौ ब्रह्मचारी स्त्रीसंयोगरहित व्रती मौञ्जीदण्डादियुक्तः पापापनयारम्भे इदं क्षुद्रमिमौञ्जीञ्च मेखलामिति यमस्मरणात्। गुरुदेव ब्राह्मणानाञ्च पूजको भवेत्॥ २२४॥

सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ।
सर्व्वेष्वेव व्रतेष्वेवम्प्रायश्चित्तार्थमादृतः ॥ २२५ ॥

सावित्रीमिति। सावित्रीञ्च सदा जपेत् पवित्राणि चाघमर्षणादीनि यथाशक्ति जपेत् एतच्च यथा चान्द्रायणे तथा प्राजापत्यादिकृच्छ्रेष्वपि यत्नवान् प्रायश्चित्तार्थमनुतिष्ठेत्॥ २२५॥

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः । अना विष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ॥ २२६ ॥

एतैरिति। लोकविदितपापात् द्विजातयः एभिरुक्तप्रायश्चित्तै र्वक्ष्यमाणपरिषदा शोधनीयाः अप्रकाशितपापांस्तु मानवा मन्त्रैर्होमैश्च परिषदेव शोधयेत्। यद्यपि परिषदि निवेदने

यथा यथा मनस्तस्य दुष्कृतं कर्म्म गर्हति। तथा तथा शरीरं तत्तेनाधर्म्मेण मुच्यते॥ २२९॥

यथेति। तस्य पापकारिणो मनो यथा यथा दुष्कृतकर्म्म निन्दति तथा तथा शरीरं जीवात्मा तेनाधर्म्मेण मुक्तो भवति अयमनुतापानुवाद इति॥ २२९॥

कृत्वा पापं हि सन्तप्य तस्मात्पापात्प्रमुच्यते। नैवं कुर्य्यां पुनरिति निवृत्त्या पूयते तु सः॥ २३०॥

कृत्वेति। पापं कृत्वा पश्चात्सन्तप्य तस्मात्पापान्मुच्यते इत्युक्तमपि नैवं कुर्य्यां पुनरित्येतदर्थमनूदितं यदात्तु पश्चात्तापो नैवं पुनः करिष्यामीत्येवं निवृत्तिरूपसङ्कल्पफलकः स्यात्तदा सुतरां तस्मात्पापात्पूतो भवतीति एतच्च निवृत्तिसङ्कल्पस्य प्रकाशाप्रकाशप्रायश्चित्ताङ्गविधानार्थं॥ २३०॥

एवं सञ्चिन्त्य मनसा प्रेत्य कर्म्मफलोदयम्। मनोवाङ्मूर्त्तिभिर्नित्यं शुभं कर्म्म समाचरेत्॥ २३१॥

एवमिति। एवं शुभाशुभानां कर्म्मणां परलोके दृष्टानिष्टफलं मनसा विचार्य्य मनोवाक्कायैः शुभमेव सर्व्वकर्म्म कुर्य्यात्। इष्टफलत्वात् नाशुभं नरकादिदुःखहेतुत्वात्॥ २३१॥

अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म्म विगर्हितम्। तस्माद्विमुक्तिमन्विच्छन् द्वितीयन्न समाचरेत्॥२३२॥

अज्ञानादिति। प्रमादादिच्छातो वा निषिद्धं कर्म्म कृत्वा तस्मात्पापान्मुक्तिमिच्छन् पुनस्तन्न कुर्य्यात्। द्वयश्च पुनः करणे प्रायश्चित्तगौरवार्थम्। अत एव देवलः। विधेः प्राथमिकादस्मात् द्वितीये द्विगुणम्भवेदिति॥ २३२॥

यस्मिन्कर्म्मण्यस्य कृते मनसः स्यादलाघवं। तस्मिंस्तावत्तपः कुर्य्याद्यावत्तुष्टिकरं भवेत्॥ २३३॥

यस्मिन्निति। यस्य पापकारिणो यस्मिन् प्रायश्चित्तात्मके कर्म्मणि अनुष्ठिते न चित्तस्य सन्तोषः स्यात्तस्मिन् तदेव प्रायश्चित्तम्आवर्त्तयेत् यावन्मनसः सन्तोषः प्रसादश्च स्यात्॥ २३३॥

तपोमूलमिदं सर्व्वन्दैवमानुषकं सुखम्। तपोमध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः॥ २३४॥

तप इति। यदेतत्स्वर्गे देवानां मनुष्याणां च सुखं तस्य तपः कारणं तपसैव च तस्य स्थितिः तपोऽन्तः प्रतिनियतावधिरेव देवादिसुखस्य तपसा मन्वादिभि र्वेदार्थज्ञैरुक्तं। अतश्च पापक्षयादिप्रायश्चित्तात्मकतपःप्रसङ्गेन चेदं यथाकथञ्च सर्व्वं तपोमाहात्म्यकथनम्॥ २३४॥

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम् ॥२३५॥

ब्राह्मणस्येति । ब्राह्मणस्य ब्रह्मकर्मात्मवेदशास्त्रबोधनं तपो राजन्यस्य रक्षणन्तपः वैश्यस्य कृषिवाणिज्यपाशुपाल्यादिकन्तपः शूद्रस्य ब्राह्मणपरिचर्या तप इति वर्णविशेषेणास्य वैशेष्यार्थम् ॥२३५॥

ऋषयः संयतात्मानः फलमूलानिलाशनाः ।
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥२३६॥

ऋषय इति । ऋषयो वाङ्मनःकायनियमोपेताः फलमूलवायुभक्षाः तपसैव जङ्गमस्थावरसहितभूमिस्वर्गान्तरीक्ष सर्गात्मकं लोकत्रयमेकदेशस्थाः सन्तो निष्पापान्तःकरणाः प्रकर्षेण पश्यन्ति ॥२३६॥

औषधान्यगदो विद्या दैवी च विविधा स्थितिः ।
तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम् ॥२३७॥

औषधानीति । औषधानि व्याध्युपशमनहेतुकानि अगदो गदाभावो वैद्यमिति यावत् विद्या ब्रह्मकर्मात्मवेदार्थ ज्ञानं दैवत्वस्थितिश्च नानारूपा स्वर्गादावस्थितिः एतानि तपसैव प्राप्यन्ते। यस्मात्तप एषां प्राप्तिनिमित्तम् ॥२३७॥

सूक्ष्मो कीटजन्तुः पक्ष्यादिस्त्वनुष्ठानासम्भवात् तेन च जीवकर्मणा पक्षिवारिचरो यथासम्भवतपोबलेन तपसैव दिवं यान्ति ॥ २४० ॥

यत्किञ्चिदेनः कुर्व्वन्ति मनोवाङ्मूर्त्तिभिर्जनाः ।
तत्सर्व्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥ २४१ ॥

यत्किञ्चिदिति । यत्किञ्चित्पापं मनोवाग्देहैर्मानवाः कुर्वन्ति तत्सर्व्वंपापं तपसैव निर्दहन्ति तपोधना इति तप एव धनमिव रक्षणीयं येषान्ते तपोधनाः ॥ २४१ ॥

तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः ।
इज्याश्च प्रतिगृह्णन्ति कामान्संवर्द्धयन्ति च ॥ २४२ ॥

तपसैवेति । प्रायश्चित्ततपसा क्षीणपापस्य ब्राह्मणस्य यागे हवींषि देवाः प्रतिगृह्णन्ति अभिलषितार्थांश्च प्रयच्छन्ति ॥ २४२ ॥

प्रजापतिरिदं शास्त्रन्तपसैवाऽसृजत्प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४३ ॥

प्रजापतिरिति । हिरण्यगर्भः सकललोकोत्पत्तिस्थिति प्रलय प्रभुः तपःकरणपूर्व्वकमेवेमं ग्रन्थमकरोत् । तथैव ऋषयो वशिष्ठादयस्तपसैव मन्त्र ब्राह्मणात्मकान् वेदान् प्राप्तवन्तः ॥ २४३ ॥

इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते। सर्व्व
स्यास्य प्रपश्यन्तस्तपसः पुण्यमुत्तमम्॥ २४४॥

इत्येतदिति। सर्व्वस्यास्य जगतो यद्दुर्लभत्वस्य तत्तपसः फला
त् इत्येवं देवाः प्रपश्यन्तः तपोमूलमिदं सर्व्वमित्यादि
तपोमाहात्म्यं प्रवदन्ति॥ २४४॥

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमाः।
नाशयन्त्याशु पापानि महापातकजान्यपि॥ २४५॥

वेदेति। यथाशक्ति प्रत्यहं वेदाध्ययनं पञ्चमहायज्ञानुष्ठान
मपराधसहिष्णुत्वमित्येतानि महापातकजनितान्यपि पापानि
शीघ्रं नाशयन्ति किमुतान्यानि॥ २४५॥

यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात्।
तथा ज्ञानाग्निना पापं सर्व्वन्दहति वेदवित्॥ २४६॥

यथेति। यथाग्निः काष्ठान्याश्रयाणि दीप्तेन तेजसा क्षिप्रं
करोति तथा ज्ञानाग्निना पापं सर्व्वं वेदार्थज्ञो ब्राह्मणो नाश
यति। परमात्मज्ञानपरमेतत् पापक्षयोत्कर्षज्ञापनार्थमेतत्
॥ २४६॥

इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि। अत ऊर्द्धं रहस्यानां प्रायश्चित्तं निबोधत ॥ २४७ ॥

इत्येतदिति। इत्येतद्ब्रह्महत्यादीनां प्रकाशानामपापानां प्रायश्चित्तं यथा विध्यभिहितं अतऊर्द्धमप्रकाशानामपापानां प्रायश्चित्तं शृणुत। अयं श्लोको गोविन्दराजेनालिखितः मेधातिथिना तु लिखित एव ॥ २४७ ॥

सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश। अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः ॥ २४८ ॥

सव्याहृतीति। सव्याहृतिसप्रणवाः सावित्रीशिरोयुक्ताः पूरककुम्भकरेचकादिविधिना प्रत्यहं षोडश प्राणायामाः कृताः मासात् ब्रह्मघ्नमपि निष्पापं कुर्व्वन्ति अपिशब्दादातिदेशिकब्रह्महत्याप्रायश्चित्ताधिकृतमपि एतच्च प्रायश्चित्तं द्विजातीनामेव न स्त्रीशूद्रादेर्मन्त्रानधिकारात् ॥ २४८ ॥

कौत्सं जप्त्वापइत्येतद्वासिष्ठञ्च प्रतीत्यृचम्। माहित्रं शुद्धवत्यश्च सुरापोपि विशुद्ध्यति ॥ २४९ ॥

कौत्समिति। कौत्सेन ऋषिणादृष्टं अप नः शोशुचदघमित्येतत् सूक्तं वशिष्ठेन ऋषिणा दृष्टञ्च प्रतिस्तोमेभिरुषसं

सिष्ठदृष्टं प्रत्यृचं वासिष्ठं महित्रीणामवोऽस्त्वित्येतत् सूक्तं शुद्ध वत्य एतानिन्द्रं स्तवामशुद्धमेतास्तिस्र ऋचः प्रत्येकमासमहरहः षोडशकृत्वोपि जपित्वा सुरापोपि विशुद्ध्यति जपित्वात् आतिदेशिकसुरापानप्रायश्चित्ताधिकृतोपि ॥ २४९ ॥

सकृज्जप्त्वास्यवामीयं शिवसंकल्पमेव च । अपहृत्य सुवर्णन्तु क्षणाद्भवति निर्मलः ॥ २५० ॥

सकृदिति। ब्राह्मणसुवर्णमपहृत्य अस्य वामीयस्य वामस्य पलितस्य एतत् सूक्तं जपनात् मासमेकं प्रत्यहमेकवारं जपित्वा शिवसंकल्पञ्च यज्जाग्रतो दूरमित्येतदादिकं षडृचे यत् पठितं तज्जपित्वा सुवर्णमपहृत्य क्षिप्रमेव निष्पापो भवति ॥ २५० ॥

हविष्पान्तीयमभ्यस्य न तमंह इतीति च । जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥ २५१ ॥

हवीति। हविष्पान्तमजरं स्वर्विदीत्येकोनविंशतिं ऋचः न तमंहो न दुरितमित्यष्टौ हविष्पान्त इति वा इति मे मनः शिवसं कल्प इति च सूक्तं सहस्रशीर्षापुरुष इत्येतच्च पौरुषसूक्तं मास मेकं प्रत्यहमभ्यस्येति सर्वत्र सम्बध्यते पौरुषाभ्यासेन जपित्वा गुरुदारगः तस्मात्पापान्मुच्यते ॥ २५१ ॥

एनसां स्थूलसूक्ष्माणाञ्चिकीर्षन्नपनोदनम्।
अवेत्यृचञ्जपेदब्दं यत्किञ्चेदमितीति वा॥२५२॥

एनसामिति। स्थूलानाम्पापानां महापातकानां सूक्ष्माणाञ्च उपपातकादीनां निर्हरणं कर्त्तुमिच्छन् अवतिहेलोवरुण धोरित्येतामृचं यत्किञ्चिदं वरुणदैवो जन इत्येताञ्च ऋचं इति मे मन इत्येतत् सूक्तं संवत्सरमेकं प्रत्यहं जपेत्॥२५२॥

प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्।
जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्॥२५३॥

प्रतिगृह्येति। स्वरूपतो महापातकिधनत्वादिना वाऽप्रतिग्राह्यं प्रतिगृह्य अन्नञ्च स्वभावकालप्रतिग्रहसंसर्गदुष्टं भुक्त्वा तरत्समन्दिधावतीत्येता ऋचस्तस्रो जपित्वा त्र्यहं तस्मात्पापान्मनुष्यः पूतो भवति॥२५३॥

सोमारौद्रन्तु बह्वेना मासमभ्यस्य शुध्यति। स्रवन्त्यामाचरन् स्नानमर्य्यम्णामिति च त्र्यृचं॥२५४॥

सोमेति। सोमारुद्राधारयेथामसुर्य्यमिति चतस्रः। अर्य्यमणं वरुणं मित्रञ्चेति च त्र्यृचं नद्याञ्च स्नानं कृत्वा मासमेकं प्रत्येकमभ्यस्य बहुपापो विशुध्यति बहुष्वपि पापेषु तन्त्रेणैकं प्रायश्चित्तङ्कार्य्यमिति ज्ञापकमिदम्॥२५४॥

अब्दार्द्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत्। अप्र
शस्तं तु कृत्वाप्सु मासमासीत भैक्षभुक्॥ २५५ ॥

अब्दार्द्धमिति। एनस्वी अविशेषात्सर्वेष्वेव पापेषु इन्द्रमित्रं
वरुणमग्निमित्येव इत्येतत् सप्तकमृचः षण्मासं जपेत् अप्रशस्तं मूत्र
पुरीषोत्सर्गादिकमप्सु कृत्वा मासं भैक्षभोजी भवेत्॥ २५५ ॥

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः।
सुगुर्व्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्॥ २५६ ॥

मन्त्रैरिति। देवकृतस्येत्यादिभिः शाकलहोममन्त्रैः संवत्सरं
घृतहोमं कृत्वा नम इन्द्रश्च इत्येतां वा ऋचं संवत्सरं जपित्वा
महापातकमन्यदपि पापं द्विजातिरपहन्ति॥ २५६ ॥

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः। अभ्य
स्याब्दं पावमानीर्भैक्षाहारो विशुध्यति॥ २५७ ॥

महापातकेति। ब्रह्महत्यादिमहापातकयुक्तो भिक्षाहा
रो वर्षमेकं संयतेन्द्रियो गवामनुगमनं कुर्वन् पावमानी
रित्यृचोऽभ्यसनभावेन जपित्वा तस्मात्पापाद्विशुद्धो भवति
॥ २५७ ॥

एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम्।
अवेत्यृचं जपेदब्दं यत्किञ्चेदमितीति वा॥२५२॥

एनसामिति। स्थूलानाम्पापानां महापातकानां सूक्ष्माणाञ्च उपपातकादीनां निर्हरणं कर्त्तुमिच्छन् अवतिहेलोवरुण योरित्येतामृचं यत्किञ्चिदं वरुणदैवो जन इत्येताञ्च चर्च इति मे मनइत्येतत् सूक्तं संवत्सरमेकं प्रत्यहं जपेत्॥२५२॥

प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्।
जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्॥२५३॥

प्रतिगृह्येति। स्वरूपतो महापातकिधनत्वादिना वाऽप्रतिग्राह्यं प्रतिगृह्य अन्नञ्च स्वभावकालप्रतिग्रहसंसर्गदुष्टं भुक्त्वा तरत्समन्दिधावतीत्येता चतस्र ऋचो जपित्वा त्र्यहं तस्मात्पापान्मनुष्यः पूतो भवति॥२५३॥

सोमारौद्रन्तु बह्वेना मासमभ्यस्य शुद्ध्यति। स्रवन्त्यामाचरन् स्नानमर्य्यम्णामिति च त्र्यृचं॥२५४॥

सोमेति। सोमारुद्राधारयेथामसुर्यमिति चतस्रः। अर्य्यमणं वरुणं मित्रञ्चेति त्र्यृचं नद्याञ्च स्नानं कृत्वा मासमेकं प्रत्येकमभ्यस्य बहुपापो विशुद्ध्यति बहुष्वपि पापेषु तत्स्वेकं प्रायश्चित्तकार्य्यमिति ज्ञापकमिदम्॥२५४॥

अब्दार्द्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत् । अप्रशस्तन्तु कृत्वाप्सु मासमासीत भैक्षभुक् ॥ २५५ ॥

अब्दार्द्धमिति । एनसोऽविशेषात्सर्वेष्वेव पापेषु इन्द्रमित्रं वरुणमग्निमाहुरित्येताः सप्तर्चः संवत्सरार्द्धं जपेत् अप्रशस्तं मूत्रपुरीषोत्सर्गादिकमप्सु कृत्वा मासं भैक्षभोजी भवेत् ॥ २५५ ॥

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । सुगुर्व्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम् ॥ २५६ ॥

मन्त्रैरिति । देवकृतस्येत्यादिभिः शाकलहोममन्त्रैः संवत्सरं घृतहोमं कृत्वा नम इन्द्रश्च इत्येतां वा ऋचं संवत्सरं जपित्वा महापातकमपि पापं द्विजातिरपहन्ति ॥ २५६ ॥

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुध्यति ॥ २५७ ॥

महापातकेति । ब्रह्महत्यादिमहापातकयुक्तो भिक्षाहारो वर्षमेकं संयतेन्द्रियो गवामनुगमनं कुर्वन् पावमानीरृचोऽभ्यसनमभ्यासेन जपित्वा तस्मात्पापाद्विशुद्धो भवति ॥ २५७ ॥

अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिः॥२५८॥

अरण्य इति। त्रिभिः पराकैः पूतो मन्त्रब्राह्मणात्मिकां वेदसंहितां अरण्ये वारत्रयं अभ्यस्य वा प्रयतो वाह्याभ्यन्तर शौचयुक्तः सर्व्वैर्महापातकैर्मुच्यते॥२५८॥

त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः। मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाऽघमर्षणं॥२५९॥

त्र्यहमिति। त्रिरात्रमुपवसन्संयतः प्रत्यहं प्रातर्मध्याह्न सायंकालेषु स्नानं कुर्व्वन् त्रिषवणस्नानकाल एव जले निमज्ज्य ऋतञ्च सत्यञ्चेति सूक्तमघमर्षणं त्रिरावृत्तं जपित्वा सर्व्वैः पापैर्मुच्यते तच्च गुरुलघुपापापेक्षया पुरुषशक्त्यपेक्षया वा वर्त्तनीयम्॥२५९॥

यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः।
तथाऽघमर्षणं सूक्तं सर्व्वपापापनोदनम्॥२६०॥

यथेति। यथाऽश्वमेधयागः सर्व्वयागश्रेष्ठः सर्व्वपापक्षयहेतुस्तथाऽघमर्षणसूक्तमपि सर्व्वपापक्षयहेतुरिति अघमर्षणसूक्तोत्कर्षः॥२६०॥

ऋचो यजूंषि चान्यानि सामानि विविधानि च ।
एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ २६४ ॥

त्रिवृत्त्वमेवाह ऋच इति । ऋच ऋङ्मन्त्राः यजूंषि यजुर्मन्त्राः सामानि बृहद्रथन्तरादीनि नानाप्रकाराणि चान्योन्ये नान्वयाभावात्पृथक् पृथक् मन्त्ररूपाणि एष त्रिवृद्वेदो ज्ञातव्यो य एनं वेद स वेदविद्भवति ॥ २६४ ॥

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ २६५ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां एकादशोऽध्यायः ॥

आद्यमिति । सर्ववेदानामाद्यं यद्ब्रह्म वेदसारं अकारोकारमकारात्मकत्वेन त्र्यक्षरं यत्र त्रयो वेदाः स्थिताः सोऽन्यस्त्रिवृद्वेदः प्रणवाख्यो गुह्यो गोपनीयः वेदमन्त्रश्रेष्ठत्वात् परमार्थाभिधायकत्वात् परमार्थकत्वेन धारणजपाभ्यां मोक्षहेतुत्वाच्च यस्तं स्वरूपतोऽर्थतश्च जानाति स वेदवित् । प्रायश्चित्ते बहुमुनिमतालोचनायासयोक्तं सद्व्याख्यानं बहु मुनिभिरं तद्बुध्यं गुणज्ञाः । नैतन्मेधातिथिरभिदधे नापि गोविन्दराजो व्याख्यातारो न मनुरपरे यन्मतो दुर्लभं वः ॥ २६५ ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तावेकादशोऽध्यायः ॥

## ॥ १२ द्वादशोऽध्यायः ॥

चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वयानघ ।
कर्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥ १ ॥

चातुर्वर्ण्येति । हेपापरहित ब्राह्मणादिवर्णचतुष्टयस्य सान्तरप्रभवस्यायं धर्मः त्वयोक्तः इदानीं कर्मणां शुभाशुभ फलप्राप्तिं परां जन्मान्तरप्रभवां परमार्थरूपामस्माकं ब्रूहीति महर्षयो भृगुमवोचन् ॥ १ ॥

स तानुवाच धर्मात्मा महर्षीन्मानवो भृगुः ।
अस्य सर्वस्य शृणुत कर्मयोगस्य निर्णयम् ॥ २ ॥

स तानिति । स धर्मप्रधानो मनोरपत्यं भृगुरस्य सर्वस्य कर्मसम्बन्धस्य फलनिश्चयं शृणुतेति तान्महर्षीनब्रवीत् ॥ २ ॥

शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् ।
कर्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ ३ ॥

शुभेति । मनोवाग्देहजन्यं कर्म विहितनिषिद्धरूपं सुख दुःखफलकं तज्जन्या एव मनुष्यतिर्यगादिभावेनोत्कृष्टाप

साधमापेक्षया मनुष्याणां मतयो नानाप्रकारा भवन्ति।
कर्मशब्दश्चात्र न कायचेष्टायामेव किन्तु मनोदं अश्रिवि यत्र
अरूपयोगादिध्यानाचरणादावपि क्रियामात्रे वर्त्तते॥ ३॥

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम्॥ ४॥

तस्येति। तस्य देहिसम्बन्धिनः कर्मणः उत्कृष्टमध्यमाधम
तया त्रिप्रकारस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशल
क्षणोपेतस्य मन एव प्रवर्त्तकं जानीयात्। मनसा हि सङ्कल्पि
तमुच्यते क्रियते च। तथा तैत्तिरीयोपनिषदि तस्मात् यत्
पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्मणा करोतीति।
॥ ४॥

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वित
थाभिनिवेशश्च त्रिविधं कर्म मानसम्॥ ५॥

तानि दशलक्षणानि कर्माणि दर्शयितुमाह परद्रव्येष्विति।
कथं परधनमन्यायेन गृह्णामीत्येवचिन्तनं मनसा ब्रह्मवधा
दिनिषिद्धाकाङ्क्षा नास्ति परलोकः देह एवात्मेत्येवन्त्रि
प्रकारमशुभफलं मानसङ्कर्म एतत्तथविपरीतबुद्धिस्य त्रिविधं
शुभफलं मानसं कर्म शुभाशुभफलं कर्मेत्युभयस्यैव प्रकाश
नात्॥ ५॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ ६॥

पारुष्यमिति। अप्रियाभिधानमसत्यभाषणमपरोक्षे परदूषणकथनं यच्चापि राजदेशपौरवार्त्तादेर्निःप्रयोजनं वर्णनं इत्येवञ्चतुःप्रकारमशुभफलं वाचिकं कर्म भवेत्। एतद्विपरीतं प्रियसत्यपरगुणाभिधानं श्रुतिपुराणादेश्च राजादिचरितकथनं शुभफलम्॥ ६॥

अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च शारीरं त्रिविधं स्मृतम्॥ ७॥

अदत्तानामिति। अन्यायेन परधनग्रहणमशास्त्रीयहिंसा परदारगमनमित्येवं त्रिप्रकारमशुभफलं शारीरं कर्म एतद्विपरीतं सर्वं शुभफलम्॥ ७॥

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचा वाचा कृतं कर्म कायेनैव च कायिकम्॥ ८॥

मानसमिति। मनसा यत्सुकृतं दुष्कृतं वा कर्म कृतं तत् कर्म सुखदुःखरूपमिह जन्मनि जन्मान्तरे वा मनसैवायमुप भुङ्क्ते एवं वाचा कृतं शुभाशुभं वाग्द्वारेण मधुरस्वरत्वादि.

माधमापेक्षया मनुष्याणां गतयो उत्तमाधममध्यमा भवन्ति। कर्मशब्दश्चात्र न कायचेष्टायामेव किन्तु मनोदण्डादिव स्वरूपयोगाद्ध्यानाचरणादावपि क्रियामात्रे वर्त्तते॥ ३॥

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम्॥ ४॥

तस्येति। तस्य देहिसम्बन्धिनः कर्मणः उत्तमाधममध्यमभेदेन तथा त्रिप्रकारस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशलक्षणोपेतस्य मन एव प्रवर्त्तकं जानीयात्। मनसा हि सङ्कल्पितमुच्यते क्रियते च। तथा तैत्तिरीयोपनिषदि तस्मात् यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्म्मणा करोतीति।॥ ४॥

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम्॥ ५॥

तानि दशलक्षणानि कर्माणि दर्शयितुमाह परद्रव्येष्विति। कथं परधनमन्यायेन गृह्णामीत्येवं चिन्तनं मनसा ब्रह्मवधादिनिषिद्धाकाङ्क्षा नास्ति परलोकः देह एवात्मेत्येवं त्रिः प्रकारमशुभफलं मानसं कर्म्म एतत्त्रयविपरीतबुद्धिश्च त्रिविधं शुभफलं मानसं कर्म्म शुभाशुभफलं कर्मेत्युभयस्यैव प्रक्रान्तत्वात्॥ ५॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ ६ ॥

पारुष्यमिति। अप्रियाभिधानमयथार्थभाषणमसमक्षे परदूषणकथनं चापि राजदेशपौरवार्त्तादेर्निःप्रयोजनं कथनं इत्येवञ्चतुःप्रकारमशुभफलं वाचिकं कर्म भवेत्। एतद्विपरीतं प्रियसत्यपरगुणाभिधानं श्रुतिपुराणादौ च राजादिचरितकथनं शुभफलम् ॥ ६ ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च शारीरन्त्रिविधं स्मृतम् ॥ ७ ॥

अदत्तानामिति। अन्यायेन परधनग्रहणमशास्त्रीयहिंसा परदारगमनमित्येवं त्रिप्रकारमशुभफलं शारीरं कर्म एतद्विपरीतं सर्वं शुभफलम् ॥ ७ ॥

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचा वाचा कृतङ्कर्म कायेनैव च कायिकम् ॥ ८ ॥

मानसमिति। मनसा यत्सुकृतं दुष्कृतं वा कर्म कृतवान् फलं सुखदुःखरूपमिह मनसि अन्तरात्मा वा मनसैवायमुपभुङ्क्ते एवं वाचा कृतं शुभाशुभं वाग्द्वारेण मधुरश्रवणादि

स्वदेहिना शारीरं शुभाशुभं शरीरद्वारेण कर्म्मजन्यमहि मिथोपभोग्यमयिवस्त्रादिनानुभवति तस्मात्क्रमेण शारीर मानसवाचिकानि धर्म्मरहितानि धर्म्मजनकानि च वर्जयेत् कुर्य्याच ॥ ८ ॥

शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ९ ॥

शरीरजैरिति। यद्यपि पापिष्ठानां शारीरवाचिकमानसिका न्येव त्रीणि पापानि सम्भवन्ति तथापि च यदि प्राचुर्येणाधर्म्म मेव सेवते धर्म्ममल्पमिति बाहुल्याभिप्रायेणेदं बाहुल्येना भ्यासेन शरीरकर्म्मजपापैर्युक्तः स्थावरत्वं मानुषः प्राप्नोति वाक्जेन वाकृतैः पक्षित्वं मृगत्वं वा वाक्जेन मनसा कृतेनान्त्य जातित्वं प्राप्नोति ॥ ९ ॥

वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥ १० ॥

वागिति। दमनं दण्डः वाङ्मनःकायानां दण्डाः निषिद्धा नियाकरणप्रतिषिद्धक्रियाकरणाभ्यासेन बुद्धावस्थिताः स त्रिदण्डीत्युच्यते न तु दण्डत्रयधारणमात्रेण ॥ १० ॥

त्रिदण्डमेतन्निक्षिप्य सर्व्वभूतेषु मानवः । काम
क्रोधौ तु संयम्य ततः सिद्धिं नियच्छति ॥ ११ ॥

त्रिदण्डमिति। एतत्त्रिविधं वागादीनां सर्व्वभूतविषयतया
दमनं कृत्वा एतद्गमनार्थमेव कामक्रोधौ च नियम्य ततो
मोक्षप्राप्तिलक्षणां सिद्धिं मनुष्यो लभते ॥ ११ ॥

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः
करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः ॥ १२ ॥

कोऽसौ सिद्धिमाप्नोतीत्यत आह य इति। अस्य भोग्य
चिद्रूपात्मोपकारकत्वादात्मनः शरीरस्य च यः कर्म्मसु
प्रवर्त्तयिता तं क्षेत्रज्ञं पण्डिता वदन्ति यः पुनरेव व्यापारान्
करोति शरीराख्यः स पृथिव्यादिभूतारब्धत्वात् भूतात्मेति
पण्डितैरुच्यते ॥ १२ ॥

जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनां ।
येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु ॥ १३ ॥

जीवेति। जीवसंज्ञोऽयं महत्पर: येनेति करणविभक्तिनिर्द्दे-
शात् उत्तरश्लोके च तावुभौ महत्सम्पृक्तौ महान् क्षेत्रज्ञ एव
चेति सहजत्वेन [illegible]त्वात्। शरीरक्षेत्रज्ञाभ्यामन्यः

शरीरं सात्मात्मनाद्यात्मा जीवाख्यः सर्व्वेषामङ्गानां सहैव सात्मात्मनस्त्वात्मनः तेनैव विनियोगात् येन संस्कारेन्द्रियकर्म्म तथा परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्म सुखं दुःखञ्चानु भवति ॥१३॥

तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥१४॥

तावितिं। तौ द्वौ महत्क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंसृष्टौ वक्ष्यमाणं सर्व्वलोकवेदस्मृतिपुराणादिप्रसिद्धतया तमिति निर्दिष्टं परमात्मानमुत्कृष्टापकृष्टसत्त्वेषु व्यवस्थितमाश्रित्य तिष्ठतः ॥१४॥

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः।
उच्चावचानि भूतानि सततञ्चेष्टयन्ति याः ॥१५॥

असंख्या इति। अस्य परमात्मनः शरीरादसंख्यमूर्त्तयो जीवाः क्षेत्रज्ञशब्देनानन्तरमुक्ता लिङ्गशरीरावच्छिन्ना वेदान्तोक्तप्रकारेणाग्नेरिव स्फुलिङ्गा निःसरन्ति या मूर्त्तय उत्कृष्टापकृष्टभूतानि देहरूपतया परिणतानि सर्व्वदा कर्म्मसु प्रेरयन्ति ॥१५॥

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥१६॥

पञ्चभ्य इति। पञ्चभ्य एव पृथिव्यादिभूतभागेभ्यो दुष्कृत

शरीरं यावत्कालावस्थायी जीवाख्यः सर्व्वक्षेत्रज्ञानां सहज आत्मा जन्मप्रभृति तेनैव विनियोगात् येन महताहंकारेन्द्रियरूपतया परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्म सुखं दुःखञ्चानुभवति॥१३॥

तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥१४॥

ताविति। तौ द्वौ महत्क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंपृक्तौ वक्ष्यमाणं सर्व्वलोकवेदस्मृतिपुराणादिप्रसिद्धतया तमिति निर्द्दिष्टं परमात्मानमुत्कृष्टापकृष्टसत्त्वेषु व्यवस्थितमाश्रित्य तिष्ठतः॥१४॥

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः।
उच्चावचानि भूतानि सततं चेष्टयन्ति याः॥१५॥

असंख्या इति। अस्य परमात्मनः शरीरादसंख्यमूर्त्तयो जीवाः क्षेत्रज्ञशब्देनानन्तरमुक्ता लिङ्गशरीरावच्छिन्ना देहान्तप्रकारेणाग्नेरिव स्फुलिङ्गा निःसरन्ति या मूर्त्तय उत्कृष्टापकृष्टभूतानि देहरूपतया परिणतानि सर्व्वदा कर्म्मसु प्रेरयन्ति॥१५॥

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम्॥१६॥

पञ्चभ्य इति। पञ्चभ्य एव पृथिव्यादिभूतभागेभ्यो दुष्कृत

भुक्त्वैव च पापं च विचारयतः याभ्यां धर्माधर्माभ्यां युक्तो जीवः परलोकेहलोकयोः सुखदुःखे प्राप्नोति ॥ १९ ॥

यद्याचरति धर्मं स प्रायशोऽधर्ममल्पशः ।
तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते ॥ २० ॥

यदीति। स यदि जीवो मानुषदशायां बाहुल्येन धर्ममनु तिष्ठति अल्पञ्चाधर्मं तदा तैरेव पृथिव्यादिभूतैः स्थूलशरीर रूपतया परिणतैर्युक्तः स्वर्गसुखमनुभवति ॥ २० ॥

यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः ।
तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः ॥२१॥

यदीति। यदि पुनः स जीवो मानुषदशायां बाहुल्येन पापमनुतिष्ठति अल्पञ्च पुण्यं तदा तैरेव भूतैर्मानुषदेहरूप तया परिणतैस्त्यक्तो मृतः सन्ननन्तरं पञ्चभ्य एव मात्राभ्य इत्युक्तरीत्या यातनानुभवोचितमुत्पन्नकठिनदेहो यामीः पीडा अनुभवति ॥ २१ ॥

यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः ।
तान्येव पञ्च भूतानि पुनरप्येति भागशः ॥ २२ ॥

यामीरिति स जीवो यमकारितास्ताः पीडास्तेन कठिनदेहे नानुभूय तद्भोगेनापहृतपापा तान् जरायुजादिशरीरारम्भ

तान् पृथिव्यादिभूतजातान्वितिष्ठति भागानुसारिशरीरं गृह्णा
तीत्यर्थः ॥ २२ ॥

एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा।
धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः ॥ २३ ॥

एता इति। अस्य जीवस्य एता धर्माधर्महेतुकाः स्वर्गनर
काद्युपभोगोचितस्त्रियाभिपदेशप्राप्तीरन्तःकरणे ज्ञात्वा धर्मा
नुष्ठाने मनः सदा यत्नं कुर्यात् ॥ २३ ॥

सत्त्वं रजस्तमश्चैव त्रीन्विद्यादात्मनो गुणान्।
यैर्व्याप्येमान् स्थितो भावान्महान्सर्वानशेषतः ॥२४॥

सत्त्वमिति। सत्त्वरजस्तमांसि त्रीणि वक्ष्यमाणलक्षणानि
आत्मोपकारकत्वादात्मनो महतो गुणान् जानीयात् यैर्व्याप्तो
महानिमान् स्थावरजङ्गमरूपान्पदार्थानशेषेण व्याप्य स्थितः
॥ २४ ॥

यो यदैषां गुणो देहे साकल्येनातिरिच्यते।
स तदा तद्गुणप्रायं तङ्करोति शरीरिणम् ॥ २५ ॥

य इति। यद्यपि सर्वमेवेदन्त्रिगुणं तथापि यस्य देहे एषां
गुणानां मध्ये यो गुणो यदा साकल्येनाधिको भवति तदा तद्गुण
लक्षणयुक्तं तन्देहिनं करोति ॥ २५ ॥

सत्त्वं ज्ञानन्तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्। एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः ॥ २६ ॥

सत्त्वमिति सत्त्वादीनां लक्षणमाह सत्त्वमिति। यथार्थावभासो ज्ञानं तत्सत्त्वस्य लक्षणं एतद्विपरीतमज्ञानं तत्तमोलक्षणं विषयाभिलाषं रागस्तत्कार्यं रजोलक्षणं स्वरूपन्तु सत्त्वरजस्तमसां प्रीत्यप्रीतिविषादात्मकं तथा च पठन्ति प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः एतच्चैषां स्वरूपमनन्तरश्लोके वक्ष्यति एतेषां सत्त्वादिगुणानामेतज्ज्ञानादि सर्व्वप्राणिव्यापकं लक्षणम् ॥ २६ ॥

तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्। प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥ २७ ॥

तत्रेति। तस्मिन्नात्मनि यत्संवेदनं प्रीतियुक्तं प्रत्यस्तमितक्लेशं प्रकाशरूपमनुभवेत् तत्सत्त्वं जानीयात् ॥ २७ ॥

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः। तद्रजोऽप्रतिघं विद्यात्सततं हारि देहिनाम् ॥ २८ ॥

यत्त्विति। यत् पुनः संवेदनं दुःखानुविद्धमत एव आत्मनस्तुष्टि

माधमापेक्षया मनुष्याणां गतयो ब्रह्मादिस्थावरप्राप्तयो भवन्ति। कर्मशब्दश्चात्र न कायचेष्टायामेव किन्तु ममेदं स्यादिति यत्न स्वरूपयोगादिध्यानाचरणादावपि क्रियामात्रे वर्त्तते ॥ ३ ॥

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम् ॥ ४ ॥

तस्येति। तस्य देहिसम्बन्धिनः कर्मणः उत्तमाधममध्यमभेदेन तथा त्रिप्रकारस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशलक्षणोपेतस्य मन एव प्रवर्त्तकं जानीयात्। मनसा हि सङ्कल्पितमुच्यते क्रियते च। तथा तैत्तिरीयोपनिषदि तस्मात् यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्मणा करोतीति। ॥ ४ ॥

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ ५ ॥

तानि दशलक्षणानि कर्माणि दर्शयितुमाह परद्रव्येष्विति। कथं परधनमन्यायेन गृह्णामीत्येवं चिन्तनं मनसा ब्रह्मवधादिनिषिद्धाकाङ्क्षा नास्ति परलोकः देह एवात्मेत्येवं त्रिःप्रकारमशुभफलं मानसं कर्म एतत्त्रयविपरीतबुद्धिश्च त्रिविधं शुभफलं मानसं कर्म शुभाशुभफलं कर्मेत्युभयस्यैव प्रक्रान्तत्वात् ॥ ५ ॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः । असं-
बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ ६ ॥

पारुष्यमिति । अप्रियाभिधानमसत्यभाषणमसतो वे परदू-
षणकथनं चाप्यपि राजदेशपौरवार्तादेर्निःप्रयोजनं वर्णनं
एतदेव चतुःप्रकारमशुभफलं वाचिकं कर्म भवेत् । एतद्वि-
परीतं प्रियसत्यपरगुणाभिधानं श्रुतिपुराणादौ च राजादि-
चरितकथनं शुभफलम् ॥ ६ ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥ ७ ॥

अदत्तानामिति । अन्यायेन परस्वग्रहणमशास्त्रीयहिंसा पर-
दारगमनमित्येवं त्रिप्रकारमशुभफलं शारीरं कर्म एतद्वि-
परीतं सर्वं शुभफलम् ॥ ७ ॥

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् । वाचा
वाचा कृतं कर्म कायेनैव च कायिकम् ॥ ८ ॥

मानसमिति । मनसा यत्सुकृतं दुष्कृतं वा कर्म कृतवान्
तस्य सुखदुःखरूपमिह जन्मनि जन्मान्तरे वा मनसैवायमुप-
भुङ्क्ते एवं वाचा कृतं शुभाशुभं वाग्द्वारेण मधुरश्रवणादि

मलिना शारीरं सुखासुखं शरीरादेव [illegible] भिप्रायोपभोग्यमित्यभिप्रायेणानुभवति तस्मात्प्रयत्नेन शारीर मानसवाचिकानि धर्म्मरहितानि धर्म्मजनकानि च वर्जयेत् कुर्याच्च ॥ ८ ॥

शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः । वा चिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ९ ॥

शरीरजैरिति । यद्यपि पापिष्ठानां शारीरवाचिकमानसिका न्येव त्रीणि पापानि सम्भवन्ति तथापि च यदि प्राचुर्येणाधर्म्म मेव सेवते धर्म्मजन्मनिति बाहुल्याभिप्रायेणेदं [illegible] [illegible]न शरीरकर्म्मजपापैर्मुख्यैः स्थावरत्वं मानुषः प्राप्नोति वाच केन वाक्कृतैः पक्षित्वं मृगत्वं वा वाचस्येन मनसा कृतैश्चाण्डा लादित्वं प्राप्नोति ॥ ९ ॥

वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥ १० ॥

वागिति । दमनं दण्डः वचसा मनसा कायानां दण्डाः निषिद्धा भिधानचिन्तनक्रियाप्रतिषिद्धव्यापारत्यागेन बुद्धावकस्थिताः स त्रिदण्डीत्युच्यते न तु दण्डत्रय धारणमात्रेण ॥ १० ॥

त्रिदण्डमेतन्निक्षिप्य सर्व्वभूतेषु मानवः । काम
क्रोधौ तु संयम्य ततः सिद्धिं नियच्छति ॥ ११ ॥

त्रिदण्डमिति । एतन्निविडवागादीनां सर्व्वभूतविषयत्वया
दमनं कृत्वा एतद्दमनार्थमेव कामक्रोधौ च नियम्य ततो
मोक्षावाप्तिलक्षणां सिद्धिं मनुष्यो लभते ॥ ११ ॥

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः
करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः ॥ १२ ॥

कोऽसौ सिद्धिमाप्नोतीत्यत आह य इति । अस्य क्षेत्र
ज्ञस्योपकारकस्यात्मनः शरीराख्यस्य यः कर्म्मसु
प्रवर्त्तयिता तं क्षेत्रज्ञं पण्डिता वदन्ति यः पुनरेव व्यापारान्
करोति शरीराख्यः स पृथिव्यादिभूतारब्धत्वात् भूतात्मेति
पण्डितैरुच्यते ॥ १२ ॥

जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनां ।
येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु ॥ १३ ॥

जीवेति । जीवसंज्ञोऽयं महत्पर: येनेति करणविभक्तिनिर्द्देशा
त् उत्तरश्लोके च तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव
चेति महच्छब्देन श्रवणत्वात् । शरीरेणैवाभिव्यक्तिरित्यतः

शरीरं तदात्मकत्वादात्मा जीवाख्यः सर्वक्षेत्रज्ञानां तद्व दात्मात्मलक्षणैः तेषां च विनियोगात् येनात्मसंस्कारेन्द्रियवत् तथा परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्म सुखं दुःखं चानु भवति ॥१३॥

तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥१४॥

तावितिः। तौ द्वौ महत्क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंसृष्टौ मच्छमात्रं सर्वलोकवेदस्मृतिपुराणादिप्रसिद्धत्वात् तमिति निर्दिष्टं परमात्मानमुत्कृष्टापकृष्टसत्त्वेषु व्यवस्थितमाश्रित्य तिष्ठतः ॥१४॥

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः।
उच्चावचानि भूतानि सततञ्चेष्टयन्ति याः ॥१५॥

असंख्या इति। अस्य परमात्मनः शरीरादसंख्यमूर्त्तयो जीवाः क्षेत्रज्ञशब्देनानन्तरमुक्ता लिङ्गशरीरावच्छिन्ना देहान्तरप्रकारेणाग्नेरिव स्फुलिङ्गा निःसरन्ति या मूर्त्तय उत्कृष्टापकृष्टभूतानि देहरूपतया परिणतानि सर्वदा कर्मसु प्रेरयन्ति ॥१५॥

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥१६॥

पञ्चभ्य इति। पञ्चभ्य एव पृथिव्यादिभूतभागेभ्यः दुष्कृत

भुक्तशेषञ्च पापं यदि विचारयतः यामीः धर्म्माधर्म्माभ्यां युक्तो जीवः परलोकेहलोकयोः सुखदुःखे प्राप्नोति ॥ १९ ॥

यद्याचरति धर्म्मं स प्रायशोऽधर्म्ममल्पशः ।
तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते ॥ २० ॥

यदीति। स यदि जीवो मानुषदशायाम्बाहुल्येन धर्म्ममनुतिष्ठति अल्पञ्चाधर्म्मं तदा तैरेव पृथिव्यादिभूतैः स्थूलशरीररूपतया परिणतैर्युक्तः स्वर्गसुखमनुभवति ॥ २० ॥

यदि तु प्रायशोऽधर्म्मं सेवते धर्म्ममल्पशः ।
तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः ॥ २१ ॥

यदीति। यदि पुनः स जीवो मानुषदशायां बाहुल्येन पापमनुतिष्ठति अल्पञ्च पुण्यं तदा तैरेव भूतैर्मानुषदेहरूपतया परिणतैस्त्यक्तो मृतः सन्ननन्तरं पञ्चभ्य एव मात्राभ्य इत्युक्तरीत्या यातनानुभवोचितयञ्जातकठिनदेहो यामीः पीडा अनुभवति ॥ २१ ॥

यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः ।
तान्येव पञ्च भूतानि पुनरप्येति भागशः ॥ २२ ॥

यामीरिति स जीवो यमकारितास्ताः पीडास्तेन कठिनदेहेनानुभूय तद्भोगेनापहतपाप्मा तान् जरायुजादिशरीरारम्भ

सत्त्वं ज्ञानन्तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्।
एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः॥ २६॥

सत्त्वमिति सत्त्वादीनां लक्षणमाह सत्त्वमिति। यथार्थावभासो ज्ञानं तत्सत्त्वस्य लक्षणं एतद्विपरीतमज्ञानं तत्तमोलक्षणं विषयाभिलाषं भागवकार्य्यं रजोलक्षणं स्वरूपन्तु सत्त्वरजस्तमसां प्रीत्यप्रीतिविषादात्मकं तथा च पठन्ति प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः एतच्चैषां स्वरूपमनन्तरश्लोके वक्ष्यति एतेषां सत्त्वादिगुणानामेतज्ज्ञानादि सर्व्वप्राणिव्यापकं लक्षणम्॥ २६॥

तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्। प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत्॥ २७॥

तत्रेति। तत्रात्मनि यत्संवेदनं प्रीतियुक्तं प्रत्यस्तमित क्लेशं प्रकाशरूपमनुभवेत् तत्सत्त्वं जानीयात्॥ २७॥

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः। तद्रजोऽप्रतिघं विद्यात्सततं हारि देहिनाम्॥ २८॥

यत्त्विति। यत् पुनः संवेदनं दुःखानुविद्धमत एव [illegible]

आरम्भरुचिताऽधैर्य्यमसत्कार्य्यपरिग्रहः। विष-
योपसेवा चाजस्रं राजसं गुणलक्षणम्॥ ३२॥

आरम्भेति। फलार्थकर्म्मानुष्ठानशीलता अल्पेऽप्यर्थे वैक्लव्यं
निषिद्धकर्म्माचरणं अजस्रं शब्दादिविषयोपभोग इत्येतद्रजो-
भिधानगुणस्य कार्य्यम्॥ ३२॥

लोभः स्वप्नोऽधृतिः क्रौर्य्यं नास्तिक्यं भिन्नवृत्तिता।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणं॥ ३३॥

लोभ इत्यादि। अधिकाधिकधनस्पृहा निद्रालुता कातर्य्यं
पैशुन्यं परलोकाभावबुद्धिराचारपरिलोपः याचनशीलत्वं
सम्भवेपि धर्म्मादिष्वनवधानं इत्येतत्तामसाभिधानस्य गुणस्य
लक्षणम्॥ ३३॥

त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम्।
इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम्॥ ३४॥

त्रयाणामपीति। एषां सत्त्वादीनान्त्रयाणामपि गुणानां
त्रिषु कालेषु भूतभविष्यद्वर्त्तमानेषु विद्यमानानामिदं वक्ष्य-
माणं सांक्षेपिकं क्रमेण लक्षणं ज्ञातव्यम्॥ ३४॥

यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम्॥ ३५॥

यदिति। यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्च लज्जावान् भवति कालत्रये द्वयोरन्यत्र वेति विवक्षितं तत्सर्वं तमःकार्यत्वात्त मोभिधायं गुणलक्षणं शास्त्रविदा बोद्धव्यम्॥ ३५॥

येनास्मिन् कर्मणा लोके ख्यातिमिच्छति पुष्कलाम्।
न च शोचत्यसंपत्तौ तद्विज्ञेयन्तु राजसं॥ ३६॥

येनेति। इह लोके महतीं ख्यातिमाप्तुमिच्छन्नेतदर्थमेव यो यत्कर्म करोति न परलोकार्थं न च तत्कर्मफलासम्पत्तौ दुःखी भवति तद्रजःकार्यत्वाद्रजोगुणलक्षणं विज्ञेयम्॥ ३६॥

यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन्।
येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम्॥ ३७॥

यदिति। यत्कर्म वेदार्थं सर्वात्मना ज्ञातुमिच्छति यच्च कर्माचरन् नाचरन्वेति न लज्जति येन येन कर्मणा चास्य तुष्टिर्जायते तत्सत्त्वस्य गुणस्य लक्षणं ज्ञेयम्॥ ३७॥

तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्म्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥ ३८ ॥

तमस इति । कामप्रधानता तमसो लक्षणं अर्थनिष्ठता रजसः धर्म्मप्रधानता सत्त्वस्य एषाञ्च कामादीनां उत्तरोत्तरस्य श्रेष्ठत्वं कामादर्थः श्रेयान् अर्थमूलत्वात्कामस्य ताभ्याञ्च धर्म्मः तन्मूलत्वात्तयोः ॥ ३८ ॥

येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते ।
तान्समासेन वक्ष्यामि सर्व्वस्यास्य यथाक्रमम् ॥ ३९ ॥

येनेत्यादि । एषां सत्त्वादीनां गुणानां मध्ये येन गुणेन यत्कार्य्येण या गतीर्जीवः प्राप्नोति ताः सर्व्वस्यास्य जगतः संक्षेपतः क्रमेण वक्ष्यामि ॥ ३९ ॥

देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ ४० ॥

देवत्वमिति । ये सत्त्ववृत्त्यावस्थिताः ते देवत्वं यान्ति ये तु रजोवृत्त्यवस्थिताः ते मनुष्यत्वं ये तमोवृत्तिकाः ते तिर्य्यक्त्वं इत्येषा त्रिविधा जन्मप्राप्तिः ॥ ४० ॥

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ ४४ ॥

चारणाश्चेति। चारणा नटादयः सुपर्णाः पक्षिणः छद्मना धर्मकारिणः पुरुषा राक्षसाः पिशाचाश्चेत्येषा तामसी षूत्तमा गतिः ॥ ४४ ॥

झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः। द्यूत पानप्रसक्ताश्च जघन्या राजसी गतिः ॥ ४५ ॥

झल्ला इति। झल्ला मल्लाः क्षत्रियात् व्रात्यात्सवर्णायामु त्पन्ना दशमाध्यायोक्ता ज्ञेयाः तत्र झल्ला यष्टिप्रहरणाः मल्ला बाहुयोधिनः रङ्गावतारका नटाः शस्त्रजीविद्यूतपानप्रसक्ता श्च पुरुषा अधमा राजसी गतिर्ज्ञेया ॥ ४५ ॥

राजानः क्षत्रियाश्चैव राज्ञश्चैव पुरोहिताः।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ ४६ ॥

राजान इति। राजानोऽभिषिक्ता जनपदेश्वराः तथा क्षत्रिया राजपुरोहिताश्च शास्त्रार्थकलहप्रियाश्च एषा राजसी गतिर्मध्यमा बोद्धव्या ॥ ४६ ॥

गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये।
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥ ४७ ॥

गन्धर्वा इति। गन्धर्वा गुह्यका यक्षा जातिविशेषाः पुराणादिप्रसिद्धाः ये च देवानुयायिनो विद्याधरादयः अप्सरसश्च देवगणिकाः सर्वा एतेषां राजसीमध्ये उत्कृष्टा गतिः ॥ ४७ ॥

तापसा यतयो विप्रा ये च वैमानिका गणाः।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥ ४८ ॥

तापसा इति। वानप्रस्था भिक्षवो ब्राह्मणाश्च। ये च यक्षेभ्यो व्यतिरिक्ताः पुष्पकादिविमानचारिणो नक्षत्राणि दैत्याश्चैषा सत्त्वनिमित्ताऽधमा गतिः ॥ ४८ ॥

यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥ ४९ ॥

यज्वान इति। यागशीलाः तथर्षयो देवा वेदाभिमानिन्यश्च देवता विग्रहवन्तः इतिहासप्रसिद्धाः ज्योतींषि ध्रुवादीनि वत्सरा इतिहासप्रसिद्धा विग्रहवन्तः पितरः सोमपादयः साध्याश्च देवयोनिविशेषा इत्येषा सत्त्वनिमित्ता मध्यमा गतिः ॥ ४९ ॥

ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥ ५० ॥

ब्रह्मेति । चतुर्वदनो विश्वसृजश्च मरीच्यादयः धर्मो विग्रहवान् महान् अव्यक्तञ्च सांख्यप्रसिद्धं तत्तद्वं तदधिष्ठातृदेवताद्वयमिह विवक्षितं अचेतनगुणत्वमात्रस्योत्तमसात्त्विकगतित्वानुपपत्तेः एतां चतुर्वदनाद्यात्मिकां सत्त्वनिमित्तामुत्कृष्टां गतिं पण्डिता वदन्ति ॥ ५० ॥

एष सर्व्वः समुद्दिष्टस्त्रिप्रकारस्य कर्म्मणः । त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्व्वभौतिकः ॥ ५१ ॥

एष इति । एष मनोवाक्कायरूपसाधनत्रयभेदेन त्रिः प्रकारस्य कर्म्मणः सत्त्वरजस्तमोभेदेन त्रिविधः पुनः अधम मध्यमोत्तमभेदेन त्रिविधः सर्व्वप्राणिगतः कर्म्मणो गतिविशेषः कार्त्स्न्येन सार्व्वभौतिक इत्यभिधानात् अनुक्ता अप्येव गतयो द्रष्टव्याः उक्तगतयश्च महर्षिणा ॥ ५१ ॥

इन्द्रियाणाम्प्रसङ्गेन धर्म्मस्यासेवनेन च । पापान्संयान्ति संसारानविद्वांसो नराधमाः ॥ ५२ ॥

इन्द्रियाणामिति । इन्द्रियाणां विषयेषु प्रसङ्गेन निषिद्ध

कृमिकीटपतङ्गानां विड्भुजाञ्चैव पक्षिणां। हिंस्राणाञ्चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत्॥ ५६॥

कृमीति। कृमिकीटशलभानां पुरीषभक्षाणां पक्षिणां हिंसनशीलानाञ्च व्याघ्रादीनां प्राणिनां जातिं सुरापो ब्राह्मणो गच्छति ॥ ५६॥

लूताहिसरटानाञ्च तिरश्चाञ्चाम्बुचारिणाम्। हिंस्राणाञ्च पिशाचानां स्तेनो विप्रः सहस्रशः॥ ५७॥

लूतेति। ऊर्णनाभसर्पकृकलासानां जलचराणाञ्च तिरश्चां कुम्भीरादीनां पिशाचादीनां हिंसनशीलानाञ्च योनिं सुवर्णहारी ब्राह्मणः सहस्रवारान् प्राप्नोति॥ ५७॥

तृणगुल्मलतानाञ्च क्रव्यादान्दंष्ट्रिणामपि। क्रूरकर्मकृताञ्चैव शतशो गुरुतल्पगः॥ ५८॥

तृणेति। तृणानां दूर्वादीनां गुल्मानामप्रकाण्डानां लतानां गुडूच्यादीनां आममांसभक्षिणां गृध्रादीनां दंष्ट्रिणां सिंहादीनां क्रूरकर्मप्राणिनां वधशीलानाञ्च व्याधादीनां जातिं शतवारान् प्राप्नोति गुरुदारगामी॥ ५८॥

हिंस्रा भवन्ति क्रव्यादाः कृमयोऽमेध्यभक्षिणः । परस्परादिनस्तेनाः प्रेताऽन्त्यस्त्रीनिषेविणः ॥ ५९ ॥

हिंस्रा इति । ये प्राणिवधशीलास्ते आममांसाशिनो मार्जारादयो भवन्ति अभक्ष्यभक्षिणो ये ते कृमयो जायन्ते ये महापातकिव्यतिरिक्ताश्चौरास्ते परस्परं मांसखादिनो भवन्ति। ये चाण्डालादिस्त्रीगामिनः ते प्रेताख्याः प्राणिविशेषा जायन्ते प्रेतान्त्यस्त्रीनिषेविण इति छन्दःसमासान्तात् ऋतीनां सर्वे विधयः छन्दस्यपि विकल्प्यन्ते इति विसर्गलोपे च यत्वलोपे च सवर्णदीर्घः ॥ ५८ ॥

संयोगं पतितैर्गत्वा परस्यैव च योषितम् । अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥ ६० ॥

संयोगमिति। यावत्कालीयपतितसंयोगेन पतितो भवति तावत्कालमुग्रयाजनादिभिस्तद्वर्गैः सह संसर्गं कृत्वा परदारांश्च गत्वा ब्राह्मणसुवर्णेतरधनमपहृत्य एकैकपापकरणेन ब्रह्मराक्षसो भूतविशेषो भवति ॥ ६० ॥

मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः । विविधानि च रत्नानि जायते हेमकर्तृषु ॥ ६१ ॥

मणीति । मणीन् माणिक्यादीन् मुक्ताविद्रुमौ च नानावि

यानि च रत्नानि वैदूर्य्यहीरकादीनि लोभेन हृतानीव प्रमादिना सुवर्णकारयोनौ जायते केचित्तु हेमकारपक्षि व्याचक्षते ॥ ६१ ॥

धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः ।
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ ६२ ॥

धान्यमिति । धान्यमपहृत्य मूषिको भवति कांस्यं हृत्वा हंसः जलं हृत्वा प्लवाख्यः पक्षी माक्षिकं हृत्वा दंशः क्षीरं हृत्वा काकः विशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादि रसं हृत्वा श्वा भवति घृतं हृत्वा नकुलो भवति ॥ ६२ ॥

मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः । चीरी वाकस्तु लवणं बलाका शकुनिर्दधि ॥ ६३ ॥

मांसमिति । मांसं हृत्वा गृध्रो भवति वपां हृत्वा मद्गुनामा जलचरः पक्षी भवति तैलं हृत्वा तैलपायिकाख्यः पक्षी लवणं हृत्वा चीरीवाकाख्य उच्चैःस्वरः कीटः दधि हृत्वा बलाकाख्यः पक्षी जायते ॥ ६३ ॥

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः । कार्प्पा सतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४ ॥

कौशेयमिति । कीटकोषनिर्म्मितं वस्त्रं हृत्वा तित्तिरिनामा

हृत्वा मद्गुको भवति पानार्थमुदकं हृत्वा चातकाख्यः पक्षी यानानि शकटादीनि हृत्वा उष्ट्रो भवति। पशूनां उक्तेतरान् हृत्वा छागो भवति॥ ६७॥

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः॥ ६८॥

यद्वेति। यत्किञ्चिदसारमपि परद्रव्यमिच्छातो मानुषो ऽपहृत्य पुरोडाशादिकन्तु हविरहुतभक्षा निश्चितं तिर्य्यक्त्वं प्राप्नोति॥ ६८॥

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः। एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः॥६९॥

स्त्रियोपीति। स्त्रियोऽप्येतेन प्रकारेण इच्छातः परस्वमपहृत्य पापं प्राप्नुवन्ति तेन पापेन उक्तानां जन्तूनां भार्य्यात्वमुपयान्ति॥ ६९॥

स्वेभ्यः स्वेभ्यस्तु कर्म्मभ्यश्च्युता वर्णा ह्यनापदि। पापान्संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु॥७०॥

एवं निषिद्धाचरणफलान्यभिधाय अधुना विहिताकरणफलविपाकमाह स्वेभ्य इति। ब्राह्मणादयश्चत्वारो वर्णा आपदं

यथा यथा निषेवन्ते विषयान्विषयात्मकाः ।
तथा तथा कुशलता तेषान्तेषूपजायते ॥ ७३ ॥

यथेति । यथा यथा शब्दादिविषयाभिलषणोऽनुपजितात्मं सेवन्ते तथा तथा विषयेष्वेव तेषां प्रावीण्यमुपजायतेति ॥ ७३ ॥

तेऽभ्यासात्कर्म्मणान्तेषाम्पापानामल्पबुद्धयः ।
सम्प्राप्नुवन्ति दुःखानि तासु तास्विह योनिषु ॥७४॥

ततस्त इति । तेऽल्पधियस्तेषां निषिद्धविषयोपभोगानामभ्यास तारतम्यात्तासु तासु गर्हितगर्हिततरगर्हिततमासु तिर्य्यगादियोनिषु दुःखमनुभवन्ति ॥ ७४ ॥

तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम् ।
असिपत्रवनादीनि बन्धनच्छेदनानि च ॥७५॥

तामिस्रादिष्विति । सम्प्राप्नुवन्तीति पूर्व्वश्लोकस्थमिहा त्र चानुवर्त्तते तामिस्रादिषु चतुर्थाध्यायोक्तेषु घोरेषु नरकेषु दुःखानुभवं प्राप्नुवन्ति तथाऽसिपत्रवनादीनि बन्धनच्छेदनात्मकान् नरकान् प्राप्नुवन्ति ॥ ७५ ॥

विविधाश्चैव सम्पीडाः काकोलूकैश्च भक्षणं । कर म्भवालुकातापान् कुम्भीपाकांश्च दारुणान् ॥ ७६ ॥

विविधा इति । विविधपीडनं काकादीर्भक्षणं तथा तप्तवा लुकादीन् कुम्भीपाकादींश्च नरकान् दारुणान् प्राप्नुवन्ति ॥ ७६ ॥

सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः । शीता तपाभिघातांश्च विविधानि भयानि च ॥ ७७ ॥

सम्भवांश्चेति । सम्भवान् तिर्यगादियोनिषु नित्यं दुःखबहु लासूत्पत्तिमाप्नुवन्ति तथ शीतातपादिपीडनादिनानाभया नि च प्राप्नुवन्ति ॥ ७७ ॥

असकृद्गर्भवासेषु वासञ्जन्म च दारुणम् । बन्ध नानि च काष्ठानि परप्रेष्यत्वमेव च ॥ ७८ ॥

असकृदिति । पुनः पुनर्गर्भवासेषु वासः समुत्पत्तिश्च योनि यन्त्रादिभिर्दुःखावहा जन्मनश्च शृङ्खलादिभिर्बन्धनादि पीडाजननमपि परदासत्वञ्च प्राप्नुवन्ति ॥ ७८ ॥

बन्धुप्रियवियोगांश्च संवासञ्चैव दुर्जनैः। द्रव्यार्जनञ्च नाशञ्च मित्रामित्रस्य चार्जनं ॥ ७९ ॥

बन्धुप्रियेति। बान्धवैः सुहृद्भिः सह वियोगान् दुर्जनैश्च सह एकत्रावस्थानं धनार्जनप्रयासं धनविनाशदुःखं मित्रार्जनं शत्रुप्रादुर्भावं प्राप्नुवन्ति च ॥ ७९ ॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम्। क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥ ८० ॥

जरामिति। जरां चाविद्यमानप्रतीकारां व्याधिभिश्चोपपीडनं क्षुत्पिपासादिकांश्च नानाप्रकारान् क्लेशान्मृत्युञ्च दुर्वारं प्राप्नुवन्ति ॥ ८० ॥

यादृशेन तु भावेन यद्यत्कर्म निषेवते। तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ८१ ॥

यादृशेनेति। यथाविधेन सात्त्विकेन राजसेन तामसेन वा चेतसा यद्यत्कर्म स्नानदानयोगाद्यनुतिष्ठति तादृशेनैव शरीरेण सत्त्वाधिकेन रजोधिकेन तमोधिकेन वा तत्तत् स्नानदानादि फलमुपभुङ्क्ते ॥ ८१ ॥

एष सर्व्वः समुद्दिष्टः कर्म्मणां वः फलोदयः ।
निःश्रेयसकरङ्कर्म्म विप्रस्येदन्निबोधत ॥ ८२ ॥

एषइति । एष शुभाशुभमिश्रितप्रतिषिद्धानां कर्म्मणां सर्व्वः फलोदय उक्तः इदानीं ब्राह्मणस्य निःश्रेयसाय मोक्षाय हितं कर्म्मानुष्ठानं इदं वक्ष्यमाणं शृणुत ॥ ८२ ॥

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरम्परम् ॥ ८३ ॥

वेदाभ्यास इति । जपविचारादैर्वेदस्य यत्नतोऽर्थतश्चाभ्यासः तपः कृच्छ्रादि ज्ञानं ब्रह्मविषयं इन्द्रियसंयमोऽविहितहिंसावर्ज्जनं गुरुशुश्रूषेत्येतत्सर्व्वं मोक्षसाधनम् ॥ ८३ ॥

सर्व्वेषामपि चैतेषां शुभानामिह कर्म्मणाम् ।
किञ्चित् श्रेयस्करतरं कर्म्मोक्तं पूरुषम्प्रति ॥ ८४ ॥

सर्व्वेषामिति । सर्व्वेषामप्येतेषां वेदाभ्यासादीनां शुभकर्म्मणां मध्ये किञ्चित्कर्म्मातिशयेन मोक्षसाधनं स्यादिति वितर्कें ऋषीणां जिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह ॥ ८४ ॥

सर्व्वेषामपि चैतेषामात्मज्ञानम्परं स्मृतम्। तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतन्ततः॥ ८५॥

सर्व्वेषामिति। एषां वेदाभ्यासादीनां सर्व्वेषामपि मध्ये उपनिषदुक्तपरमात्मज्ञानं प्रकृष्टं स्मृतं यस्मात्सर्व्वविद्यानां प्रधानम्। अत्रैव हेतुमाह यतो मोक्षस्तस्मात्प्राप्यते॥ ८५॥

षण्णामेषान्तु सर्व्वेषां कर्म्मणां प्रेत्य चेह च। श्रेयस्करतरं ज्ञेयं सर्व्वदा कर्म्म वैदिकम्॥ ८६॥

षण्णामिति। एषां पुनः षण्णां पूर्व्वोक्तानां वेदाभ्यासादीनां कर्म्मणां मध्ये वैदिककर्म्म परमात्मज्ञानमैहिकामुष्मिकश्रेयस्करतरं ज्ञातव्यं पूर्व्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तं इह तु ऐहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यते इत्यपौनरुक्त्यं तथाहि प्रतीकोपासनानां ब्रह्मणोहर्षं नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति। गोविन्दराजस्तु एषां पूर्व्वोक्तानां वेदाभ्यासादीनां षण्णां कर्म्मणां मध्यात्कर्म्मान्तरं कर्म्मापेक्षया वैदिककर्म्म सर्व्वमिहलोके परलोके चातिशयेन कीर्त्तिस्वर्गादिश्रेयःसाधनं ज्ञेयमिति व्याख्यातवान्। तदयुक्तं वेदाभ्यासादीनां षण्णामपि प्रत्येकं श्रुतिविहितत्वात् तेषां मध्ये

सार्वात्म्येनैव विशिष्टं विशिष्य नेति न सम्भवति तत्त्व कर्म निर्द्धारणे षष्ठी। तथाद्यपक्षेऽपि व्याख्या ॥ ८६ ॥

वैदिके कर्म्मयोगे तु सर्व्वाण्येतान्यशेषतः ।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ ॥ ८७ ॥

इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्य स्तौति वैदिक इति। वैदिके पुनः कर्मयोगे परमात्मोपासनारूपे सर्व्वाण्येतानि पूर्व्वोक्तानि ऐहिकामुष्मिकश्रेयांसि तस्मिंस्तस्मिन् उपासनाविधौ क्रमशः सम्भवन्ति। अथ वा सर्वाण्येतानीति वेदाभ्यासादीन्येव परामृश्यन्ते परमात्मज्ञाने वेदाभ्यासादीनि तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसानशकेनेतिश्रुतिविहितान्यत्रैवान्तर्भवन्ति ॥ ८७ ॥

सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च। प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकम् ॥ ८८ ॥

सुखेति। वैदिककर्माच ज्योतिष्टोमादि प्रतीकोपासनादि च इहलोके स्वर्गादिसुखप्राप्तिकरं संसारप्रवृत्तिहेतुत्वात् प्रवृत्ताख्यं वैदिकं कर्म तथा निःश्रेयसं मोक्षस्तदर्थं कर्म नैःश्रेयसिकं संसारनिवृत्तिहेतुत्वात् निवृत्ताख्यमित्येवं वैदिकं कर्म द्विप्रकारं वेदितव्यं ॥ ८८ ॥

णानि च रत्नानि वैदूर्यस्फटिकादीनि लोभेन हृत्वाऽपि अप्रमादिना सुवर्णकारयोनौ जायते केचित्तु हेमकारपक्षि णमाचक्षते ॥ ६१ ॥

धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः।
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ ६२ ॥

धान्यमिति। धान्यमपहृत्य मूषिको भवति कांस्यं हृत्वा हंसः जलं हृत्वा प्लवाख्यः पक्षी माक्षिकं हृत्वा दंशः क्षीरं हृत्वा काकः विशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादि रसं हृत्वा श्वा भवति घृतं हृत्वा नकुलो भवति ॥ ६२ ॥

मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः। चीरी वाकस्तु लवणं बलाका शकुनिर्दधि ॥ ६३ ॥

मांसमिति। मांसं हृत्वा गृध्रो भवति वपां हृत्वा मद्गुनामा जलचरः पक्षी भवति तैलं हृत्वा तैलपायिकाख्यः पक्षी लवणं हृत्वा चीरीवाकाख्य उच्चैःस्वरः कीटः दधि हृत्वा बलाकाख्यः पक्षी जायते ॥ ६३ ॥

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः। कार्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४ ॥

कौशेयमिति। कीटकोषनिर्मितं वस्त्रं हृत्वा तित्तिरिनामा

णानि च रत्नानि वैदूर्यहीरकादीनि लोभेन हत्वानेक प्रमादिना सुवर्णकारयोनौ जायते केचित्तु हेमकारपचि णमाचचते ॥ ६१ ॥

धान्यं हत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः।
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ ६२ ॥

धान्यमिति। धान्यमपहृत्य मूषिको भवति कांस्यं हृत्वा हंसः जलं हृत्वा प्लवाख्यः पक्षी माक्षिकं हृत्वा दंशः क्षीरं हृत्वा काकः विशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादि रसं हृत्वा श्वा भवति घृतं हृत्वा नकुलो भवति ॥ ६२ ॥

मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः। चीरी वाकस्तु लवणं बलाका शकुनिर्दधि ॥ ६३ ॥

मांसमिति। मांसं हृत्वा गृध्रो भवति वपां हृत्वा मद्गुनामा जलचरः पक्षी भवति तैलं हृत्वा तैलपायिकाख्यः पक्षी लवणं हृत्वा चीरीवाकाख्य उच्चैःस्वरः कीटः दधि हृत्वा बलाकाख्यः पक्षी जायते ॥ ६३ ॥

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः। कार्पा सतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४ ॥

कौशेयमिति। कीटकोषनिर्मितं वस्त्रं हृत्वा तित्तिरिनामा

पक्षी भवति तैलपक्वं भक्ष्यं हृत्वा मण्डूकः चर्मचषकं पटं हृत्वा क्रौञ्चाख्यः प्राणी गां हृत्वा गोधा गुडं हृत्वा वाल्गुदनामा मद्गुनिर्भवति ॥ ६४ ॥

छुच्छुन्दरिः शुभान् गन्धान् पत्रशाकन्तु बर्हिणः ।
श्वाविच्छृतान्नं विविधमकृतान्नन्तु शल्लकः ॥ ६५ ॥

छुच्छुन्दरिरिति । शुभगन्धिद्रव्याणि कर्पूरादीनि हृत्वा छुच्छुन्दरिर्भवति वास्तूकादिपत्रशाकं हृत्वा मयूरः सिद्धान्नमोदकमण्डकादि नानाप्रकारकं हृत्वा श्वाविधाख्यः प्राणी भवति अकृतान्नन्तु व्रीहियवादिकं हृत्वा शल्लकसंज्ञो जायते ॥ ६५ ॥

बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् ।
रक्तानि हृत्वा वासांसि जायते जीवजीवकः ॥ ६६ ॥

बक इति । अग्निं हृत्वा बकपक्षी जायते गृहोपयोगीनि सम्मार्जन्यादि हृत्वा भित्त्यादिषु मृत्तिकादिगृहकारी च कीटो भवति कुसुम्भादिरक्तानि वासांसि हृत्वा चकोराख्यः पक्षी जायते ॥ ६६ ॥

वृको मृगेभं व्याघ्रोऽश्वं फलमूलन्तु मर्कटः ।
स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः ॥ ६७ ॥

वृक इति । मृगं हस्तिनं वा हृत्वा वृकाख्यो हिंस्रपशुर्भवति घोटकं हृत्वा व्याघ्रो भवति फलमूलं हृत्वा मर्कटो भवति स्त्रियं

हृत्वा मद्गुको भवति पानार्थमुदकं हृत्वा चातकाख्यः पक्षी यानानि शकटादीनि हृत्वा उष्ट्रो भवति। पशून् उक्तेतरान् हृत्वा छागो भवति॥६७॥

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः॥६८॥

यद्वेति। यत्किञ्चिदसारमपि परद्रव्यमिच्छातो मानुषोऽपहृत्य पुरोडाशादिकन्तु हविरहुतमत्त्वा निश्चितं तिर्य्यक्त्वं प्राप्नोति॥६८॥

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः। एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः॥६९॥

स्त्रियोपीति। स्त्रियोऽप्येतेन प्रकारेण इच्छातः परस्वमपहृत्य पापं प्राप्नुवन्ति तेन पापेन उक्तानां जन्तूनां भार्य्यात्वमुपपद्यन्ते॥६९॥

स्वेभ्यः स्वेभ्यस्तु कर्म्मभ्यश्च्युता वर्णा ह्यनापदि। पापान्संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु॥७०॥

एवं निषिद्धाचरणफलान्यभिधाय अधुना विहिताकरण फलविपाकमाह स्वेभ्य इति। ब्राह्मणादयश्चत्वारो वर्णा आपदं

विना स्वस्वविहितकर्मत्यागिनो वर्णास्त्रयः कुत्सिता योनीः प्राप्य तस्मै जन्मान्तरे शत्रुदासत्वं प्राप्नुवन्ति ॥ ७० ॥

वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्च्युतः ।
अमेध्यकुणपाशी च क्षत्रियः कटपूतनः ॥७१॥

वान्ताशीति । ब्राह्मणः स्वकर्मभ्रष्टश्छर्दितभुक् उल्कामुखः प्रेतविशेषो जायते । क्षत्रियः पुनर्नष्टकर्मा पुरीषशवभोजी कटपूतनाख्यः प्रेतविशेषो भवति ॥ ७१ ॥

मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् ।
चैलाशकश्च भवति शूद्रो धर्मात्स्वकाच्च्युतः ॥ ७२ ॥

मैत्रेति । वैश्यो भ्रष्टकर्मा मैत्राक्षज्योतिकनामा पूयभक्षः प्रेतो जन्मान्तरे भवति मित्रदेवताकमक्षीव पायुरुच्यते तत्र ज्योतिर्यस्य स मैत्राक्षज्योतिकः पृषोदरादित्वात् ज्योतिषः षकारलोपः शूद्रः पुनर्भ्रष्टकर्मा चैलाशकाख्यः प्रेतो भवति चैलं वस्त्रं तत्स्थमलिनीं यूकामश्नातीति चैलाशकः । गोविन्दराजस्तु चैलाशकाख्यः कीटश्चैव स्मृयते तद्भवनञ्च भवतीत्याह । तदयुक्तं प्रेताख्यप्राणिविशेषप्रकरणात् ॥७२॥

यथा यथा निषेवन्ते विषयान्विषयात्मकाः ।
तथा तथा कुशलता तेषां तेषूपजायते ॥ ७३ ॥

यथेति । यथा यथा शब्दादिविषयान्विषयलोलुपा नितान्तं सेवन्ते तथा तथा विषयेष्वेव तेषां नैपुण्यं भवतीति ॥ ७३ ॥

तेऽभ्यासात्कर्म्मणां तेषां पापानामल्पबुद्धयः ।
सम्प्राप्नुवन्ति दुःखानि तासु तास्विह योनिषु ॥७४॥

ततस्त इति । तेऽल्पधियस्तेषां निषिद्धविषयोपभोगानामभ्यासतारतम्यात्तासु तासु गर्हितगर्हिततरगर्हिततमासु तिर्य्यगादियोनिषु दुःखमनुभवन्ति ॥ ७४ ॥

तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम् ।
असिपत्रवनादीनि बन्धनच्छेदनानि च ॥७५॥

तामिस्रादिष्विति । सम्प्राप्नुवन्तीति पूर्व्वश्लोकस्थमिहानुवर्त्तते तामिस्रादिषु चतुर्थाध्यायोक्तेषु घोरेषु नरकेषु दुःखानुभवं प्राप्नुवन्ति तथाऽसिपत्रवनादीनि बन्धनच्छेदनात्मकान् नरकान् प्राप्नुवन्ति ॥ ७५ ॥

विविधाश्चैव संपीडाः काकोलूकैश्च भक्षणं। करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्॥ ७६॥

विविधा इति। विविधपीडनं काकादिभिर्भक्षणं तथा तप्तवालुकादीन् कुम्भीपाकादींश्च नरकान् दारुणान् प्राप्नुवन्ति ॥ ७६॥

सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः। शीतातपाभिघातांश्च विविधानि भयानि च॥ ७७॥

सम्भवांश्चेति। सम्भवान् तिर्य्यगादियोनिषु नित्यं दुःखबहुलासूत्पत्तिमाप्नुवन्ति तथ शीतातपादिपीडनादिनानाभयानि च प्राप्नुवन्ति॥ ७७॥

असकृद्गर्भवासेषु वासं जन्म च दारुणम्। बन्धनानि च कष्टानि परप्रेष्यत्वमेव च॥ ७८॥

असकृदिति। पुनः पुनर्गर्भवासेषु वासः समुत्पत्तिश्च योनियन्त्रनिर्गमदुःखावहा उत्पन्नाश्च शृङ्खलादिभिर्बन्धनादिपीडामनुभवन्ति परदासत्वञ्च प्राप्नुवन्ति॥ ७८॥

बन्धुप्रियवियोगांश्च संवासञ्चैव दुर्ज्जनैः। द्रव्या
र्ज्जनञ्च नाशञ्च मित्रामित्रस्य चार्ज्जनं॥ ७९॥

बन्धुप्रियेति। बान्धवैः सुहृद्भिः सह वियोगान् दुर्ज्जनैश्च
सह एकत्रावस्थानं धनार्ज्जनप्रयासं धनविनाशदुःखं मित्रा
र्ज्जनं शत्रुप्रादुर्भावं प्राप्नुवन्ति च॥ ७९॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम्। क्ले
शांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्ज्जयम्॥ ८०॥

जरामिति। जरां चाविद्यमानप्रतीकारां व्याधिभिश्चोप
पीडनं क्षुत्पिपासादिकांश्च नानाप्रकारान् क्लेशान्मृत्युञ्च दुर्ज्ज
यं प्राप्नुवन्ति॥ ८०॥

यादृशेन तु भावेन यद्यत्कर्म्म निषेवते। ताद
शेन शरीरेण तत्तत्फलमुपाश्नुते॥ ८१॥

यादृशेनेति। यथाविधेन सात्त्विकेन राजसेन तामसेन वा
चेतसा यद्यत्कर्म्म स्नानदानयोगाद्यनुतिष्ठति तादृशेनैव शरी
रेण सत्त्वाधिकेन रजोधिकेन तमोधिकेन वा तत्तत् स्नान
दानादि फलमुपभुङ्क्ते॥ ८१॥

एष सर्व्वः समुद्दिष्टः कर्म्मणां वः फलोदयः ।
निःश्रेयसकरङ्कर्म्म विप्रस्येदन्निबोधत ॥ ८२ ॥

एषइति । एष युष्माकं विहितप्रतिषिद्धानां कर्म्मणां सर्व्वः फलोदय उक्त इदानीं ब्राह्मणस्य नैःश्रेयसाय मोक्षाय हितं कर्म्मानुष्ठानं इदं वक्ष्यमाणं शृणुत ॥ ८२ ॥

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरम्परम् ॥ ८३ ॥

वेदाभ्यास इति । उपनिषदादेर्व्वेदस्य यत्नतोऽर्थतश्चावर्त्तनं तपः कृच्छ्रादि ज्ञानं ब्रह्मविषयं इन्द्रियजयोऽविहितहिंसावर्ज्जनं गुरुशुश्रूषेत्येतत्प्रकृष्टं मोक्षसाधनम् ॥ ८३ ॥

सर्व्वेषामपि चैतेषां शुभानामिह कर्म्मणाम् ।
किञ्चित् श्रेयस्करतरं कर्म्मोक्तं पूरुषम्प्रति ॥ ८४ ॥

सर्व्वेषामिति । सर्व्वेषामप्येतेषां वेदाभ्यासादीनां शुभकर्म्मणां मध्ये किञ्चित्कर्म्मातिशयेन मोक्षसाधनं स्यादिति विप्रर्षीणां जिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह ॥ ८४ ॥

सर्व्वेषामपि चैतेषामात्मज्ञानम्परं स्मृतम्। तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतन्ततः॥ ८५॥

सर्व्वेषामिति। एषां वेदाभ्यासादीनां सर्व्वेषामपि मध्ये उपनिषदुक्तपरमात्मज्ञानं प्रकृष्टं स्मृतं यस्मात्सर्व्वविद्यानां प्रधानम्। अत्रैव हेतुमाह यतो मोक्षस्तस्मात्प्राप्यते॥ ८५॥

षण्णामेषान्तु सर्व्वेषां कर्म्मणां प्रेत्य चेह च। श्रेयस्करतरं ज्ञेयं सर्व्वदा कर्म्म वैदिकम्॥ ८६॥

षण्णामिति। एषां पुनः षण्णां पूर्व्वोक्तानां वेदाभ्यासादीनां कर्म्मणां मध्ये वैदिकङ्कर्म्म परमात्मज्ञानमैहिकामुष्मिकश्रेयस्करतरं ज्ञातव्यं पूर्व्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तं इह तु ऐहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यते इत्यपौनरुक्त्यं तथाहि प्रतीकोपासनानां ब्रह्मणोहर्यं नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति। गोविन्दराजस्तु एषां पूर्व्वोक्तानां वेदाभ्यासादीनां षण्णां कर्म्मणां मध्यात्सम्यक्तं कर्म्म अन्यथा वैदिकङ्कर्म्म सर्व्वमिहलोके परलोके चातिशयेन कीर्त्ति स्वर्गादिश्रेयःसाधनं ज्ञेयमिति व्याख्यातवान्। तदयुक्तं वेदाभ्यासादीनां षण्णामपि प्रत्येकं श्रुतिविहितत्वात् तेषां मध्ये

ज्ञानोपेयत्वात् किञ्चिदेवं किञ्चित् नेति न सम्भवति तत्र सर्व निर्द्धारणे षष्ठी। तथाच यथोक्तैव व्याख्या।॥ ८६॥

वैदिके कर्म्मयोगे तु सर्व्वाण्येतान्यशेषतः।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ॥८७॥

इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्य स्पष्टयति वैदिक इति। वैदिके पुनः कर्म्मयोगे परमात्मोपासनारूपे सर्व्वाण्येतानि पूर्व्वोक्तानि ऐहिकामुष्मिकश्रेयांसि तस्मिंस्तस्मिन् उपासनाविधौ क्रमशः सम्भवन्ति। अथ वा सर्व्वाण्येतानीति वेदाभ्यासादीन्येव परामृशन्ती परमात्मज्ञाने वेदाभ्यासादीनि तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतिविहिताङ्गत्वेनान्तर्भवन्ति॥ ८७॥

सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च। प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकम्॥ ८८॥

सुखेति। वैदिककर्म्माच ज्योतिष्टोमादि ब्रह्मोपासनादि च स्वर्गादिसुखप्राप्तिकरं संसारप्रवृत्तिहेतुत्वात् प्रवृत्ताख्यं वैदिकं कर्म्म तथा निःश्रेयसं मोक्षस्तदर्थं कर्म्म नैःश्रेयसिकं संसारनिवृत्तिहेतुत्वात् निवृत्ताख्यमित्येवं वैदिकं कर्म्म द्विप्रकारकं वेदितव्यं॥ ८८॥

इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते ॥ ८९ ॥

एतदेव स्पष्टयति इहेति । इह काम्यसाधनं वृष्टिहेतुकारीरीयागादि परत्र स्वर्गादिफलसाधनं ज्योतिष्टोमादि यत् कामनया क्रियते तत्संसारप्रवृत्तिहेतुत्वात् प्रवृत्तमित्युच्यते दृष्टादृष्टफलकामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्व्वकं संसारनिवृत्तिहेतुत्वात् निवृत्तमित्युच्यते ॥ ८९ ॥

प्रवृत्तं कर्म्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९० ॥

प्रवृत्तमिति । प्रवृत्तकर्माभ्यासेन देवसमानगतिकं तत् फलं कर्मणा प्राप्नोति एतच्च प्रदर्शनार्थमन्यफलकेन कर्मणा प्रवृत्तेन फलान्तरमपि प्राप्नोति निवृत्तकर्माभ्यासेन पुनः शरीरारम्भकाणि पञ्चभूतानि अतिक्रामति मोक्षमाप्नोतीत्यर्थः ॥ ९० ॥

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥

सर्व्वेति सर्व्वभूतेषु स्थावरजङ्गमात्मकेषु चरमेवात्मरूपे चात्मनि सर्व्वाणि भूतानि परमात्मपरिणामविज्ञानि मन्येव पर

मात्मन्यवस्थित इति समदर्शी सन्नात्मयाजी ब्रह्मार्पणन्यायेन ज्योतिष्टोमादि कुर्वन् येन राजते प्रकाशत इति स्वराट् ब्रह्म, तस्य भावः स्वाराज्यं ब्रह्मत्वं लभते मोक्षमाप्नोतीत्यर्थः। तथा च श्रुतिः सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। तथा च यजुर्वेदमन्त्रः। यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ ९१॥

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्॥ ९२॥

यथेति। शास्त्रचोदितान्यप्यग्निहोत्रादीनि कर्माणि परित्यज्य ब्रह्मज्ञानेन्द्रियजयप्रणवोपनिषदादिवेदाभ्यासेषु ब्राह्मणो यत्नं कुर्यात् एतच्चैषां मोक्षोपायानामत्यन्तोपकारकत्वप्रदर्शनार्थं न त्वग्निहोत्रादिपरित्यागपरतयेत्युक्तम्॥ ९२॥

एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः। प्राप्यै-
तत्कृतकृत्यो हि द्विजो भवति नान्यथा॥ ९३॥

एतदिति। एतदात्मज्ञानवेदाभ्यासादि हि यस्माज्जन्मसाफल्यकारकत्वात् जन्मनः साफल्यं विशेषेण ब्राह्मणस्य यस्मादेतत्प्राप्य द्विजातिः कृतकृत्यो भवति न प्रकारान्तरेण॥ ९३॥

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्। अश
क्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः॥ ९४॥

इदानीं वेदादेव धर्म्मो ज्ञातव्यमिति प्रदर्शयितुं वेदप्रशंसा
माह पितृदेवेति। पितृदेवमनुष्याणां हव्यकव्यान्नदानेषु वेद
एव चक्षुरिव चक्षुरनश्वरत्वात् प्रमाणलाद्दृष्टफलकर्म
दानादौ प्रमाणान्तरानवकाशात्। अशक्यञ्च वेदशास्त्रं कर्त्तुं
मशक्यं अनेनापौरुषेयतोक्ता। अप्रमेयञ्च मीमांसादिन्यायनि
रपेक्षतया अनवगम्यमानप्रमेयमेवं व्यवस्था। ततश्च मीमांसया
व्याकरणाद्यङ्गैश्च कर्म्मब्रह्मात्मकं वेदार्थं जानीयादिति विव
क्षितम्॥ ९४॥

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वा
स्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ ९५॥

यावेदबाह्या इति। याः स्मृतयः वेदमूला न भवन्ति
दृष्टार्थकल्पनानि चैत्यवन्दनात्स्वर्गो भवतीत्यादीनि यानि
चासत्तर्कमूलानि देवताऽपूर्व्वादिनिराकरणात्मकानि वेदविरु
द्धानि चार्व्वाकदर्शनानि सर्व्वाणि परलोके निष्फलानि
तमोनरकफलानि तानि मन्वादिभिः स्मृतानि॥ ९५॥

उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।
तान्यर्व्वाक्कालिकतया निष्फलान्यनृतानि च ॥९६॥

एतदेव स्पष्टयति उत्पद्यन्त इति। यान्यतो वेदादन्यमूलानि कानिचित् शास्त्राणि पौरुषेयत्वात् उत्पद्यन्ते एवमाशु विनश्यन्ति तानि च इदानीन्तनत्वान्निष्फलानि असत्यरूपाणि च। स्मृत्यादीनान्तु वेदमूलत्वादेव प्रामाण्यम्। ९६ ॥

चातुर्व्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यञ्च सर्व्वं वेदात्प्रसिध्यति ॥९७॥

चातुर्वर्ण्यमिति। ब्राह्मणोऽस्य मुखमासीदित्यादिवेदादेव चातुर्वर्ण्यं प्रसिध्यति ब्राह्मणीभूतमाम्नायिकज्ञानितत्त्वमपि तदुपजीवि तथा स्वर्गादिलोकोऽपि वेदादेव प्रसिद्धः एवमाश्रमाश्चत्वारो वेदमूलत्वाद्वेदादेव प्रसिध्यन्ति त्रिकालज्ञा च त्रिविधमतीतं वर्त्तमानमविष्यत्तत् सर्व्वमपि प्रास्ताहुतिः सम्यगित्यादिनावेव वेदादेव प्रसिध्यति ॥ ९७ ॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। वेदा
देव प्रसूयन्ते प्रसूतिर्गुणकर्म्मतः ॥ ९८ ॥

शब्द इति। य इह लोके परलोके च शब्दादयो विषयाः

उपयुज्यन्ते प्रसूयन्त एतैरिति प्रसूतयः प्रसूतयस्ते गुणा इति भवरजस्तमोरूपाः तन्निबन्धनवैदिककर्म्महेतुत्वात् वेदादेव प्रसिध्यन्ति ॥ ९८ ॥

विभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम्।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्॥ ९९ ॥

विभर्त्तीति। वेदशास्त्रं नित्यं सर्व्वभूतानि धारयति तथा च अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः इति तेनावधारयति यथेह भूतानामुत्पत्तिस्थितिस्तेन वर्त्तते इति शास्त्रं। तस्माद्वेदशास्त्रमस्य जन्तोर्वैदिककर्म्माधिकारिपुरुषस्य प्रकृष्टपुरुषार्थसाधनं जानन्ति॥ ९९ ॥

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च। सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ १०० ॥

सैनापत्यमिति। सैनापत्यं राज्यं दण्डप्रणेतृत्वं सर्व्वभूताधिपत्यं चैतत्सर्व्वं उक्तप्रयोजनं वेदात्मकशास्त्रज्ञ एवार्हति ॥ १०० ॥

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान्। तथा दहति वेदज्ञः कर्म्मजन्दोषमात्मनः ॥ १०१ ॥

यथेति। यथा वृद्धोऽग्निरार्द्रानपि द्रुमान् दहत्येवं यज्ञाते

ऽर्थतश्च वेदज्ञः प्रतिषिद्धाचरणादिकर्मजनितं पापमात्मन नाशयति। एतच्च न केवलं वेदः स्वर्गापवर्गादिहेतुः किन्तु रितनिवृत्तिहेतुरिति दर्शितं॥ १०१ ॥

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते॥ १०२ ॥

वेदशास्त्रार्थेति। यथावद्वेदतदर्थज्ञ [illegible] नाशयति च नित्यनैमित्तिककर्मानुष्ठानब्रह्मज्ञानेन ब्रह्म सर्वापायमावर्जितोऽस्मिन्नेव लोके तिष्ठन् ब्रह्मत्वाय कल्पते ॥ १०२ ॥

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः॥ १०३॥

अज्ञेभ्य इति। उभयोः प्रशस्ये सति अत्यन्तरजातिप्रय विवक्षया श्रेष्ठतेतोऽपि विद्यादादिपदद्वयता अज्ञाः। किञ्च अल्पपच्छाध्येतारः श्रेष्ठाः। तेभ्योऽधीतसमस्तधारणसमर्थाः श्रेष्ठाः तेन ग्रन्थिनः पठितविस्मृतग्रन्था वोद्धव्याः। धारिभ्यो ऽधीतग्रन्थार्थज्ञाः प्रकृष्टाः। तेभ्योऽनुष्ठातारः॥ १०३ ॥

बन्धुप्रियवियोगांश्च संवासञ्चैव दुर्ज्जनैः। द्रव्यार्ज्जनञ्च नाशञ्च मित्रामित्रस्य चार्ज्जनं॥ ७९॥

बन्धुप्रियेति। बान्धवैः सुहृद्भिः सह वियोगान् दुर्जनैश्च सह एकत्रावस्थानं धनार्ज्जनप्रायासं धनविनाशदुःखं मित्रार्ज्जनं शत्रुप्रादुर्भावं प्राप्नुवन्ति च॥ ७९॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम्। क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्ज्जयम्॥ ८०॥

जरामिति। जरां चाविद्यमानप्रतीकारां व्याधिभिश्चोपपीडनं क्षुत्पिपासादिकांश्च नानाप्रकारान् क्लेशान्मृत्युञ्च दुर्ज्जरं प्राप्नुवन्ति॥ ८०॥

यादृशेन तु भावेन यद्यत्कर्म्म निषेवते। तादृशेन शरीरेण तत्तत्फलमुपाश्नुते॥ ८१॥

यादृशेनेति। यथाविधेन सात्त्विकेन राजसेन तामसेन वा चेतसा यद्यत्कर्म्म ज्ञानदानयोगाद्यनुतिष्ठति तादृशेनैव शरीरेण सत्त्वाधिकेन रजोधिकेन तमोधिकेन वा तत्तत् ज्ञानदानादि फलमुपभुङ्क्ते॥ ८१॥

एष सर्व्वः समुद्दिष्टः कर्म्मणां वः फलोदयः ।
निःश्रेयसकरङ्कर्म्म विप्रस्येदन्निबोधत ॥ ८२ ॥

एषइति । एष युष्माकं विहितप्रतिषिद्धानां कर्म्मणां सर्व्वः फलोदय उक्त इदानीं ब्राह्मणस्य निःश्रेयसाय मोक्षाय हितं कर्म्मानुष्ठानं इदं वक्ष्यमाणं शृणुत ॥ ८२ ॥

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरम्परम् ॥ ८३ ॥

वेदाभ्यास इति । उपनिषदादेर्वेदस्य अभ्यासोऽर्थतश्च ज्ञानं तपः कृच्छ्रादि ज्ञानं ब्रह्मविषयं इन्द्रियसंयमोऽविहितहिंसावर्ज्जनं गुरुशुश्रूषेत्येतत्सर्व्वं मोक्षसाधनम् ॥ ८३ ॥

सर्व्वेषामपि चैतेषां शुभानामिह कर्म्मणाम् ।
किञ्चित् श्रेयस्करतरं कर्म्मोक्तंपूरुषम्प्रति ॥ ८४ ॥

सर्व्वेषामिति । सर्व्वेषामप्येतेषां वेदाभ्यासादीनां शुभकर्म्मणां मध्ये किञ्चित्कर्म्मातिशयेन मोक्षसाधनं स्यादिति विमर्शे ऋषीणां जिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह ॥ ८४ ॥

सर्व्वेषामपि चैतेषामात्मज्ञानम्परं स्मृतम्। तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतन्ततः॥ ८५॥

सर्व्वेषामिति। एषां वेदाभ्यासादीनां सर्व्वेषामपि मध्ये उपनिषदुक्तपरमात्मज्ञानं प्रकृष्टं स्मृतं यस्मात्सर्व्वविद्यानां प्रधानम्। अत्रैव हेतुमाह यतो मोक्षस्तस्मात्प्राप्यते॥ ८५॥

षण्णामेषान्तु सर्व्वेषां कर्म्मणां प्रेत्य चेह च। श्रेयस्करतरं ज्ञेयं सर्व्वदा कर्म्म वैदिकम्॥ ८६॥

षण्णामिति। एषां पुनः षण्णां पूर्व्वोक्तानां वेदाभ्यासादीनां कर्म्मणां मध्ये वैदिककर्म्म परमात्मज्ञानमैहिकामुष्मिकश्रेयस्करतरं ज्ञातव्यं पूर्व्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तं इह तु ऐहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यते इत्यपौनरुक्त्यं तथाहि प्रतीकोपासनानां ब्रह्मधीरूपं नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति। गोविन्दराजस्तु एषां पूर्व्वोक्तानां वेदाभ्यासादीनां षण्णां कर्म्मणां मध्यात्स्मार्त्तानां कर्म्मापेक्षया वैदिककर्म्म सर्व्वदेहलोके परलोके चातिशयेन कीर्त्ति स्वर्गादिश्रेयःसाधनं ज्ञेयमिति व्याख्यातवान्। तदयुक्तं वेदाभ्यासादीनां षण्णामपि प्रत्येकं श्रुतिविहितत्वात् तेषां मध्ये

शास्त्रार्थावेदकता किञ्चिदेवं विज्ञेय वेत्ति न तथाविधं तत्त्व सर्व निर्द्धारयितुं वशी । तस्मात्सर्वोत्कृष्ट ख्याता ॥ ८६ ॥

वैदिके कर्म्मयोगे तु सर्व्वाण्येतान्यशेषतः ।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ ॥ ८७ ॥

इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्य स्पष्टयति वैदिक इति । वैदिके पुनः कर्म्मयोगे परमात्मोपासनारूपे सर्व्वाण्येतानि पूर्व्वोक्तानि ऐहिकामुष्मिकश्रेयांसि तस्मिंस्तस्मिन् उपासनाविधौ क्रमशः अन्तर्भवन्ति । अथ वा सर्व्वाण्येतानीति वेदाभ्यासादीन्येव पराङ्मुखी परमात्मज्ञाने वेदाभ्यासादीनि तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति श्रुतिविहिताङ्गत्वेनान्तर्भवन्ति ॥ ८७ ॥

सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च ।
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकम् ॥ ८८ ॥

सुखेति । वैदिककर्म्माग्निष्टोमादि ब्रह्मोपासनादि च इह लोके स्वर्गादिसुखप्राप्तिकरं संसारप्रवृत्तिहेतुत्वात् प्रवृत्ताख्यं वैदिकं कर्म्म तथा निःश्रेयसं मोक्षस्तदर्थं कर्म्म नैःश्रेयसिकं संसारनिवृत्तिहेतुत्वात् निवृत्ताख्यमित्येवं वैदिकं कर्म्म द्विप्रकारं वेदितव्यं ॥ ८८ ॥

इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते ।
निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते ॥ ८९ ॥

एतदेव स्पष्टयति इहेति । इह काम्यसाधनं वृष्टिहेतुकारी रीयागादि परत्र स्वर्गादिफलसाधनं ज्योतिष्टोमादि यत् कामनया क्रियते तत्संसारप्रवृत्तिहेतुत्वात् प्रवृत्तमित्युच्यते इष्टादृष्टफलकामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्व्वकं संसार निवृत्तिहेतुत्वात् निवृत्तमित्युच्यते ॥ ८९ ॥

प्रवृत्तं कर्म्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९० ॥

प्रवृत्तमिति । प्रवृत्तकर्म्माभ्यासेन देवसमानगतिकं तत् फलं कर्मणा प्राप्नोति एतच्च प्रदर्शनार्थमन्यफलकेन कर्मणा प्रवृत्तेन फलान्तरमपि प्राप्नोति निवृत्तकर्म्माभ्यासेन पुनः शरीरारम्भकाणि पञ्चभूतानि अतिक्रामति मोक्षमाप्नोतीत्यर्थः॥९०॥

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥

सर्व्वेति सर्व्वभूतेषु स्थावरजङ्गमात्मकेषु चरमेवात्मरूपे णास्ति सर्व्वाणि भूतानि परमात्मपरिणामविज्ञानि मय्येव पर

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्। अश
क्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः॥ ९४॥

इदानीं वेदादेव सर्व्वं ज्ञातव्यमिति प्रदर्शयितुं वेदप्रशंसा
माह पितृदेवेति। पितृदेवमनुष्याणां हव्यकव्यान्नदानेषु वेद
एव चक्षुरिव चक्षुरनश्वरस्मात् प्रमाणत्वादखिलादृष्टफलकर्म
दानादौ प्रमाणान्तरानवकाशात्। अशक्यञ्च वेदशास्त्रं कर्त्तुं
मनुष्यैः अनेनापौरुषेयतोक्ता। अप्रमेयञ्च मीमांसादिन्यायनि
रपेक्षतया अनवगम्यमानप्रमेयमेवं व्यवस्था। ततश्च मीमांसया
व्याकरणाद्यपेक्ष कर्म्मब्रह्मात्मकं वेदार्थं जानीयादिति विव
क्षितम्॥ ९४॥

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वा
स्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ ९५॥

यावेदबाह्या इति। याः स्मृतयः वेदमूला न भवन्ति
दृष्टार्थकथानि चैत्यवन्दनात्स्वर्गो भवतीत्यादीनि यानि
चासत्तर्कमूलानि देवताऽपूर्व्वादिनिराकरणात्मकानि वेदविरु
द्धानि चार्व्वाकदर्शनानि सर्व्वाणि परलोके निष्फलानि
तमोनरकफलानि तानि मन्वादिभिः स्मृतानि॥ ९५॥

उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।
तान्यर्व्वाक्कालिकतया निष्फलान्यनृतानि च ॥९६॥

एतदेव स्पष्टयति उत्पद्यन्त इति। यान्यतो वेदादन्यमूलानि कानिचित् शास्त्राणि पौरुषेयत्वात् उत्पद्यन्ते एवमाशु विनश्यन्ति तानि च इदानीन्तनत्वान्निष्फलानि अनृतरूपाणि च मन्वादीनान्तु वेदमूलत्वादेव प्रामाण्यम्॥ ९६॥

चातुर्व्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यञ्च सर्व्वं वेदात्प्रसिध्यति ॥९७॥

चातुर्व्वर्ण्यमिति। ब्राह्मणोऽस्य मुखमासीदित्यादिवेदादेव चातुर्व्वर्ण्यं प्रसिध्यति ब्राह्मणीभूतमानाविर्जनितत्वमपि तदुपजीवि तथा स्वर्गादिलोकोऽपि वेदादेव प्रसिद्धः एवम्ब्रह्मचर्य्याद्याश्रमा अपि चत्वारो वेदमूलकत्वाद्वेदादेव प्रसिध्यन्ति किञ्च भूतं च भविष्यदितीदं वर्त्तमानमविषयत्वात् सर्व्वमग्नौ प्रास्ताहुतिः सम्यगित्यादिनैव वेदादेव प्रसिध्यति ॥ ९७॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। वेदादेव प्रसूयन्ते प्रसूतिगुणकर्म्मतः ॥ ९८ ॥

शब्द इति। च इह लोके परलोके च शब्दादयो विषयाः

उपयुज्यन्ते प्रसूयन्त एतैरिति प्रसूतयः प्रसूतयश्चैते गुणाश्चेति सत्त्वरजस्तमोरूपाः तन्निबन्धनवैदिककर्म्महेतुत्वात् वेदादेव प्रसिध्यन्ति ॥ ९८ ॥

बिभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम्।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ९९ ॥

बिभर्त्तीति। वेदशास्त्रं नित्यं सर्व्वभूतानि धारयति तथा च हविरग्नौ हूयते सोऽग्निरादित्यमुपसर्पति तत्सूर्य्यो रश्मिभिर्वर्षति तेनान्नं भवति अथेह भूतानामुत्पत्तिस्थितिश्चेति चनिर्व्वायत इति ब्राह्मणं। तस्माद्वेदशास्त्रमस्य जन्तोर्वैदिककर्म्माधिकारिपुरुषस्य प्रकृष्टपुरुषार्थसाधनं जानामि॥ ९९ ॥

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च। सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ १०० ॥

सैनापत्यमिति। सैनापत्यं राज्यं दण्डप्रणेतृत्वं सर्व्वभूम्याधिपत्यञ्चैतत्सर्व्वं उक्तप्रयोजनं वेदात्मकशास्त्रज्ञ एवार्हति ॥ १०० ॥

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान्। तथा दहति वेदज्ञः कर्म्मजन्दोषमात्मनः ॥ १०१ ॥

यथेति। यथा वृद्धोऽग्निरार्द्रानपि द्रुमान् दहत्येवं पञ्चतो

ऽर्थतत्त्ववेदज्ञः प्रतिषिद्धाचरणादिकर्मजनितं पापमात्मनः क्षपयति। एवञ्च न केवलं वेदः स्वर्गापवर्गादिहेतुः किन्तु दुरितनिवृत्तिहेतुरिति दर्शितं॥ १०१॥

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते॥ १०२॥

वेदशास्त्रार्थेति। यत्रतत्रे वेदतत्त्वार्थज्ञ आत्मज्ञानवान् वसति च नित्यनैमित्तिककर्मानुष्ठानतत्परत्वेन ब्रह्म सर्वोपायसमाहितोऽस्मिन्नेव लोके तिष्ठन् ब्रह्मत्वाय कल्पते ॥ १०२॥

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः॥ १०३॥

अज्ञेभ्य इति। उभयोः प्रशस्ते सति यथोत्तरप्राशस्त्यविवक्षया श्रेष्ठतेतोऽहीनो विधानादीपदर्शनया अज्ञाः। तेभ्यः ग्रन्थमात्राध्येतारः श्रेष्ठाः। तेभ्योऽधीतग्रन्थधारणसमर्थाः श्रेष्ठाः तेन ग्रन्थिनः पठितविस्मृतग्रन्था बोद्धव्याः। धारिभ्यो ऽधीतग्रन्थार्थज्ञाः प्रकृष्टाः। तेभ्योऽनुष्ठातारः॥ १०३॥

तपो विद्या च विप्रस्य निःश्रेयसकरम्परम्।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

तप इति। तपः स्वधर्म्मवर्त्तित्वमिति भारतदर्शनात् स्वाश्रमविहितं कर्म्म आत्मज्ञानञ्च ब्राह्मणस्य मोक्षसाधनन्तत्र तपसोऽवान्तरव्यापारमाह तपसा पापमपहन्ति ब्रह्मज्ञानेन मोक्षमाप्नोति। तथा च श्रुतिः। विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्यया मृतमश्नुते। विद्यातोऽन्यदविद्या कर्म्म मृत्युर्दुःखसाधनत्वान्मृत्युः पापं। श्रुत्यर्थ एवायं मनुना व्याख्यातः ॥ १०४ ॥

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम्।
त्रयं सुविदितङ्कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ १०५ ॥

प्रत्यक्षमिति। धर्म्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षमनुमानञ्च धर्म्मसाधनभूतद्रव्यगुणजातितत्त्वज्ञानाय शास्त्रञ्च वेदमूलं स्मृत्यादिरूपनानाप्रकारं धर्म्मस्वरूपविज्ञानाय सुविदितं कर्त्तव्यं तदेव च प्रमाणत्रयं मनोरभिमतं उपमानार्थापत्त्यादेरत्रानुमानान्तर्भावः ॥ १०५ ॥

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राऽविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥ १०६ ॥

आर्षमिति। ऋषिजुष्टत्वात् आर्षं वेदं धर्म्मोपदेशञ्च

तन्मूलस्मृत्यादिकं च वेदाविरोधिना मीमांसादिन्यायेन विचारयति स धर्मं जानाति न तु मीमांसानभिज्ञः; धर्मे करणं वेदो मीमांसा चेतिकर्तव्यतास्थानीया। तदुक्तं भट्टवार्त्तिककृता। धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥१०६॥

नैःश्रेयसमिदं कर्म यथोदितमशेषतः। मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते॥१०७॥

नैःश्रेयसमिति। एतन्निःश्रेयससाधनं कर्म निःशेषेण यथावदुदितम्। अत ऊर्ध्वमस्य मानवशास्त्रस्य रहस्यं गोपनीयमिदं वक्ष्यमाणं शृणुत॥१०७॥

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥१०८॥

अनाम्नातेष्विति। अस्य मानवशास्त्रस्य धर्माभिधानतया अशक्यानया सामान्येन सकलधर्मोपदेशकत्वं शोधयति। सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्तव्यं स्यादिति यदि संशयो भवेत्तदा यं धर्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्मः स्यात्॥१०८॥

धर्म्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥१०९॥

धर्म्मेणेति। ब्रह्मचर्य्याद्युक्तधर्म्मेण वेदाङ्गमीमांसाधर्म्मशास्त्रपुराणाद्युपबृंहितो वेदोऽधिगतः ते ब्राह्मणाः श्रुतेः प्रत्यक्षीकरणे हेतवो ये श्रुतिम्पठित्वा तदर्थमुपदिशन्ति ते शिष्टा विज्ञेयाः ॥१०९॥

दशावरा वा परिषद्यं धर्म्मं परिकल्पयेत्। त्र्यवरा वापि वृत्तस्था तं धर्म्मं न विचालयेत् ॥११०॥

दशेति। यदि बहवः सन्निहिता न भवन्ति तदा दशावरास्त्र्यवरा वेति वक्ष्यमाणलक्षणा यस्याः सा परिषत् तदभावे त्रयोऽवरा यस्याः सा वा सदाचारा यं धर्म्मं निश्चिनुयात् तं धर्म्मत्वेन स्वीकुर्य्यात् न विसंवदेत् ॥११०॥

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः। त्रयश्चाश्रमिणः पूर्व्वे परिषत्स्याद्दशावरा ॥१११॥

त्रैविद्य इति। वेदत्रयसम्बन्धिशाखात्रयाध्येता श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञो मीमांसात्मकतर्कवित् निरुक्तज्ञो मानवादिधर्म्मशास्त्रवेदी ब्रह्मचारिगृहस्थवानप्रस्था इत्येषा दशावरा परिषत्स्यात् ॥१११॥

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च। त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥११२॥

ऋग्वेदविदिति। ऋग्यजुःसामवेदत्रयाणां येऽध्येतारः तदर्थज्ञाश्च यः सा धर्मसन्देहनिरासार्थं त्र्यवरा परिषद्ज्ञेया ॥११२॥

एकोपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः। स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥११३॥

तदभावे एकोपीति। एकोपि वेदार्थधर्मज्ञो यं धर्मं निश्चिनु याद् प्रकृष्टो धर्मः स बोद्धव्यो न वेदानभिज्ञानां दशभिः सहस्रै रयुतैः वेदविच्छब्दोऽयं वेदार्थधर्मज्ञपरः इतश्च उपकरणं स्मृतिपुराणमीमांसान्यायशास्त्राणि गुरुपरम्परोपदेशश्चेति बोध्यः। तथा केवलं प्राक्तनाभिज्ञ स कर्तव्ये विनिर्णयः। स्मृतिरीत्यविचारे तु धर्महानिः प्रजायते। तेन बहुस्मृतिज्ञोपि यदि यथावद् प्रायश्चित्तादिधर्मं नाजानाति तदा तैर्नापेक्ष्य धर्म तत्र प्रकृष्टो धर्मो ज्ञेयः। स्त एव पक्षः। इक्षे द्वे वा मयो मयी षड्पुरुषपाठकाः। स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥११३॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥११४॥

अव्रतानामिति। सावित्र्यादिब्रह्मचारिव्रतरहितानां अम

वेदाध्ययनरहितानामव्रतानां जातिमात्रधारिणां बहूनामपि सहस्राणां मिलितानाम्परिषत्त्वं नास्ति। धर्म्मनिर्णयसामर्थ्या भावात् ॥ ११४ ॥

यं वदन्ति तमोभूता मूर्खा धर्म्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥

यं वदन्तीति। तमोगुणबहुला मूर्खाः धर्म्मप्रमाणवेदार्था नभिज्ञा अत एव प्रश्नविषयधर्म्माविदः प्रायश्चित्तादिधर्म्मं यमुद्दिश्यत्युपदिशन्ति तदीयम्पापं शतगुणम्भूत्वा वाचकाञ्जन् भजते ॥ ११५ ॥

एतद्वोऽभिहितं सर्व्वं निःश्रेयसकरम्परम्। अस्मा दप्रच्युतो विप्रः प्राप्नोति परमाङ्गतिम् ॥ ११६ ॥

एतद्व इति। एतन्निःश्रेयससाधकमष्टं धर्म्मादिकं सर्व्वं युष्माकमभिहितं एतदनुतिष्ठन् ब्राह्मणादिः परमाङ्गतिं स्वर्गापवर्गरूपां प्राप्नोति ॥ ११६ ॥

एवं स भगवान् देवो लोकानां हितकाम्यया।
धर्म्मस्य परमं गुह्यं ममेदं सर्व्वमुक्तवान् ॥ ११७ ॥

एवमिति। स भगवान् ऐश्वर्य्यादिसंयुक्तो द्योतनाद्देवो मनु

एवंप्रकारेण इदं सर्वं धर्मस्य परमार्थं मम मनुर्मुनिभ्यो लोकानां लोकहितेच्छया ममोक्तवानिति भृगुर्महर्षीनाह ॥११७॥

सर्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः। सर्वं ह्यात्मनि सम्पश्यन्नाधर्मे कुरुते मनः ॥११८॥

एवमुपसंहृत्य महर्षीणां हिताय सम्यगपि आत्मज्ञानं प्रकृष्टमोक्षोपकारकतया पृथक् कथयति सर्वमिति। सच्चासच्च भावाभावरूपं एतत् सर्वं समाहितो ध्यानेन ब्रह्मस्वरूपमात्मन्यवस्थितं तदात्मकमनन्यमना ध्यानप्रकर्षेण साक्षात्कुर्यात्। यस्मात्सर्वमात्मत्वेन पश्यन् रागद्वेषाभावात् अधर्मे मनो न कुरुते ॥११८॥

आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्। आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥११९॥

एतदेव स्पष्टयति आत्मैवेति। इन्द्राद्याः सर्वदेवताः परमात्मैव सर्वात्मकत्वात्परमात्मनः सर्वं जगदात्मन्येवावस्थितं परमात्मपरिणामत्वात्। हिरवधारणार्थे। परमात्मैवैषां क्षेत्रज्ञादीनां कर्मसम्बन्धं जनयति। तथा च श्रुतिः। एष ह्येव साधु कर्म कारयति यमूर्ध्वं निनीषति। एष एवासाधु कर्म कारयति यमधो निनीषतीति ॥११९॥

वेदाध्ययनरहितानामनुत्पन्नात्मज्ञानानामपि सहस्राणां मिलितानामपि परिषत्त्वं नास्ति। धर्मविधिज्ञत्वाभावात्॥११४॥

यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति॥११५॥

यं वदन्तीति। तमोगुणबहुला मूर्खाः धर्मप्रमाणवेदार्थानभिज्ञा अत एव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मं यम्पुरुषम्प्रत्युपदिशन्ति तदीयम्पापं शतगुणम्भूत्वा वाचकान्वक्तॄन् भजते॥११५॥

एतद्वोऽभिहितं सर्व्वं निःश्रेयसकरम्परम्। अस्मा
दप्रच्युतो विप्रः प्राप्नोति परमाङ्गतिम्॥११६॥

एतद्व इति। एतन्निःश्रेयससाधकमशेषं धर्मादिकं सर्वं युष्माकमभिहितं एतदनुतिष्ठन् ब्राह्मणादिः परमाङ्गतिं स्वर्गापवर्गरूपां प्राप्नोति॥११६॥

एवं स भगवान् देवो लोकानां हितकाम्यया।
धर्मस्य परमं गुह्यं ममेदं सर्व्वमुक्तवान्॥११७॥

एवमिति। स भगवान् ऐश्वर्य्यादिसंयुक्तो द्योतनाद्देवो मनु

इत्थमसावेव इदं सर्वं धर्मं परमार्थं महर्षिभ्यो लोकानां हितेच्छया मह्यमुक्तवानिति भृगुर्महर्षीनाह ॥११७॥

सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः। सर्वं ह्यात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥११८॥

एवमुपसंहृत्य महर्षीणां हिताय सकलमपि शास्त्रार्थं आत्मज्ञानं प्रकृष्टमोक्षोपकारकतया पृथक् कथयति सर्वमिति। सद्भाव जातमसद्भाव एतत् सर्वं मात्मनो आनन्द ब्रह्मस्वरूपमात्मन्युपस्थितं तदात्मकमनन्यमना ध्यानप्रकर्षेण साक्षात्कुर्यात्। यस्मात्सर्वमात्मत्वेन पश्यन् रागद्वेषाभावात् अधर्मे मनो न कुरुते ॥११८॥

आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्। आत्मा हि जनयत्येषां कर्मयोगं शरीरिणां ॥११९॥

एतदेव स्पष्टयति आत्मैवेति। इन्द्राद्याः सर्वदेवताः परमात्मैव सर्वात्मकत्वात्परमात्मनः सर्वं जगदात्मन्येवावस्थितं परमात्मपरिणामत्वात्। हिरवधारणार्थे। परमात्मैवैषां क्षेत्रज्ञादीनां कर्मसम्बन्धं जनयति। तथा च श्रुतिः। एष ह्येव साधु कर्म कारयति यमूर्ध्वं निनीषति। एष एवासाधु कर्म कारयति यमधो निनीषतीति ॥११९॥

खं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम्। पक्ति
दृष्ट्योः परन्तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु॥ १२०॥
मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुम्बले हरम्।
वाच्यग्निम्मित्रमुत्सर्गे प्रजने च प्रजापतिम्॥ १२१॥

इदानीं वक्ष्यमाणब्रह्मध्यानविशेषोपयोगितया दैहिक
काशादिषु बाह्याकाशादीनां लयमाह खमिति। मनसीति।
बाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषु लीनमेकत्वेन धार
येत्। तथा चेष्टास्पर्शकारणभूतदैहिकवायौ बाह्यवायुं जठरं
चाक्षुषतेजसी बाह्ययोरग्निसूर्ययोः प्रकृष्टं तेजः दैहिकास्वप्सु
बाह्या अपः शरीरपार्थिवभागेषु बाह्यां पृथिवीं मनसि चन्द्रं
श्रोत्रे दिशः पादेन्द्रिये विष्णुं बले हरं वागिन्द्रिये वह्निं पायि
न्द्रिये मित्रमुपस्थेन्द्रिये प्रजापतिं लीनमेकत्वेन भावयेत् एव
माध्यात्मिकभूतादिषु बाह्यभूतादिकं लीनमेकत्वेन भावयित्वा
योगमभ्यासादीनां दैहिकादिनियमो यच्च कर्मवाक्यस्य प्रति
नियतं तत्सर्व्वम्परमात्माधीनं तथा च तस्य चक्षुरस्य प्रकाशये
गोस्पर्शयति। तथा भयादस्याग्निस्तपति भयात्तपति सूर्य्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति॥ १२०॥ १२१॥

प्रशासितारं सर्व्वेषामणीयांसमणोरपि। रुक्माभं
स्वप्नधीगम्यं विद्यात्तम्पुरुषम्परम्॥ १२२॥

प्रशासितारमिति। प्रशासितारं नियन्तारं ब्रह्मादिस्तम्ब

पर्य्यन्तस्य चेतनाचेतनस्य जगतो जीवसम्बादीनामीश्वरादिनि
यमो यथादित्यादीनां भ्रमणादिनियमो यथ कर्म्मणां फलं प्रति
नियतमेतत्सर्व्वं परमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासने
गार्गीत्याद्युपनिषदः। तथा भयादस्याग्निस्तपति भयात्तपति
सूर्य्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति। तथा अणो
रणीयांसं सर्व्वात्मनात्तथा च श्रुतिः। बालाग्रशतभागस्य शत
धाकल्पितस्य च। भागो जीवेति विज्ञेयः स चानन्त्याय कल्पते
रुक्माभं यथायथमक्षमरूपमसुपमित्याद्युपनिषदा रूप
परमात्मनो निर्दिष्टम्। तथाप्युपासनाविशेषे रुक्मसवर्णा
भम्। अत एव च य एषोऽन्तरादित्ये हिरण्मय इत्यादिच्छान्दो
ग्योपनिषत्। स्वप्नधीगम्यं इहाम्नायं स्वप्नधीवदध्यानगम्यं
यथा स्वप्नधीः चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यते
एवमात्मधीरपि। अत एव आह। नैवायं चक्षुषा ग्राह्यो
नच शिष्टैरपीन्द्रियैः। मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः।
एवं विधं परमात्मानमनुचिन्तयेत्॥१२२॥

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्र
मेके परे प्राणमपरे ब्रह्म शाश्वतम्॥१२३॥

एतमिति। एतञ्च परमात्मानं अग्निरूपेण एके याज्ञिका
उपासते तमेवमग्निमित्यर्थैव उपासते। अन्ये पुनः मनुं

मन्वाख्यप्रजापतिरूपतया उपास्यते। एके पुनरैश्वर्य्ययोगादि न्द्ररूपतया उपास्यते अपरे पुनः प्राणत्वेनोपास्यते सर्व्वाणिह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इत्यादिश्रुतिदर्शनात्। अपरे पुनरपगतप्रपञ्चात्मकं सच्चिदा नन्दस्वरूपम्परमात्मानमुपास्यते मूर्त्तामूर्त्तस्वरूपे च ब्रह्मणि सर्व्वा एवोपासना श्रुतिप्रसिद्धा भवन्ति॥१२३॥

एष सर्व्वाणि भूतानि पञ्चभिर्व्याप्य मूर्त्तिभिः।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्॥१२४॥

एष इति। एष आत्मा सर्व्वान् प्राणिनः पञ्चभिः पृथिव्या दिभिर्महाभूतैः शरीरारम्भकैः परिगृह्य पूर्व्वजन्मार्जितकर्म्मा पेक्षया उत्पत्तिस्थितिविनाशैरघादिचक्रवत् अजस्रमुपावर्त्त मानैः आमोक्षात्संसारिणः करोति॥१२४॥

एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना।
स सर्व्वसमतामेत्य ब्रह्माभ्येति परम्पदम्॥१२५॥

इदानीं मोक्षहेतुत्वेनोक्तसर्व्वधर्म्मश्रेष्ठतया सर्व्वत्र परमात्म दर्शनमनुष्ठेयत्वेनोपसंहरति एवं यः सर्व्वभूतेष्विति। एवं सर्व्व भूतेषु चात्मानमित्याद्युक्तप्रकारेण यः सर्व्वेषु भूतेषु अवस्थित मात्मानमात्मना पश्यति स ब्रह्मसाक्षात्कारात्परं श्रेष्ठम्परं स्थानं ब्रह्म प्राप्नोति तत्रात्यन्तं लीयते मुक्तो भवतीत्यर्थः॥१२५॥

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तम्पठन् द्विजः ।
भवत्याचारवान्नित्यं यथेष्टाम्प्राप्नुयाद्गतिम् ॥ १२६ ॥

इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ॥ समाप्तैषा मनुसंहिता ॥

इत्येतदिति । समाप्त्यर्थ इति शब्दः । एतन् मुनिशास्त्रं भृगुणा प्रकर्षेणोक्तं द्विजातिः पठन् विहितानुष्ठाननिषिद्धवर्ज नाचारवान् भवति यथाऽपेक्षिताञ्च स्वर्गापवर्गादिरूपां गतिं प्राप्नुयादिति ॥ १२६ ॥

सारासारवचःप्रपञ्चनविधौ मेधातिथेश्चातुरी स्तोकं वस्तुनिगूढमल्पवचनाद्गोविन्दराजो जगौ । ग्रन्थेऽस्मिन्धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता स्पष्टं मानवमर्थतत्त्वमखिलं वक्तुं कृतोऽयं श्रमः ॥ १ ॥ प्राचीमुनिभिर्निहतदुर्व्याख्यैषा मनुस्मृतेरर्थम् । इयमिर्यन्मवरवैः सम्प्रतनुते सूनृता वृत्तिः ॥ २ ॥ सेयं मया मानवधर्म्मशास्त्रे कृतापि वृत्तिर्विदुषां हिताय । दुर्बोधपातैर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ॥ ३ ॥ इति वारेन्द्रनन्दनावासीयभट्टदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः ॥ इतिश्रीकुल्लूकभट्टविरचिता मन्वर्थमुक्तावली समाप्ता ॥

---

# ॥ अथमनुसंहितायाः सूचीपत्रं ॥


| प्रकरणं | अध्यायः | श्लोकः |
| --- | --- | --- |
| मनुं मुनयो धर्मंपप्रच्छुः | १ | १ |
| तान्मनुरुवाच | १ | ४ |
| जगदुत्पत्तिकथनम् | १ | ५ |
| प्रथमजलसृष्टिः | १ | ८ |
| ब्रह्मोत्पत्तिः | १ | ९ |
| नारायणशब्दार्थकथनम् | १ | १० |
| ब्रह्मस्वरूपकथनम् | १ | ११ |
| स्वर्गभूम्यादिसृष्टिः | १ | १३ |
| महदादिक्रमेण जगदुत्पत्तिः | १ | १४ |
| देवगणादिसृष्टिः | १ | २२ |
| वेदत्रयसृष्टिः | १ | २३ |
| कालादिसृष्टिः | १ | २४ |
| कामक्रोधादिसृष्टिः | १ | २५ |
| धर्माधर्मविवेकः | १ | २६ |
| सूक्ष्मात् स्थूलाद्युत्पत्तिः | १ | २७ |
| कर्मसापेक्षसृष्टिः | १ | २८ |
| ब्राह्मणादिसृष्टिः | १ | ३१ |
| स्त्रीपुरुषसृष्टिः | १ | ३२ |
| मनोरुत्पत्तिः | १ | ३३ |
| मरीच्याद्युत्पत्तिः | १ | ३४ |
| यक्षगन्धर्वाद्युत्पत्तिः | १ | ३७ |
| मेघादिसृष्टिः | १ | ३८ |
| पशुपक्ष्यादिसृष्टिः | १ | ३९ |
| कृमिकीटाद्युत्पत्तिः | १ | ४० |
| अथ जरायुजाः | १ | ४३ |
| अथाण्डजाः | १ | ४४ |
| अथ स्वेदजाः | १ | ४५ |
| अथोद्भिज्जाः | १ | ४६ |
| वनस्पतिवृक्षौ | १ | ४७ |
| गुच्छगुल्मादयः | १ | ४८ |
| एवं सृष्ट्वा ब्रह्मान्तर्हितः | १ | ५१ |
| महाप्रलयमाह | १ | ५४ |
| जीवोत्क्रमणमाह | १ | ५५ |
| कदा देहान्तरं गृह्णातीत्याह | १ | ५६ |
| जाग्रत्स्वप्नाभ्यां ब्रह्मा सर्वं सृजति | १ | ५७ |

| प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|
| एतच्छास्त्रप्रचारमाह | १ | ५८ |
| भृगुरेतच्छास्त्रं युष्माकं कथयिष्यति | १ | ५९ |
| भृगुस्तान्मुनीनुवाच | १ | ६० |
| मन्वन्तरकथनम् | १ | ६१ |
| अहोरात्रमानादिकथनम् | १ | ६४ |
| पित्र्याहोरात्रकथनम् | १ | ६६ |
| दैवाहोरात्रकथनम् | १ | ६७ |
| चतुर्युगप्रमाणम् | १ | ६९ |
| दैवयुगप्रमाणम् | १ | ७१ |
| ब्राह्माहोरात्रप्रमाणम् | १ | ७२ |
| स प्रतिबुद्धः सृष्ट्यर्थं मनो नियुङ्क्ते | १ | ७४ |
| मनस आकाश प्रादुर्भावः | १ | ७५ |
| आकाशाद्वायु प्रादुर्भावः | १ | ७६ |
| वायोस्तेजःप्रादुर्भावः | १ | ७७ |
| तेजसो जलं जलात्पृथ्वी | १ | ७८ |
| मन्वन्तरप्रमाणम् | १ | ७९ |
| सत्ये चतुःपाद्धर्मः | १ | ८१ |
| अन्ययुगे धर्मस्यपाद पादहानिः | १ | ८२ |
| युगेयुगे आयुःप्रमाणम् | १ | ८३ |
| युगे युगे धर्मवैलक्षण्यम् | १ | ८५ |
| ब्राह्मणस्य कर्माह | १ | ८८ |
| क्षत्रियकर्माह | १ | ८९ |
| वैश्यकर्माह | १ | ९० |
| शूद्रकर्माह | १ | ९१ |
| ब्राह्मणस्य श्रेष्ठत्वम् | १ | ९३ |
| ब्राह्मणेषु ब्रह्मवेदिनः श्रेष्ठाः | १ | ९७ |
| एतच्छास्त्रमब्राह्मणे नाध्येतव्यं | १ | १०३ |
| एतच्छास्त्राध्ययनफलं | १ | १०४ |
| आचारो धर्मप्रधानः | १ | १०८ |
| ग्रन्थार्थानुक्रमणिका | १ | १११ |


॥ इति प्रथमोऽध्यायः ॥

---


| प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|
| धर्मसामान्यलक्षणं | २ | १ |
| कामात्मतानिषेधः | २ | २ |
| व्रतादयःसंकल्पजाः | २ | ३ |
| अकामस्य न कापि क्रिया | २ | ४ |
| धर्मप्रमाणान्याह | २ | ६ |
| धर्मस्य वेदमूलतामाह | २ | ७ |
| श्रुतिस्मृत्युदितधर्मोऽनुष्ठेयः | २ | ९ |

| प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|
| श्रुतिस्मृत्योःपरिचयः | २ | १० |
| नास्तिकनिन्दा | २ | ११ |
| चतुर्द्धाधर्मप्रमाणमाह | २ | १२ |
| श्रुतिस्मृत्योर्विरोधे श्रुतिर्बलवती | २ | १३ |
| श्रुतिद्वैधे उभयं प्रमाणं | २ | १४ |
| श्रुतिद्वैधे दृष्टान्तमाह | २ | १५ |
| दशकर्मोपेतस्याधिकारः | २ | १६ |
| धर्मानुष्ठानयोग्य देशमाह | २ | १७ |
| ब्रह्मावर्त्तदेशीयः सदाचारः | २ | १८ |
| कुरुक्षेत्रादिब्रह्मर्षिदेशमाह | २ | १९ |
| तद्देशीयब्राह्मणादाचारं शिक्षेत् | २ | २० |
| मध्यदेशमाह | २ | २१ |
| आर्य्यावर्त्तमाह | २ | २२ |
| यज्ञियदेशमाह | २ | २३ |
| वर्णधर्मादिकमाह | २ | २५ |
| द्विजानां वैदिकमन्त्रैर्गर्भाधानादिकं कार्य्यम् | २ | २६ |
| गर्भाधानादेः पापक्षयहेतुत्वमाह | २ | २७ |
| स्वाध्यायादेर्मोक्षहेतुत्वमाह | २ | २८ |
| जातकर्माह | २ | २९ |
| नामकरणमाह | २ | ३० |
| स्त्रीणां नामकरणमाह | २ | ३३ |
| निःक्रमणान्नप्राशने | २ | ३४ |
| अथ चूडाकरणं | २ | ३५ |
| अथोपनयनम् | २ | ३६ |
| काम्योपनयनकालः | २ | ३७ |
| अथोपनयनकालावधिः | २ | ३८ |
| अथ व्रात्याः | २ | ३९ |
| कृष्णाजिनादिधारणं | २ | ४१ |
| मौञ्ज्यादिधारणं | २ | ४२ |
| मुञ्जालाभे कुशादिमेखला कार्य्या | २ | ४३ |
| उपवीतमाह | २ | ४४ |
| अथ दण्डाः | २ | ४५ |
| अथ भिक्षा | २ | ४९ |
| प्राङ्मुखादिकान्नभोजनफलं | २ | ५२ |
| भोजनादावुपस्पर्शनम् | २ | ५३ |

| प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|
| श्रद्धया अन्नं भुञ्जीत | २ | ५४ |
| अश्रद्धया भोजनं निषिद्धं | २ | ५५ |
| भोजने नियमाः | २ | ५६ |
| अतिभोजननिषेधः | २ | ५७ |
| ब्राह्मादितीर्थेनाचमनं न पितृतीर्थेन | २ | ५८ |
| ब्राह्मादितीर्थान्याह | २ | ५९ |
| आचमनविधिः | २ | ६० |
| सव्यापसव्यमाह | २ | ६३ |
| विनष्टे पूर्वदण्डादौ द्वितीयं ग्राह्यं | २ | ६४ |
| केशान्ताख्यसंस्कारः | २ | ६५ |
| स्त्रीणां संस्कारममन्त्रकं | २ | ६६ |
| स्त्रीणां वैवाहिकविधिर्वैदिकमन्त्रैः | २ | ६७ |
| उपनीतस्य कर्माह | २ | ६९ |
| वेदाध्ययनविधिमाह | २ | ७० |
| गुरुवन्दनविधिः | २ | ७२ |
| गुरोराज्ञयाऽध्ययनविरामो | २ | ७३ |
| अध्ययनाद्यन्तेच प्रणवः | २ | ७४ |
| अथ प्राणायामः | २ | ७५ |
| प्रणवाद्युत्पत्तिः | २ | ७६ |
| सावित्र्युत्पत्तिः | २ | ७७ |
| सावित्रीजपफलं | २ | ७८ |
| सन्ध्ययोः सावित्रीजपफलं | २ | ७९ |
| तदकरणे पापं | २ | ८० |
| प्रणवव्याहृतिसावित्री प्रशंसा | २ | ८१ |
| प्रणवप्रशंसा | २ | ८४ |
| मानसजपस्याधिक्यं | २ | ८५ |
| इन्द्रियसंयमः | २ | ८८ |
| अथैकादशेन्द्रियाणि | २ | ८९ |
| इन्द्रियसंयमेन सिद्धिर्नतु भोगैः | २ | ९३ |
| विषयोपेक्षकः श्रेष्ठः | २ | ९४ |
| इन्द्रियसंयमोपायमाह | २ | ९६ |
| कामासक्तस्य यागादयो न फलदाः | २ | ९७ |
| जितेन्द्रियस्वरूपमाह | २ | ९८ |
| एकेन्द्रियासंयमोऽपि निवार्यः | २ | ९९ |
| इन्द्रियसंयमस्य पुरुषार्थहेतुत्वं | २ | १०० |
| अथ सन्ध्याजपवन्दनम् | २ | १०१ |
| सन्ध्याहीनः शूद्रवत् | २ | १०२ |

| प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|
| वेदपाठाशक्तौ सावित्री मात्रजपः | २ | १०४ |
| नित्यकर्मादौ नानध्यायः | २ | १०५ |
| जपयज्ञफलं | २ | १०७ |
| समावर्तनान्तं होमादि कर्तव्यं | २ | १०८ |
| कीदृशः शिष्योऽध्याप्य इत्याह | २ | १०९ |
| अपृष्टो वेदं न ब्रूयात् | २ | ११० |
| निषेधातिक्रमे दोषः | २ | १११ |
| अपच्छिद्याय विद्या न वप्तव्या | २ | ११२ |
| शिष्याय वक्तव्या | २ | ११५ |
| अनुज्ञां विना वेदग्रहण निषेधः | २ | ११६ |
| अध्यापकानां मान्यत्वमाह | २ | ११७ |
| अविहिताचरणनिन्दा | २ | ११८ |
| गुरोरभिवादनादौ | २ | ११९ |
| वृद्धाभिवादने | २ | १२० |
| अभिवादनफलं | २ | १२१ |
| अभिवादनविधिः | २ | १२२ |
| प्रत्यभिवादने | २ | १२५ |
| प्रत्यभिवादनाज्ञाने दोषः | २ | १२६ |
| कुशलप्रश्नादौ | २ | १२७ |
| दीक्षितादेर्नामग्रहण निषेधः | २ | १२८ |
| परस्त्र्यादेर्नामग्रहण निषेधः | २ | १२९ |
| कनिष्ठमातुलादिवन्दन निषेधः | २ | १३० |
| मातृष्वस्रादयो गुरुपत्नीवत्पूज्याः | २ | १३१ |
| भ्रातृभार्याद्यभिवादने | २ | १३२ |
| ज्ञातिभगिन्याद्यभिवादने | २ | १३३ |
| पौरसख्यादौ | २ | १३४ |
| दशवर्षोऽपि ब्राह्मणः क्षत्रियादिभिः पितेव मान्यः | २ | १३५ |
| वित्तादीनि मान्यत्व कारणानि | २ | १३६ |
| रथारूढादेः पन्था देयः | २ | १३८ |
| स्नातकस्य पन्था राज्ञापि देयः | २ | १३९ |
| आचार्यः | २ | १४० |
| उपाध्यायः | २ | १४१ |

खं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम्। पक्ति-
दृष्ट्योः परन्तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु ॥ १२० ॥

मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुम्बले हरम्।
वाच्यग्निम्मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥ १२१ ॥

इदानीं वक्ष्यमाणब्रह्मध्यानविशेषोपयोगितया दैहिका-
काशादिषु बाह्याकाशादीनां लयमाह खमिति। मनसीति।
बाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषु लीनमेकत्वेन धार-
येत्। तथा चेष्टास्पर्शकारणभूतदैहिकवायौ बाह्यवायुं उदर्य्यं
चाक्षुषतेजसो बाह्ययोरग्निसूर्य्ययोः प्रकृष्टं तेजः दैहिकास्वप्सु
बाह्या अपः शरीरपार्थिवभागेषु बाह्यां पृथिवीं मनसि चन्द्रं
श्रोत्रे दिशः पादेन्द्रिये विष्णुं बले हरं वागिन्द्रिये वह्निं पाय्वि-
न्द्रिये मित्रमुपस्थेन्द्रिये प्रजापतिं लीनमेकत्वेन भावयेत् एव-
माध्यात्मिकभूतादिषु बाह्यभूतादिकं लीनमेकत्वेन भावयित्वा
योऽयमस्मादीनां दैहिकादिनियमो यच्च कर्म्मास्मदं प्रति
नियतं तत्सर्व्वम्परमात्माधीनं तथा च तस्य चतुरस्रप्रशासने
गीस्तर्पयति। तथा भयादस्याग्निस्तपति भयात्तपति सूर्य्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति ॥ १२० ॥ १२१ ॥

प्रशासितारं सर्व्वेषामणीयांसमणोरपि। रुक्माभं
स्वप्नधीगम्यं विद्यात्तम्पुरुषम्परम् ॥ १२२ ॥

प्रशासितारमिति। प्रशासितारं नियन्तारं ब्रह्मादिस्तम्ब

पर्य्यन्तस्य चेतनाचेतनस्य जगतो योऽयमस्मादीनामीश्वरादिनि यमो यथादित्यादीनां भ्रमणादिनियमो यच्च कर्म्मणां फलं प्रति नियममेतत्सर्वं परमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासने गार्गीत्याद्युपनिषदः। तथा भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति। तथा अणो रणीयांसं सर्वात्मनात्तथा च श्रुतिः। बालाग्रशतभागस्य शत धा कल्पितस्य च। भागो जीवेति विज्ञेयः स चानन्त्याय कल्पते रुक्माभं यद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनिषदा रूप परमात्मनो निषिद्धम् तथाप्युपासनाविशेषे शुद्धसुवर्णा भम्। अत एव य एषोऽन्तरादित्ये हिरण्मय इत्यादिछान्दो ग्योपनिषत् स्वप्नधीगम्यं दृष्टान्तोऽयं स्वप्नधीवद्ध्यानगम्यं यथा स्वप्नधीः चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यते एवमात्मधीरपि। अत एव व्यासः। नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः। मनसा तु प्रयत्नेन गृह्यते सूक्ष्मदर्शिभिः। एवं विधं परमात्मानमनुचिन्तयेत्॥ १२२॥

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्र मेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ १२३॥

एतमिति। एतञ्च परमात्मानं अग्नित्वेन एके याज्ञिका उपासते तमेवमग्निमित्यध्वर्य्यव उपासते। अन्ये पुनः मनुं

